Rs. 7/=

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे ग्रन्थाङ्कः १२१



श्रीमच्चरमश्रुतकेवलि-श्रीमद्भद्रबाहुस्वामिमिश्रैर्विरचिता श्रीमत्तपागच्छीयाचार्य-श्रीज्ञानसागरसूरिवरेण्यविहितावचूरिसमलंकृता

# श्रीमती ओघनिर्युक्तिः।

संपादकः- पूज्यपादागमोद्धारकाणां श्रीवर्धमानजैनागममन्दिरप्रस्थापकानां आचार्यदेवेश-श्रीमदानन्दसागरसूरीश्वराणां लघुशिष्यः सूर्योदयसागरः।

प्रकाशिका:—श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धारफण्डाख्या संस्था-सूरत ।

वीर संवत् : २५००    वि. संवत् : २०३०    क्राइस्ट : १९७४    पण्यम् : रूप्यकसप्तकम्

इदं पुस्तकं श्रेष्ठि-देवचन्द्र-लालभाई-जैन-पुस्तकोद्धारसंस्थायाः कार्यवाहकेन मतीचन्द मगनभाई चोकसी इत्यनेन राजनगरे जसवंत मुद्रणालये मुद्रापितम् ।







Printed by Jasvant Printing Press, Ahmedabad. and Published by the Hon. Managing Trustee, Motichand Maganbhai Chokshi, For Sheth Devchand Lalbhai Jain Pustakoddhar Fund, at Sheth Devchand Lalbhai Boarding House, for Shree Ratna Sagar Jain Boarding, Badekhan Chakla, Gopipura, Surat.

Sheth Devchand Lalbhai Jain Pustakoddhar Fund, Serics No. 121.

# SHREEMATEE UGHANIRYUKTI

Commentray (Avachuri) by

Pujya Gyansagar Suri



Vikram Samvat 2030

Christain 1974

PRICE Rs. 7-00

## ॥ श्री-ओघनिर्युक्त्यवचूरेरुपक्रमः ॥

॥ श्रीवर्धमानस्वामिने नमः ॥

अयि भोः! श्रीमज्जिनशासनसमाराधनसुदक्षसमायुक्तकरणपटिष्ठना—फलेग्रहित्वाऽधिगतिमत्ताविभ्राजिताः! सुहृद्यसकलजावज्जीवातुयतनाप्रधानसुसंयमपरिपालनानिबद्धलक्षाः! विशदाऽतिरुचिर—सदनुबन्धि—प्रकर्षशालि-विशिष्ट-क्षयोपशमसहकृतभावदयासिन्धुममजिनवरेन्द्रोपदिष्टाऽऽगमतत्त्वपर्यालोचनविमलतममानसाः! मुमुक्षुता—विनीतता—समु-पसम्पन्नताऽऽदि—नैकगुणगणराजिताः! सुभगतरसौभाग्याऽश्चिताः! श्रीमन्तः सुमाधुर्यपरिपूतविद्वत्तासनाथाः! आगमिका-ऽतिगहनपदार्थव्यालोडनक्षमधीषणानिकराऽधरीकृतसुरगुरवः! श्रमणसङ्घाऽग्रगण्याः! महानुभावाः!

सादरं सप्रश्रयं विनम्र—वन्दनापुरो निवेद्यते यत्-श्रीमद्भिः करुणावरुणालयैः सूक्ष्माऽतिसूक्ष्मनिगोद-स्थजीवानामपि कल्याणकपञ्चकेषु साताप्रदैः निरतिशयकरुणाप्राग्भारबलेन विशिष्टतपस्संयमबलेन निश्शेषप्रायःकृतोऽ-पि संसारः भवत्रयमितो यैः तीर्थंकरनामाऽर्जनद्वारा स्वीकृत इत्युपेयमाणविशिष्टमहत्त्वपरमर्मस्पर्शि—गभीरतरविचा-रणायां आमितप्रबलसुर-नरैः तीर्थकृद्भिरर्हद्भिः शासनस्थापनाहर्म्यपीठबन्ध एव आश्रवेभ्यः पापतरेभ्यः विरतेः सर्वथाऽकरणरूपाया अनन्यप्रसिद्धं सर्वाधिकं महत्त्वं सङ्घस्थापनया गणस्थापनया च प्रदर्शितम्।

प्रतीतमेव तीर्थप्रवृत्तौ श्रुतस्य द्वादशाङ्गरूपस्याऽपि विशिष्टतरं महत्त्वं, परं श्रुतं हि ज्ञानस्वरूपम्, ज्ञानञ्च गुणः, गुणस्य गुणिनो विनाऽनन्यथाभावित्वात् ज्ञानस्य पठनपाठनस्वाध्यायादिविनयत्वेन संरक्ष्यमाणत्वाच्च पठनपाठनादिकारकाणामावश्यकता सुतरां प्रतीतैव ।

'ज्ञानं हि परोपजीव्यो हि गुणः' न हि ज्ञानेन लब्धमात्रेण गुणो वा दोषो वाऽनुभूयते परं! मोहस्य क्षयेण क्षयोपशमेन वोदयेन सह ज्ञानस्य साराऽसारत्वं निर्णीयते ।

अतः तीर्थप्रवर्तकश्रुतज्ञानस्याऽपि सारमयता मोहक्षयोपशमेन नियमिता ज्ञानिभिरावश्यकादिषु ग्रन्थेषु निर्दिष्टाऽस्ति ।

एवञ्च "यावान् मोहस्य क्षयोपशमः विशिष्टरीत्या भवेत्, तदानुगुण्येन श्रुतज्ञानमपि तावदेव सम्यक् ज्ञानतया परिणमेत् अभ्यर्हितं च भवेत्" इति निश्चीयते ।

एषा च चिरन्तनप्रथिता मर्यादा ज्ञानस्य विशिष्टतरमहत्त्वनियामिका धीधनैः समुपासितगुरुचरणैः सम्यक् परिभाव्यमाणा सती जिनशासने पञ्चाऽऽचारमध्ये ज्ञानस्य ज्ञानाचाररूपेण गीयमानं महत्त्वं कीदृशं विशिष्टतरमिति च प्रदर्शयेत् । तथा ज्ञानाचारेऽपि कालाद्यष्टप्रकारेषु शब्दज्ञानस्य तु षष्ठे सप्तमे च प्रकारे समावेशः, परं! आद्यप्रकारे पञ्चमे अष्टमे च प्रकारे मोहक्षयोपशमवत्ताध्ननाय ज्ञानस्य विशिष्टमर्यादा सुनिहिता समभिलक्ष्येत ।

"प्रवराऽतिप्रवरे हि जैनेन्द्रशासने शब्दार्थज्ञानस्वरूपज्ञानस्य काणकपर्दिकातुल्याऽपि अर्घणा नाऽभिमता" अत एवाऽऽगमग्रन्थानां परिगणनायां मूलसूत्रचतुष्कत्वेन निर्दिष्टविशिष्टशास्त्राणां निर्देशः सहेतुकः सयुक्तिकश्च प्रतीयते ।

मूलं हि यथा वटादिवृक्षाणां प्रासादादिहर्म्याणां पीठबन्धवत् समुत्पत्ति–स्थित्यादौ परमावश्यकं तथा शासनवृक्षस्य शासनहर्म्यस्य वा समुत्पत्तौ स्थिरतया स्थितौ वा मोहक्षयोपशमकारिविविधसाधुचर्यापालनादिसनाथ साधुजीवनं परमावश्यकम् ।

नैनं विना श्रुतज्ञानरूपं शासनरूपं वा हर्म्यादि स्थिरताभाक्ं भवेत् ।

एतादृशातिमहत्त्वविशिष्टं हि साधुजीवनसामाचारीदर्शकं विशिष्टवर्णनं पूर्वगतश्रुते नवमपूर्वान्तर्वर्त्तितृतीय-वस्तुगतविंशतितमप्राभृते व्यवस्थितं विशदतरं च समुपलभ्यते. परं पूर्वगतश्रुताऽध्ययनं हि दृष्टिवादाऽध्ययन-योग्यतानियमितं, सा च विंशतिवर्षमितदीक्षापर्यायमन्तरा नाऽधिगम्येत ।

अथ च समस्ततीर्थसुरक्षाप्रत्यलश्रुतज्ञानाऽधिगतिप्रबलाऽनन्यहेतुकमोहक्षयोपशमलाभार्थं सुसंयमिजीवन-सामाचारीज्ञानफलस्वरूपसुसंयतक्रियाकलापविधिव्यावर्णनं ओघ–दशविध-पदविभागस्वरूपसामाचारीत्रये यथोत्तरं यतनाप्रधानजीवनपरिकर्मणाऽऽधारेण प्राधान्येन हेतुना सर्वप्राथम्येनाऽविरतिजम्बालपरिकृष्टत्रिविधयोगप्रवृत्तिसूत्र-जालव्यस्तताणावाणासमूहं जिनाज्ञावेम्ना यथास्थितं प्रचिकीर्षणैः चतुर्दशपूर्वधारिभिः–निर्युक्तिकारैः श्रीमद्भिः

भद्रबाहुस्वामिमिश्रैः पूर्वगतश्रुतादुद्धरणोपक्रमं विदधानैः श्रीओघनिर्युक्तिसंज्ञप्रवरग्रन्थरत्नं दीक्षायाः प्रथमदिन एव देयत्वेन निर्णीतं सङ्कलय्य विहितमवर्ण्योपकारविधानं कालबलेनाऽतिशिथिलवृत्तिरूपदुर्वर्षाप्रभवप्रमादरूपाऽतिचिक्खलबहुलताव्याप्तिपरिप्लुताऽऽराधनापथः सुगमत्वादितिरूपेण फलेग्रहिभूरिभूरिविषमदुषमकालतनाऽऽराधकानामिति सम्यक् निष्टङ्क्यते ।

एतस्मिंश्चौघनिर्युक्तिसंज्ञप्रवराऽऽगमसूत्रे साधूनां दैनिकाऽऽवश्यकसामाचारीविशदवर्णनं नैकविधाऽऽपत्तिकालीनाऽऽचरणाविशेषोहापोहपूर्वं बालजीवोपयोगि नाऽतिविस्तृत-संक्षिप्तशैल्याऽल्पाक्षरबह्वर्थरूपेण निरूपितमास्ते ।

वर्त्तमाने ह्यनेहसि चित्रविचित्रनानाविधप्रलोभनाऽऽकृष्टिमति मुमुक्षुभावशालिनां हि वैराग्यसुदृढभूमिकाऽधिरूढत्वेऽपि निमित्ताऽऽधारेण विपरिणामित्वनियमेन जीवपुद्गलयोस्सुसाधूनामपि तादृशविशिष्टपरिकर्मणाऽभावसहकृतनानाविधजनरञ्जनाऽहंभाववर्द्धकपरिणामाननुबन्धिलौकिकप्रवृत्तिषु सुतरां साहजिका प्रवृत्तिः बोभूयमाना दरीदृश्यते ।

तदर्थञ्च वर्त्तमानगीतार्थोत्तंसैः साधुजीवनहर्म्यस्य स्थिरतायै गुरुनिश्रया सर्वप्राथम्येनाऽध्येतव्याऽऽगमेषु सर्वाधिकं महत्त्वमस्यौघनिर्युक्तिसंज्ञसूत्रस्य जेगीयते ।

अनेकसाधुजीवनस्पर्शिमुख्यतमनानाप्रकारोपदर्शनेनाऽस्य ग्रन्थस्य साधुजीवनमुख्याऽऽधारत्वात् एद्ग्रन्थाऽध्ययनाऽध्यापनं सुतरां शैक्षकाणां संयमभावस्थिरतायै समुपयोगि भवतीति निश्प्रचं जोघुष्यतेऽनुभूतिनिकषोपलपरीक्षितसाराऽसारवस्तुविवेचकैः सज्ज्ञानिभिः ।

एतस्याऽऽगमस्य हि सुष्ठु वृद्धसम्प्रदायाद्यनुसृत्य श्रीमद्भिर्द्रोणाचार्यपादैः सप्तसहस्रश्लोकमिता वृत्तिर्विरचिताऽस्ति, या च साधुजीवनसामाचारीयान्तस्तत्त्वजिज्ञासूनां यथार्थमेव विशालाऽऽगमाऽम्भोधौ द्रोणीयते हि मुमुक्षूणाम् ।

अस्य परमोपयोगिनोऽप्यागमरत्नस्याऽन्या काऽपि वृत्तिर्नोपलभ्यते ।

एतस्य हि भाष्यं विद्यमानमासीत्, तदपि विषमकालाऽऽघाताऽसह्यं विप्रकीर्णं सत् इदानीं मूलगाथाभिः सह मिश्रमेव व्याख्यायते, सम्यक् सूक्ष्मधीषणोपयोगं विना ओघनिर्युक्तिगाथाकदम्बकात् भाष्यगाथापृथग्भावोऽशक्यप्रायः प्रतीयते ।

समुपलभ्यते हि विशिष्टोपयोगिन अस्य ग्रन्थरत्नस्याऽवचूरिसंज्ञिता श्रीज्ञानसागरसूरिवर्यग्रथिता लघुवृत्तिः, या चाऽत्यन्तप्राथमिकबोधजिज्ञासूनामवान्तरविषयाऽपोहेन मूलगाथास्थपदानां मङ्क्वर्थं ज्ञानप्राप्तेरत्यन्तं हितावहा ।

सुगमतरशैल्याऽऽगमपरिभाषाऽधिरूढकतिपयपदार्थानां सुरम्यार्थविवेचनादिरूपेण बालजीवानां विशेषत उपकारिणीयमवचूरिः ।

अत एव प्रवरपाण्डित्यपरिपूर्तिश्रीद्रोणाचार्यवृत्तिपाठेऽक्षमानां तथाविधबोधविकलानां मन्दमतीनां विशिष्टलाभहेतुकेयमवचूरिरिति सम्प्रधार्यैव विषमतरकलिकालकरालप्रभावव्यालोडनक्षमसकलजिनाऽऽगममहोदधिमथनदण्डायमानप्रवरमतिप्राग्भाराऽञ्चितसमस्ताऽऽगमतत्त्वग्राहिसूक्ष्मधीषणासम्पन्ना—ऽऽगमवाचनाकारक—आ—

गमोद्धारकाऽऽचार्यवर्यसत्प्रेरणयाऽऽगमादिप्रवरसाहित्यप्रकाशक–श्रीमद् देवचन्द्र लालभाई जैनपुस्तकोद्धारकोशव्यवस्थापकैः श्रीमदागमोद्धारकध्यानस्थस्वर्गताऽऽचार्यदेवश्रीलघुशिष्यवर्य-पूज्य-पंन्यास श्रीसूर्योदयसागरजिन्महाराजद्वारा प्रवररीत्या सुसम्पाद्य प्रकाशमानीता ।

समुचितं चाऽस्याः सम्पादनं पूज्यवर्यैः पंन्यासप्रवरैः सम्यक् प्रयस्य विविधहस्तलिखितप्रतीः समानाय्य विविधपाठभेदान् सङ्कलय्य विविधपरिशिष्टांश्च प्रगुणीकृत्य विहितमस्ति, तदर्थं च ते च नितरां सुधन्यवादार्हाः समभिवन्दनीयाश्च ।

समस्तश्रमणसङ्घसेवायां सादरं समभ्यर्थनगर्भं निवेदनं यत् विशुद्धसंयमिजीवनपद्धतिसमुज्जीवक–विविधपदार्थगर्भितौघनिर्युक्तिग्रन्थस्यास्य परमार्थाऽवधारणायाऽतिसुगमशैल्या बालजीवोपयोगिन्या शैल्या ग्रन्थस्थपदार्थव्यावर्णिका ह्येषाऽवचूरिः सुतरां पठनीयाऽध्येतव्या मननीया च सम्यक् सम्प्रधार्या च श्रीगुरुचरणानां निश्रयेति ।

प्रस्तुते ह्यस्मिन्नुपक्रमे मतिमन्दता–छाद्मस्थ्यप्रयुक्तदोषादिना यत् किञ्चित् क्षुतं भवेत् तत्र सर्वं मिथ्यादुष्कृतद्वारा परिमृज्य प्रस्तुतग्रन्थपरमार्थं ज्ञानिगुरुचरणयोः समर्पणभावेनाऽवबुध्य जीवनविषयीकृत्य चाऽऽत्मतत्त्वविशदप्रकाशाऽधिगतिं समे मुमुक्षवः प्रकुर्युरिति शुभाऽऽशंसापूर्वकं विरमे ।

वीर नि. सं. २५००
वि. स. २०३०
पौष शुक्ला १२ रविवासरः
श्री कल्याणनगर, शाह कोलोनी,
पांच पोल जैन उपाश्रय, शाहपुर,
अमदावाद.

निवेदकः
परमपूज्य तपस्विमूर्धन्यगुरुदेव—
श्री उपाध्यायधर्मसागरजिद्विनेयः
अभयसागरः

卐 卐

# श्री ओघनिर्युक्ति-अवचूरि-संक्षिप्त-विषयानुक्रमः ॥

## —: संपादकीय :—

सूत्र, निर्युक्ति, भाष्य अने टीका स्वरूप आगमनां पांच अंगो तत्त्वना सत्य स्वरूपने प्रगट करे छे, अने तेथी निर्णीत वस्तु यथार्थ अवबोधनुं कारण बने छे। आ अवबोध सुलभ बने ए हेतुथी श्रेष्ठि देवचंद लालभाई जैन पुस्तकोद्धार फंडना कार्यवाहकगणे अद्यावधि अमुद्रित आगम पंचांगी ग्रन्थोने प्रगट करवानी योजना वर्षों पहेलां घडी हती। तदनुसार अनेक मुनिभगवंतोने ते ते ग्रंथोनुं संपादन करी आपवा विज्ञप्ति करेल तेना फलस्वरूप अनेक ग्रंथो प्रकाशनमां आव्या। प्रस्तुत ग्रंथ पण तेमांनो एक ग्रंथ छे। जेनुं नाम ओघनिर्युक्ति अवचूरी छे।

श्री ओघनिर्युक्ति उपर आगमरहस्यार्थवेदी पूज्य द्रोणाचार्य भगवंते टीका रची हती, पण ते विशाल तेमज प्राथमिक भूमिकावाळा साधुओने कठीन पडे तेम होवाथी पू. आचार्य भगवंत देवसुंदरसूरिपट्टालंकार पू. आचार्यभगवंत श्री ज्ञानसागरसूरीश्वरजीए वि. सं. १४३९ मां ओघनिर्युक्ति उपर सुगमबोधवाली अवचूरी रची। घणे स्थाने तो मूळना कठीन शब्दोनो अर्थ करी सरल संस्कृतमां गाथानो पूर्ण भाव समजाववा सुन्दर प्रयत्न कर्यो छे। घणां स्थले केवल कठीन शब्दोना अर्थो ज कर्या छे। जे जे गाथाओ सरल छे त्यां 'स्पष्टा' एवो निर्देश करीने अवचूरी करी ज नथी। टुंकमां लखवानुं के जे जे गाथा वांचननी साथे

अर्थ सुलभ होय ते ते गाथाओ पर अवचूरी न बनावतां जे दुर्बोध छे ते पर ज अवचूरी तथा भावार्थ जेवुं लखाण लखी प्राथेमिक साधुजीवनवाला माटे पू. आचार्यदेवश्रीए महान उपकार कर्यो छे।

प्रतिओनो परिचयः—आ अवचूरीनुं संपादन करवा फंडना कार्यवाहक श्रीयुत् केशरीचंदभाईए एक हस्तलिखित प्रतनी प्रेसकोपी मने आपी, पण मारु मन न संतोषातां में अनेक ग्रंथभंडारोमांथी बीजी बीजी अवचूरीओ मंगावी तेमांथी बे प्रतने मुख्यता आपी छे।

(१) कानपुरना हस्तलिखित भंडारनी प्रत जेनी K संज्ञा आपी छे।

(२) श्रीसीमंधरस्वामि जैन हस्तलिखित ज्ञानभंडार—सूरत जेनी S संज्ञा आपी छे।

कानपुरनी प्रत महद् अंशे शुद्ध पण प्रारंभना ४ पाना वगरनी छे, ज्यारे सूरतनी प्रत सम्पूर्ण तथा मरोडदार अक्षर तेमज शुद्धप्रायः अने सुवाच्य छे अने आज बे प्रतिओना पाठांतरो लीधा छे। बीजी बे प्रतोनी पण प्रसंगे प्रसंगे मदद लीधी हती, पण अल्प लीधी होवाने कारणे उल्लेख कर्यो नथी।

विशेषता ए छे के एक ज नामवाला अवचूरीकारनी आ बे प्रतिओमां केटलेक स्थळे घणुं ज शब्दवैषम्य आवे छे। भावार्थमां एक रहे छे पण शब्दकृत भेद घणी जग्याए देखाय छे तेनुं शुं कारण? ते शोधवा विज्ञप्ति छे।

आ ग्रंथना संशोधनमां आ प्रतो उपरांत मोटी टीकानी मदद लीधी छे । मोटी टीकामां भाष्य तथा निर्युक्ति गाथाना अलग नंबरो आप्या छे । शरुआतमां अलग नंबरो राख्या पण आ अवचूरीमां विशिष्ट प्रयोजन नथी तेवुं समजमां आवतां ते गाथाओना नंबरो अलग नथी कर्या पण सळंग नंबरो कर्या छे । तेथी भाष्यगाथा कयी छे ते जोवा माटे मोटी टीका जोवा सूचना छे।

आ ग्रंथनी चरम गाथामां ११४९ संख्यानो उल्लेख छे ते मुजब आ ग्रंथमां मूळ गाथानो ११४९ आंक मळे छे। वळी आ अवचूरीमां केटलीक एवी गाथाओ छे के जे द्रोणीयवृत्तिवाली ओघनिर्युक्तिमां नथी । तेमज मुख्य टीकाओमां अमुक गाथाओ ओछी छे तेवुं लागे छे । आ ग्रंथनी केटलीक गाथाओ बृहत्कल्प पंचवस्तु आदिने मळती छे ते जाणवा सारु लखाय छे ।

४४० पत्र सुधी मूलग्रंथ छे । श्लोक संख्या ३३०० प्रमाणनी छे । बाद परिशिष्ट १ मां ओघनिर्युक्ति अवचूरी उद्धार गाथाओ १२७ मुद्रित करी छे । तेमां प्रथम आंक क्रमांकनो छे अने ब्रेकेट[ ] मां आपेलो आंक छे ते गाथाओनो आ ग्रंथमां कयो आंक छे ते बतावे छे । ४५३ थी ४५८ सुधी शुद्धिपत्रक छे ।

४५९ थी ४७० पत्र सुधीना परिशिष्ट नं. २ मां अवचूरीकारे जे मूल शब्दनो अर्थ संस्कृत भाषामां लख्यो छे तेनी नोंध मूकी छे । कोइक ठेकाणे में गुजराती भाषामां तेनो अर्थ लख्यो छे ।

परिशिष्ट ३ मां अकारादिक्रमे गाथाओनी क्रमसर नोंध करी छे जे अभ्यासीओने तेमज संशोधकोने

महान उपयोगी थाय तेवी धारणा छे । पत्र ४७१ थी ५१४ सुधी आ परिशिष्ट छे । परिशिष्ट ४ मां विशेषनामसूची पत्र अने पंक्तिवार नोंधी छे ।

प्रारंभमां अवचूरीनो उपक्रम पूज्यपाद् शासनसेवापरायण सुगृहीतनामधेय आराध्यपाद पू. उपाध्याय भगवंत श्री धर्मसागरजी महाराजना परमविनेय शास्त्रऐदम्पर्यविज्ञाता भूगोल खगोल अंगे विज्ञानवादनी परिशोधने आमूलचूल भूल भरेली साबित करवा अनेक कुलपतिओ वाइस चान्सेलर प्राध्यापको प्रोफेसरोनी परिसंवाद-गोष्ठिना पुरस्कर्ता महामनीषी अध्यात्मसाधनमग्न पूज्य पन्यासप्रवर श्रीअभयसागरजी महाराजश्रीए लखी आपी महान उपकार कर्यो छे । साथे साथे आ ग्रंथनी महत्ता अने आदरणीयता बतावी छे । त्यारबाद संक्षिप्त विषयानुक्रम आप्यो छे ।

परमपूज्य गुरुदेव आगमोद्धारकश्रीनी उपसंपदाप्राप्त शिल्पशास्त्रविशारद कडकपणे सचोट मार्गदर्शक परमपूज्य पंन्यासप्रवर श्रीकंचनसागरजी गणिवर महाराजश्री के जेओए आ कार्यमां आदिथी अंत सुधी अनेकविध मार्गदर्शन तेमज मारा प्रमादने दूर करवा मदद करी छे तेओने केम भूलुं ?। वळी जेओए आ संपादनमां अनेकविध मौलिक सहायता करी छे ते पूज्य पंन्यासप्रवरश्री अभयसागरजी म. के जेओ लघुवयमां (६ वर्ष ३ मासमां) दीक्षित थया ते शासनना महान प्रभावकोनी कोटीमां छे । तेमने पण अनृण थवा संभारुं तो तेमां कशुं अजुगतुं नथी ।

वळी आ फंडना कार्यमां ओतप्रोत सुश्रावक केशरीचंद हीराचंद झवेरी के जेओए मने वारंवार आ कार्य माटे प्रेरणा करी छे तेमने पण याद करी मारुं निवेदन पूर्ण करतां पूर्वे लखवानुं के आ प्रत वांचता पूर्वे शुद्धिपत्रकमांथी भूलो जोइ शुद्ध करी पछी वांचवाना उपयोगमां लेशो । आ भूलो रहेवानां मुख्य कारणो छे अमारो विहार, तथा प्रसवाळाना कंपोझीटरनी त्रीजा प्रुफमां पण सुधारवानी बेदरकारी, आथी मारे अत्यारे तो दिलगीरी व्यक्त करवी ए ज मार्ग छे । छतां पण जेओ ते भूलो मने बतावशे ते भूलोने सन्मान साथे स्वीकारी बीजी आवृत्ति वखते ते उपर परतुं ध्यान आपीश...।

पर्युषणा प्रथम दिन
वी. सं. २५०० वि. सं. २०३०
जैन उपाश्रय,
सुरेन्द्रनगर. [ सौराष्ट ]

इति भद्रं भवतु श्रमणसङ्घस्य
पं. सूर्योदयसागर

## —: प्रकाशकीय निवेदन :—

श्री जैनागम पंचागीमां अद्यावधि अप्रकाशित ग्रंथोने प्रकाशित करवानी अमारी योजनामां श्री ओघनिर्युक्ति अवचूरी ग्रंथ प्रकाशन करतां अनेरो आनंद अनुभवाय छे ।

आ ग्रंथनो क्रमांक नंबर १२१ छे, ५०० वर्ष पूर्वे आ अवचूरीनुं निर्माण पूज्य आचार्य भगवंत श्री ज्ञानसागर सूरीश्वरजीए कर्युं हतुं, जे अद्यावधि अमुद्रित छे । आ ग्रंथ साधु भगवंतोने जे दिवस दीक्षा ले ते ज दिवसे आपी शकाय तेवो छे । तेमां साधुनी चर्यानुं वर्णन सरस रीते आप्युं छे । अल्प बोधवाळा पण गाथानो भावार्थ अवचूरीथी मेळवी शके तेवी सरळ आ अवचूरी छे । आ ज विशेषताना कारणे आ ग्रंथनुं मुद्रण करावाय छे । आमां गाथा, क्रमांक, विषय तथा कठीन शब्दोना अर्थ आदि परिशिष्टो संपादकश्रीए बनावी आ ग्रंथने वधु सुगम बनाव्यो छे ।

आ ग्रंथ संपादननी अमारी आग्रहपूर्ण विनंतिनो स्वीकार पूज्य आगमोद्धारक आगममंदिरसंस्थापक आचार्यदेवेश श्री आनंदसागरसूरीश्वरजी महाराज साहेबना शिष्यरत्न विद्वद्वर्य पूज्य पंन्यासप्रवर श्री सूर्योदयसागरजी महाराजे कर्यो जेना फलस्वरूप आ ग्रंथ प्रकाशित थइ रह्यो छे ।

प्रस्तुत ग्रंथ संपादन करवामां पू. पंन्यासजी महाराजश्रीए जे परिश्रम उठाव्यो छे ते बदल अमो सहु संस्थावती आभार व्यक्त करीए छीए ।

ली.

मोतीचंद मगनलाल चोकसी

मेनेजींग ट्रस्टी

मुंबाई

अनूनश्रुतकेवलि-श्रीमद्भद्रबाहुस्वामिमिश्रैरुद्धृता

श्रीज्ञानसागरसूरिकृतावचूरियुता

# ॥ श्रीमती ओघनिर्युक्तिः ॥

॥ णमो अरिहंताणं ॥ ॥ णमो सिद्धाणं ॥

॥ णमो आयरियाणं ॥ ॥ णमो उवज्झायाणं ॥ ॥ णमो लोए सव्वसाहूणं ॥

॥ एसो पंचणमुक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥

॥ श्रीगौतमाय नमः ॥

प्रक्रान्तोऽयमावश्यकानुयोगस्तत्र सामायिकमध्ययनमनुवर्तते, तस्य चत्वार्यनुयोगद्वाराणि—उपक्रमो निक्षेपोऽनुगमो नयः, आद्यौ द्वावुक्तौ, अनुगमो द्विधा—निर्युक्त्यनुगमः सूत्रानुगमश्च, आद्यस्त्रिधा—निक्षेपो—पोद्घात—सूत्रस्पर्शिक-

निर्युक्त्यनुगमभेदात्, तत्राद्योऽनुगतो वक्ष्यमाणश्च, उपोद्घातनिर्युक्त्यनुगमस्त्वाभ्यां द्वारगाथाभ्यामनुगन्तव्यः "[1]उद्देसे णिद्देसे" इत्यादि०

अस्य गाथाद्वयस्य समुदायार्थोऽभिहितोऽधुनाऽवयवार्थोऽनुवर्तते, तत्रापि कालद्वारावयवार्थस्तत्प्रतिपादनार्थमिदं प्रतिद्वारगाथासूत्रमुपन्यस्तं "[2]दव्वे अद्ध अहाउय" इत्यादि, अस्यापि समुदायार्थो व्याख्यातोऽधुनाऽवयवार्थः ।

तत्राप्युपक्रमकालाभिधानार्थमिदं सूत्रमाह—

तत्रोपक्रम इति, उपेति—सामीप्येन क्रमणमुपक्रमः, दूरस्थस्य समीपानयनमित्यर्थः, तत्रोपक्रमकालो द्विधा—सामाचार्युपक्रमकालो यथायुष्कोपक्रमकालश्च, तत्राऽऽद्यस्त्रिधा—ओघसामाचार्युपक्रमकालः, दशधासामाचार्युपक्रमकालः, पदविभागसामाचार्युपक्रमकालश्च, तत्र ओघसामाचारी ओघनिर्युक्तिः, दशधासमाचारी 'इच्छामिच्छे' त्यादि, ( ) पदविभागसामाचारी कल्पव्यवहारः,

"दुविहोक्कमकालो, सामाचारी अहाउयं चेव । सामायारी तिविहा, ओहे[1] दसहा[2] पयविभागे[3]"

तत्रौघसामाचारी पदविभागसामाचारी च नवमपूर्वान्तर्वर्त्ति तृतीयसामाचारीवस्त्वस्ति, तत्रापि विंशतितमात्

१ उद्देसे णिद्देसे य, णिग्गमे खेत्तकालपुरिसे य । कारण—पच्चय—लक्खण—णए समोयारणाऽणुमए ॥१॥
किं कइविहं कस्स कहिं, केसु कहं केच्चिरं हवइ कालं । कइ संतरमविरहिअं, भवागरिस—फासण—निरुत्ती ॥२॥ (आव. १०४ पत्रे, गाथे १४०-४१)

२ आव नि. गाथा ६६० (२५७ पत्रे)

प्राभृतात् साध्वनुग्रहार्थं भद्रबाहुस्वामिना निर्यूढा। दशधासामाचारी पुनरुत्तराध्ययनेभ्यो निर्यूढा "इच्छामिच्छे" त्यादिका। तत्र तदुपक्रमणं विंशतिवर्षपर्यायस्य दृष्टिवादो दीयते, प्रभूतदिवसलभ्या सती स्वल्पदिवसलभ्या कृतेत्यर्थः। एवं पदविभागसामाचारी दशधासामाचार्यपीति।

तत्रौघसामाचारी तावदभिधीयतेऽस्याश्च महार्थत्वात् कथञ्चिच्छास्त्रान्तरत्वाच्चाचार्यो मङ्गलमाह, तत्पुनर्नामादिभेदेन चतुर्धा, नामस्थापने सुगमे, द्रव्यमङ्गलं दध्यादि, तच्चानैकान्तिकमनात्यन्तिकञ्च। भावमङ्गलमर्हदादिनमस्कारः, तच्चैकान्तिकमात्यन्तिकञ्च। तदनेन सम्बन्धेन समायातस्यास्य ग्रन्थस्य पूर्वं नमस्कारमाह–

अरहंते वंदित्ता, चउदसपुव्वी तहेव दसपुव्वी।
एक्कारसंगसुत्तत्थ–धारए सव्वसाहू य ॥१॥ (मू० १)

अरहन्तेत्ति व्याख्या, सा च संहितादिभेदेन षोढा, यदुक्तं '१संहितेत्यादि' तत्रास्खलितपदोच्चारणं संहिता, पदविभागः–पदानि, पदानामर्थः पदार्थः, पदविग्रहस्तु समासभाञ्जि(जां) पदानि(नां), संहितादीनि स्वयमभ्यूह्यानि, चालना प्रतिपाद्यते–एवं व्याख्याते सत्याह परः, सर्वेयं गाथा न घटते, यदुत नमस्कारोऽपि संक्षेपेणैवाभिधातव्यः। न चासौ संक्षेपेण, अपि त्वर्हन्नमस्कार एव केवलः संक्षेपेण भवति, स एव कर्त्तव्यो न चतुर्दशपूर्वधरादिनमस्कारः, अथ क्रियते एवं तर्हि त्रयोदशपूर्व्यादीनामेकैकपूर्वहान्या तावद्यावत् दशपूर्वधराणामेकादशाङ्गधरणामिति।

१ संहिता च पदं चैव, पदार्थः पदविग्रहः। चालना प्रत्यवस्थान, व्याख्या तन्त्रस्य षडविधा ॥१॥

ओघनिर्युक्तेरुद्धृतादि कथनानन्तरं मङ्गलादि०

अत्रोच्यते, नैवं येनैव संक्षेपग्रन्थोऽयं तेनैव लक्षणेनेत्थं सामान्येनार्हतां नमस्कारोऽभिहितो न विशेषेणैकैकस्य तीर्थकृतः, तथा भगवतामुपकारकारित्वान्नमस्कारः क्रियते। ये च चतुर्दशपूर्विणस्तेऽप्युपकारका, यतोऽर्थतस्तीर्थकराः [उपकारकाः] सूत्रतश्चतुर्दशपूर्विगणधराः [उपकारकाः]। अथवा व्यवहितोपकारकत्वेनार्हन्तोऽव्यवहितोपकारकत्वेन [चतुर्दशपूर्वधराः] अस्याचार्यस्य [उपकारका अतः] चतुर्दशपूर्विणां नमस्कारः कृतः।

यच्चोक्तं चतुर्दशपूर्व्यादिनमस्कारेणैव शेषाणां भविष्यति किं दशपूर्व्यादिनमस्कारेण ?, अथ भेदेन तर्हि त्रयोदशपूर्व्यादीनामपि, तदसाधु। यतो दशपूर्वधरा अप्युपकारका, उपाङ्गादीनां संग्रहण्युपरचनेन हेतुना। अथवाऽस्यामवसर्पिण्यां चतुर्दशपूर्व्यनन्तरं दशपूर्विण एव जाता न त्रयोदशपूर्विणः, अथवाऽन्यत् प्रयोजनं चतुर्दशपूर्विणो दशपूर्विणश्च नियमेनैव सम्यग्दृष्टय इति ज्ञापनार्थं तन्नमस्कारः।

पुनरप्याह गुणाधिकस्य वन्दनं नत्वधमस्य, भद्रबाहुस्वामिनश्चतुर्दशपूर्वित्वाद्दशपूर्व्यादयो न्यूनाः, तत्किं तेषां नमस्कारं करोतीति ? नैवं, गुणाधिका एव तेऽव्यवच्छित्तिगुणकारकत्वाददोषः। किमर्थमेकादशाङ्गसूत्रार्थधारकाणामिति ? तदुच्यते, इह चरणकरणात्मिका ओघनिर्युक्तिरेकादशाङ्गसूत्रार्थधारिणश्च चरणकरणवन्तोऽतो न दोषः। किमर्थं साधूनामिति चेत्, ते तु चरणकरणनिष्पादकास्तदर्थं चायं सर्व एव प्रयास इति।

चशब्दात् सिद्धनमस्कारः, किमर्थं सिद्धनमस्कारः पश्चादभिधीयते ?। अपित्वर्हन्नमस्कारानन्तरं वाच्यः ? उच्यते, यान्यर्हदादीनि पदानि तेषां सर्वेषां सिद्धाः फलभूता इति प्रदर्शनार्थमित्यलं प्रसङ्गेन ॥१॥

कृतमङ्गलः सन् सम्बन्धा-ऽभिधेय-प्रयोजनत्रयप्रदर्शनार्थं द्वितीयगाथासूत्रमाह—

ओहेण उ णिज्जुत्तिं, वुच्छं चरणकरणाणुओगाओ।
अप्पक्खरं महत्थं, अणुग्गहत्थं सुविहियाण ॥२॥

ओघेन—समासेन 'तु'शब्दात् किञ्चिद् विस्तरेण च निर्युक्तिं वक्ष्ये, इत्यनेन सम्बन्धः, तथाहि—व्यासक्रियायाः समासक्रिया अनन्तरभूता वर्तते, अतः क्रियानन्तर्यलक्षणः सम्बन्धः, एवं कार्यकारणलक्षणोऽपि। कार्यमोघनिर्युक्त्यर्थं-परिज्ञानं, अनुष्ठानं च कारणं वचनरूपाऽऽपन्ना ओघनिर्युक्तिरेव। 'निर्युक्तिं वक्ष्ये' इति, निः—आधिक्ये, योजनं—युक्तिः, सूत्रार्थयोर्योगो नित्यव्यवस्थित एवास्ते वाच्यवाचकतयेत्यर्थः, अधिका योजना निर्युक्तिः, नियता निश्चिता वा योजनेति, ततश्च निर्युक्तेर्युक्तिर्निर्युक्तियुक्तिरित्येवं वक्तव्ये एकस्य युक्तिशब्दस्य लोपो यथोष्ट्रमुखी कन्येति। कुतो वक्ष्ये? इत्याह चरणकरणानुयोगात्। चरणं व्रतादि, करणं पिण्डविशुद्ध्यादि, तयोरनुयोगश्चरणकरणानुयोगः, अनुयोजनमनुयोगः, अनुरूपोऽनुकूलो वा योगः, अणु—सूत्रं महानर्थस्ततो महतोऽर्थस्याणुना सूत्रेण वा योगोऽनुयोगस्तस्माच्चरणकरणानुयोगात् निर्युक्तिं वक्ष्ये चरणकरणात्मिकामेवेति गम्यते। यथा मृदो घटं करोति, तद्वदत्रापीति, 'निर्युक्तिं वक्ष्ये' इत्यनेनाभिधेयमुक्तम्। [1]अनुग्रहार्थं सुविहितानामित्यनेन प्रयोजनम्। अनया गाथया निःसम्बन्धत्वादयो हेतवो निरस्ताः।

१ "किं निमित्त? अनुग्रह—उपकारस्तदर्थं, केषां? शोभन विहितं येषां ते सुविहिताः साधवस्तेषामित्युक्तं प्रयोजनम्"

यश्चायं क्त्वाप्रत्ययस्तेन (नित्या)नित्यैकान्तपक्षयोरसारता प्रतिपादिता। स तावन्नित्यवादे न घटते, एकं कृत्वा ह्यपरकरणं क्रमः, स नित्ये न घटते। नित्यं वस्त्वप्रच्युतानुत्पन्नस्थिरैकस्वभावं तच्च क्रियाद्वयं न करोति। नाप्यनित्यवादे, उत्पत्त्यनन्तरं ध्वंसाद् कथमेक एव कर्त्ता क्रियाद्वयं करोति। येन हि प्राक्तनी क्रिया निष्पादिता सोऽन्यः, एवं योऽपि चेतरां क्रियां करोति सोऽपि चान्य एव, तत् एकान्ताऽनित्यवादेऽपि क्त्वाप्रत्ययो न घटते। नित्यानित्यवादे एव संघटते।

तत्त्वाप्रत्ययद्व नित्यानित्य पक्षविमर्शः।

ओघशब्दस्य पर्यायानाह[२]—

ओहे पिंड समासे, संखेवे चेव होंति एगट्ठा।
णिज्जुत्तत्ति य अत्था, जं बद्धा तेण णिज्जुत्ती ॥३॥ (भा. १)

एकार्थिकप्रतिपादनेनैकान्तभेदाभेदनिरासः

ओघः पिण्डो भवति, पिण्डनं पिण्डः संघातरूप ओघः. समसनं समासो, भवतीति सर्वत्र योगः। चशब्द-उक्तसमुच्चये क्वाप्यनुक्तसमुच्चये, एवशब्दः प्रकारार्थस्तेनैषां पर्याया अप्यौघस्यैकार्थिकानि, निश्चयेनाधिक्येन वा युक्ता इति चार्था यद् बद्धास्तेन निर्युक्तिः। एकार्थिकप्रतिपादनेनैकान्तभेदाभेदनिरासः, एकान्तभेदपक्षे एकार्थिकानि न युज्यन्ते, यस्य ह्येकान्तेनैव सर्वे भावाः सर्वथा भिन्नास्तस्य यथा घटशब्दात् पटशब्दो भिन्न एवं कुटशब्दोऽपि, तत्

२ अथ तत्त्वभेदपर्यायैर्व्याख्येति भाष्यकृदेकैकमवयवं पर्यायतो व्याख्यानयति।

कथं घटशब्दस्य कुटशब्द एकार्थिको युज्यते? एकार्थिकत्वं हि कथञ्चिद्भेदे भवति, एवं एकान्ताभेदवादेऽपि न युज्यन्ते एकार्थिकानि, कथं ?, यस्य ह्यभेदेन सर्वे भावा व्यवस्थितास्तस्य यथा घटशब्दस्य घटशब्दोऽभिन्न एकार्थिको न भवति, एवं कुटादयोपि न युज्यन्ते, अभिन्नत्वादित्यलं चर्चा—चर्चरीशब्दः ईर्ष्यामूलेन चर्चा घनम् ॥३॥

"चरणव्याख्यामाह"—

(५) (१०) (१७) (१०) (९)
वय—समणधम्म—संजम—वेयावच्चं च बंभगुत्तीओ ।
(३) (१२) (४)
णाणाइतियं तव कोह—णिग्गहाई चरणमेयं ॥४॥ (भा. २)

व्रतादिचरणं भवतीति योगः, व्रतानि ५, श्रमणधर्मः क्षान्त्यादिः १०, संयमः १७, वैयावृत्यं १०, ब्रह्मगु० ९, ज्ञानादित्रयं ३, तपः १२, क्रोधादिनिग्रहः ४, ॥४॥

'अथ करणव्याख्यामाह'—

(४) (५) (१२) (१२)
पिंडविसोही समिई, भावण पडिमा य इंदियणिरोहो ।
(२५) (३) (४)
पडिलेहण गुत्तीओ, अभिग्गहा चेव करणं तु ॥५॥ (भा० ३)

विशोधिराधाकर्मादिदोषपरित्यागात्, 'पिंडं सिज्जं च वत्थं च, चउत्थं पायमेव य' त्यादि । पिण्डविशोधिः ४, समितयः ५, अनित्याद्याः १२, मासादिसाधुद्वादशप्रतिमाः ॥

मासाई सत्तंता ७ पढमा ८ विअ ९ तईअ १० सत्तराइदिणा । अहराइ ११ एगराई १२ भिक्खुपडिमाण बारसगं ॥

इंद्रियनिरोधः ५, प्रतिलेखनाः २५, गुप्तयः ३, अभिग्रहाश्च ४, करणं भवतीत्यर्थः । नित्यानुष्ठानं चरणं, व्रतादि हि सर्वकालमेव चर्यते न पुनर्व्रतशून्यः कश्चित्कालः, यत्तु कार्यं आपन्ने क्रियते पिण्डविशुद्ध्यादि तत् करणं ॥५॥

चोदगवयणं छट्ठी, सम्बन्धे कीस न हवइ विभत्ती ? ।
तो पंचमी उ भणिया, किमत्थि अण्णेऽवि अणुआगा ॥६॥ (भा० ४)

चोदगेत्यादि०, सम्बन्धे षष्ठी किं न भवति विभक्तिः ? एतदुक्तं भवति, चरणकरणानुयोगसम्बन्धिनीमोघनियुक्तिं वक्ष्य इति वाच्यं, षष्ठ्यभणने किं प्रयोजनं ? अथ न प्रयोजनं किञ्चित्ततः पञ्चमी भणिता किं-केन कारणेन, एवं नोदिते सत्याहाचार्योऽस्त्यत्र प्रयोजनं यत् पञ्चम्युपन्यस्ता, किम्-इत्यत आह ? सन्त्यन्ये अनुयोगा इति, पुनरप्याह यथान्येऽप्यनुयोगाः सन्ति [इति] पञ्चम्याः किमायातम् ? अत्रोच्यते, अस्याचार्यस्येयं शैली यदुत यत्र क्वचित् सम्बन्धस्तत्र षष्ठ्या सप्तम्या वा निर्देशं करोति । तथा चाह—

'आवस्सगस्स[1] दसकालियस्स, तह उत्तरज्झ–मायारे' इत्येवमादि। अत्र शैलीं त्यक्त्वा पञ्चम्या निर्देशं कुर्वन्नाचार्य एतज्ज्ञापयति– सन्त्यन्येऽप्यनुयोगा इति, तदत्राह चरणकरणानुयोगाद्वक्ष्ये नान्यानुयोगेभ्य इति, षष्ठी भेदाभेदाद् द्विधा यथा देवदत्तस्य गृहं, तैलस्य धारेति, तद्यदि षष्ठ्या उपन्यासः क्रियते ततो न ज्ञायते चरणकरणानुयोगस्य भिन्नामभिन्नामोघनिर्युक्तिं वक्ष्ये, इति व्यामोहनिवृत्त्यर्थं पञ्चम्युपन्यासः, अस्तीत्यव्ययं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु समम् ॥६॥

अनुयोगसङ्ख्यामाह—

चत्तारि उ अणुओगा, चरणे धम्म–गणियाणुओगे य।
दवियणुजोगे य तहा, अहक्कमं ते महिड्ढिया ॥७॥ (भा० ५)

चत्वारोऽनुयोगाः, तुशब्दात् द्वौ च पृथक्त्वापृथक्त्वभेदात्, 'चरणे' उत्तरपदलोपादित्थमुपन्यासश्चरणकरणानुयोग इत्येवं वाच्यं, स चैकादशाङ्गरूपः, धर्मानुयोग उत्तराध्ययनप्रकीर्णकरूपः, (गणितानुयोगः सूर्यप्रज्ञप्त्यादिरूपः) चशब्दः प्रत्येकमनुयोग(पद)समुच्चायकः, द्रव्यानुयोगः सदसद्पर्यालोचनारूपः स च दृष्टिवादः, चशब्दादनार्पः सम्मत्यादिरूपश्च, यथाक्रमं ते महर्द्धिकाः–प्रधानाः। एवं व्याख्याते सत्याह परः, चरणपदं भिन्नया विभक्त्या किमर्थमुपन्यस्तं? धर्मगणितानुयोगौ तु एकयैव विभक्त्या, पुनर्द्रव्यानुयोगो भिन्नया, तथानुयोगशब्द एक एवोपन्यसनीयः, किमर्थं

१ आव० नि० पत्र ६१, गाथा ८४–८५.

द्रव्यानुयोग इति भेदेनोपन्यासः ?, उच्यते, चरणपदस्य भेदोपन्यासे एतत् प्रयोजनं, चरणकरणानुयोग एवाऽत्राधिकृतः, प्राधान्यख्यापनार्थं भिन्नया विभक्त्योपन्यासः, धर्म—गणितानुयोगावभिन्नावुपन्यस्तौ, तावत्र प्रक्रमेऽप्रधानाविति प्रदर्शनार्थं, द्रव्यानुयोगस्य भिन्नत्वे इदं कार्यं (प्रयोजनं), यदयं हि एकैकानुयोगे मीलनीयः, न पुनर्लौकिकशास्त्रवन्न युक्तिभिर्विचारणीयः, अनुयोगशब्दद्वयोपन्यासे इदं प्रयोजनं, यत् त्रयाणां पदानां अन्तेऽनुयोगपदं तदपृथक्त्वाऽनुयोगार्थं, यच्च द्रव्यानुयोग इति तत् पृथक्त्वानुयोगार्थं ॥७॥

आह परो 'यथाक्रमं [ते] महर्द्धिका' इति चरणस्य लघुत्वं तत् किमर्थं तस्य निर्युक्तिः क्रियते ? अपि तु द्रव्यानुयोगस्यैव क्रियतां गुरुराह—

सविसय-बलवत्तं पुण, जुज्जइ तहवि अ महिड्ढिअं चरणं ।
चारित्तरक्खणट्ठा, जेणिअरे तिण्णि अणुओगा ॥८॥ (भा० ६)

[सविसय] बलवत्तंति, स्वविषये सर्वेषामात्मीयात्मीयविषये बलवत्त्वात्, युज्यते घटते बलं, तथापि महर्द्धिकं चरणं, शेषानुयोगानां चरणकरणार्थमेवोपादानादपरे वृत्तिभूताः ॥८॥

कथं चारित्ररक्षणार्थमिति चेत् तदाह—

चरणपडिवत्तिहेउं, धम्मकहा कालदिक्खमाईआ ।

दविए दंसणसुद्धी, दंसणसुद्धस्स चरणं तु ॥९॥ [भा० ७]

चरणप्रतिपत्तेर्हेतुः कारणं किं ? तदाह धर्मकथा, काले दीक्षादयः शोभननक्षत्र–तिथ्यादौ प्रव्रज्याप्रदानं कर्त्तव्यं, द्रव्यानुयोगे दर्शनशुद्धिः, दर्शनशुद्धस्य चारित्रं, तुर्विशेषणे, चारित्रशुद्धस्य दर्शनम् ॥९॥

दृष्टान्तमाह—

जह रण्णो विसएसुं, वयरे कणगे अ रयय लोहे अ।
चत्तारि आगरा खलु, चउण्हं पुत्ताण ते दिण्णा ॥१०॥ [भा० ८]

यथा राज्ञो विषयेषु जनपदेषु वज्र १ कनक २ रजत ३ लोहाऽऽकराः ४ पुत्राणां दत्ताः ॥१०॥

चिंता लोहागरिए, पडिसेहं सो उ कुणइ लोहस्स।
वयराईहि अ गहणं, करिंति लोहस्स तिण्णियरे ॥११॥ [भा० ८ अ]

लोहाकरोऽस्यास्तीति लोहाकरिकः तस्मिन्, राज्ञा परिभूतोऽहमिति चिन्तायाममात्यदत्तबुद्धिः प्रतिषेधं करोति लोहस्य, ततस्ते त्रुटितलोहोपकरणा वज्रादिभिर्ग्रहणं कुर्वन्ति लोहस्य, चशब्दात् हस्त्यादिभिः इतरे वज्राकरिकादयः ॥११॥

एवं चरणंमि ठिओ, करेइ गहणं विहीइ इयरेसिं।
एएण कारणेणं, हवइ उ चरणं महड्ढीअं ॥१२॥ (भा. ९)

चर
द्रव्यादित्र
कारणता।

आकरोदा-
हरणेन चरण
प्राधान्यम्।

॥११॥

एवं करोति ग्रहणं चरणस्थितो विधिना इतरेषां—द्रव्यानुयोगादीनां, च [तु] शब्दादन्येषां गुणानां च ग्रहणे समर्थो भवति नान्यथाऽतः प्राह—तदनेन कारणेन चरणं महर्द्धिकम् ॥१२॥

चतुर्द्धा सूत्रस्वरूपमाह—

अप्पक्खरं महत्थं, महक्खरऽप्पत्थ दोसुऽवि महत्थं।
दोसुऽवि अप्पं च तहा, भणियं सत्थं चउविगप्पं ॥१३॥ (भा. १०)

अत्र चतुर्भङ्गीका ज्ञेया[१] । चतुर्भङ्ग्या उदाहरणान्याह ॥१३॥

सामायारी ओहे, णायज्झणा य दिट्ठिवाओ य ।
लोइय कप्पासाई, अणुकमा कारगा चउरो ॥१४॥ (भा. ११)

ओघसामाचारी प्रथमे भङ्गे, द्वितीये ज्ञाताध्ययनानि, तृतीये दृष्टिवादः, चतुर्थे लौकिकं कार्पासादि, आदिशब्दाच्छिवचन्द्रादि [भद्रादि] परिग्रहः, अनुक्रमेण कारकाणि—उदाहरणानि ॥१४॥

चतुर्धा सूत्रस्वरूपम् सादाहरणम् ।

॥१२॥

१ अल्पाक्षरं महार्थं च प्रथमो भङ्गः ।१। महाक्षरं स्वल्पार्थं च द्वितीयो भङ्गः ।२। प्रभूताक्षरं प्रभूतार्थं च तृतीयो भङ्गः ।३। अल्पाक्षरं अल्पार्थं च चतुर्थो भङ्गः ।४।

[1]यदुक्तमनुग्रहार्थं सुविहितानां' तदाह—

बालाईणऽणुकंपा, संखडिकरणंमि होअगारीणं।

ओमे य बीयभत्तं, रण्णा दिण्णं जणवयस्स ॥१५॥ (भा. १३)

'एवं'[2]मित्युपन्यासाद्यथेति गम्यते। यथा ह्यगारिणां अनुकम्पा भवति, बालादीनामुपरि संखडिकरणे, अकालेऽपि भोजयन्तिं बालादीन्। तथाऽवमे—दुर्भिक्षे बीजानि शाल्यादीनि भक्तं च जनपदस्य राज्ञा दत्तं ॥१५॥

एवं थेरेहिं इमा, अपावमाणाण पयविभागं तु।

साहूणऽणुकंपट्टा, उवइट्ठा ओहणिज्जुत्ती ॥१६॥ (भा. १४)

एवमप्राप्नुवतां पदविभागं वर्तमानकालतया कल्परूपां, चिरंतन—कालापेक्षया तु दृष्टिवादस्थितां पदविभाग-समाचारीं, तुशब्दाद्दशधासामाचारीश्च।

अथ केयमोघनिर्युक्तिः या स्थविरैः प्रतिपादिता ?, तदाह—

पडिलेहणं[1] च पिंडं[2], उवहिपमाणं[3] अणाययणवज्जं[4]।

१ 'अणुग्गहत्थं सुविहियाण'मिति द्वितीयगाथास्थपदव्याख्या क्रियते।
२ एवमित्याद्यप्रतेनी गाथा ज्ञेया।

५ ६ ७
पडिसेवणमालोअण, जह य विसोही सुविहियाणं ॥१७॥(मू. गा. २)

'लिख अक्षरविन्यासे' प्रतिलेखन' प्रतिलेखना तां क्षेत्रादेरागमानुसारेण निरूपणां, चशब्दात् प्रतिलेखकं प्रतिलेखनीयश्च वक्ष्ये । पिण्ड—भिक्षाशोधिं, संयममुपदधातीत्युपधिः । अनायतनं—स्त्री—पशु—पण्डक—संसक्तं वर्ज्यं—त्याज्यं । संयमानुष्ठानात्प्रतीपमसंयमानुष्ठानं, तदासेवना तां, अपराधमर्यादयाऽऽलोचनं । येन प्रकारेण प्रायश्चित्तप्रदानं, सा विशोधिः ।

अथैषां द्वाराणां क्रमोपन्यासः किमर्थमिति चेत् ? उच्यते, सर्वैव क्रिया प्रतिलेखनापूर्विका कर्त्तव्येति ज्ञापनार्थं प्रतिलेखनायाः पूर्वमुपन्यासः, प्रतिलेखनोत्तरकाले ग्रहणं पिण्डस्यातः पिण्डः, स हि न पात्रपात्रकबन्धादिमन्तरेण ग्रहीतुं शक्यतेऽत उपधिप्रमाणं, स च पिण्ड उपधिश्च न वसतिमन्तरेणोपभोक्तुं शक्यतेऽतोऽनायतनवर्जं, प्रतिलेखन—पिण्डग्रहणादि कुर्वतोऽनायतनवर्जनं चेच्छतः कश्चिदतिचारो भवतीत्यतिचारद्वारं, स चालोचनीयोऽत आलोचना, तदनन्तरं प्रायश्चित्तं ॥१७॥

अधुनैकैकं द्वारमाचष्टे—

आभोग-मग्गण गवेसणा य ईहा अपोह पडिलेहा ।
पेक्खण णिरिक्खणा वि अ, आलोय पलोयणेगट्ठा ॥१८॥ (मू. गा. ३)

'भुजंप् पालनाभ्यवहारयोः, मर्यादयाभिविधिना वाऽभोगनं-पालनं आभोगः प्रतिलेखना भवति, अपोहनमपोहः पृथग्भाव उच्यते, चक्षुषा निरूप्य यदि तत्र सत्त्वसंभवो भवति तत उद्धारं करोति सत्त्वानां, एकार्थिकान्यमूनि प्रतिलेखनायाः गवेषणा-मार्गणा-प्रेक्षणा-निरीक्षणा-लोकना-प्रलोकनाऽऽदीनि ॥१८॥

प तस्यैकार्थिकानि ।

आह प्रतिलेखनाग्रहणेन सैव ? किमन्यदपि ? किं तत् ? 'पडिलेहओ' इत्यादि, तदर्थं ब्रवीति—

पडिलेहओ य पडिलेहणा य, पडिलेहियव्वयं चेव ।
कुंभाईसु जह तियं, परूवणा एवमिहयं पि ॥१९॥ (मू. गा. ४)

कुम्भादिषु यथा त्रिकं वर्तते कर्ता१ कुलालः२, [1]करणं दण्डादि३, कार्यं कुटः, परस्परापेक्षया नैकमेकेनापि विना, तथा प्रतिलेखनाक्रिया कर्त्तारं प्रतिलेखकमपेक्षते, प्रतिलेखितव्याभावे उभयोरभावस्तस्मात् त्रीण्येतानि ॥१९॥

पूर्वं प्रतिलेखकः कर्तृत्वात् प्रधान इत्याह—

प्रतिलेखकभेदाः ।

एगो व अणेगो वा, दुविहा पडिलेहगा समासेणं ।
ते दुविहा णायव्वा, णिक्कारणिआ य कारणिआ ॥२०॥ (मू. गा. ५)

चशब्दाद् गच्छन्-तिष्ठन् विशेषणे चात्र द्रष्टव्ये ॥२०॥

[1] क्रिया दण्डचक्रचीवरादिभिः पा. भ.

सकारणाकारणनिर्णयार्थमाह—

असिवाई कारणिआ, णिक्कारणिआ य चक्क-थूभाई।
तत्थेगं कारणियं, वोच्छं ठप्पा उ तिण्णियरे ॥२१॥ (मू. गा. ६)

तेष्वेकानेक—सकारणनिःकारणगच्छन्तिष्ठन्—प्रतिलेखकेषु य एकः सकारणो गच्छन् तं वक्ष्ये, तिष्ठन्तु त्रयः [सकारणानेक—निष्कारणैकानेकभेदाः], तुशब्दात् स्थिता इतरेऽन्य इति ॥२१॥

कियन्ति पुनस्तान्यशिवादीनि, येष्वेकाकी भवतीत्याह—

असिवे ओमोयरिए, रायभए खुहिअ उत्तमट्ठे अ।
फिडिअ-गिलाणा-इसए, देवया चेव आयरिए ॥२२॥ (मू. गा. ७)

देवतादिकृतोपद्रवोऽशिवं[१], अवमौदरिकं—दुर्भिक्षं, राजभयं, क्षुभितः—संत्रासः[२], उत्तमार्थोऽनशनं, फिडिता—भ्रष्टो मार्गात्, ग्लानो—मन्दः, अतिशयोऽतिशययुक्तः, देवताऽऽचार्यौ प्रतीतौ ॥२२॥

अत्राद्यद्वारमाश्रित्याभिधीयते—

अशिवमेकाकित्वस्य हेतुत्वे वर्तते, तथा कर्त्तव्यं यथा तन्न भवति, केन पुनः प्रकारेणेति चेत्? स उच्यते—

१. ०कृतो ज्वराद्युप० पु। २ क्षोभः संशयः पा. भं.।

संवच्छरबारसएण होही, असिवंति ते (तइ) तओ णिंति।
सुत्तत्थं कुव्वंता, अइसयमाईहिं णाऊणं ॥२३॥ (भा. १५)

संवत्सरद्वादशकेन भविष्यत्यशिवं ज्ञात्वाऽतिशयादिभिः क्षेत्रान्निर्यान्ति सूत्रपौरुषीमर्थपौरुषीं च कुर्वन्तोऽभविष्यदशिवं देशं संक्रामन्ति ॥२३॥

[1]अतिशयाद्याह—

अइसेस देवया वा, णिमित्तगहणं सयं व सीसो वा।
परिहाणि जाव पत्तं, णिग्गमणि गिलाणपडिबंधो ॥२४॥ (भा. १६)

अतिशयोऽवध्यादिः, तदभावे भक्ता देवता कथयति, आचार्यो निमित्तमनागतार्थपरिज्ञाने हेतुर्ग्रन्थस्तं स्वयं गृह्णाति, शिष्यं ग्राहयति वा, द्वादशकेन यदा न ज्ञातं तदैकैकपरिहान्या तावद्यावत् प्राप्तमशिवं तदा निर्गमनं कार्यं। ग्लानेन प्रतिबन्धः—न निर्गमः [सर्वेषां] ॥२४॥

तस्या अशिवकारिण्याः स्वरूपमाह—

संजय–गिहि–तदुभय भद्दिआ य, तह तदुभयस्स वि अ पंता।

१ यादीना पु.।

अशिवे करणीयता-निरूपणम् ।

चउवज्जणवीसु उवस्सए य ति-परंपरा भत्तं ॥२५॥ (भा. १७)

संयतानां भद्रिका न गृहिणामित्यादिचतुर्भङ्गी[1] ज्ञेया, प्रान्ताऽभद्रिका—दुष्टा, तत्कृतग्लानः, स्वयं [वा] जातः, ग्लानप्रतिबन्धावस्थाने चतुर्वर्जना विकृत्यादीनां, चतुर्षु वा वर्जना क्षेत्रस्य संयतभद्रिका गृहिप्रान्ता इत्यादिषु भङ्गकेषु, विष्वग्-भेदेनोपाश्रयः कार्यः, त्रिपरम्परया भक्तं देयं, एको विहरति द्वितीयश्चानयति, तृतीयोऽवज्ञया भक्तं दत्ते तस्य ॥२५॥

चतुर्वर्जनामाह—

चतुर्वर्जना ग्लानोद्वर्तना विधिश्च ।

असिवे सदसं वत्थं, लोहं लोणं च तह य विगईओ ।
एयाइं वज्जिज्जा, चउवज्जणयंति जं भणिअं ॥२६॥ (भा. १८)

विकृतिः १ सदशं वस्त्रं २ लोहं ३ लवणं ४ च न ग्राह्यं । अशिवगृहीतेषु कुलेष्वाहारादि न गृह्णन्ति ॥२६॥

ग्लानोद्वर्तनादिविधिमाह—

उव्वत्तणणिल्लेवण, बीहंते अणभिओगऽभीरू य ।
अगहिअकुलेसु भत्तं, गहिए दिट्ठि परिहरिज्जा ॥२७॥ (भा. १९)



[1] संयतानां भद्रिका न गृहिणामिति १ । गृहिणां भद्रिका न संयतानामिति २ । उभयभद्रिका ३ । उभयप्रान्ता ४ सं. ।

उद्वर्त्तनं यदसावुद्वर्त्यते, निर्लेपनं यदसौ निर्लेपः क्रियते वस्त्रान्तरित–करेण, उपलक्षणात्तत्सकाशे न स्थातव्यं, बिभ्यति साधौ वैयावृत्त्यकरणेऽनभियोगः, अभीरूस्तत्र नियोज्यः, अशिवागृहीतकुलेषु भक्तं ग्राह्यं, तदभावे रोगि-दृष्टिसंपातपरिहारः कार्यः ॥२७॥

[१]पुव्वाभिग्गहवुड्ढी, विवेग संभोइएसु णिक्खिवणं।
तेऽविअ पडिबंधठिआ, इयरेसु बला सगारदुगं ॥२८॥ (भा. २०)

अशिवोपद्रुतसाधुप्रतिबन्धात् तिष्ठन्ति, तपःप्रभृतिप्राक्तनाभिग्रहवृद्धिं कुर्वन्ति, चतुर्थाभिग्राही षष्ठं करोतीत्यर्थः, तन्मृतौ विवेकः तदुपकरणपरित्यागः । अमृते तस्मिन् गमनावसरे च प्राप्ते सांभोगिकेषु–सामाचारीसमेषु निक्षेपणा मोचना, तेऽपि च ग्लानादिप्रतिबन्धस्थिताः, तदभावे इतरेष्वसांभोगिकेषु, तदभावे देवकुलिकेषु अनिच्छत्सु बलात्कारेण, [२]तदभावेऽगारिद्वयं व्रत्यव्रती वा सम्यग्दृष्टी [तत्र] तदभावे शय्यातरः यथाभद्रकमिथ्यादृष्टिः [ते]षु॥२८॥

यद्यसौ मुच्यमान आक्रोशति ततः किमित्याह––

कूयंते अब्भत्थण, समत्थभिक्खुस्स णिच्छ तद्दिवसं ।
जइ विंदघाइ भेओ, ति-दुवे-गो जाव लाउवमा ॥२९॥ (भा. २१)



१ अथ प्रतिबन्धे कर्तव्यान्तरमाह पु० । २ 'तदभावे सागारो गृहस्थः तयोर्द्वयं व्रत्यव्रतिसम्यग्दृष्टिरूपं, भद्रकमिथ्यादृष्टिरूपं वा तत्र' पु० ।

तस्मिन् ग्लाने कूजयति अव्यक्तं शब्दं कुर्वाणे समर्थः साधुरभ्यर्थ्यते 'त्वं तिष्ठ यावद्वयं निर्गच्छामः, निर्गतेषु तेन वक्तव्यं, इच्छतु भवानहमपि यामि, तस्मिन्नेच्छति तद्दिनं स्थित्वा सोऽपि छिद्रं लब्ध्वा नश्यति ।

ततः [1]संहितैर्गन्तव्यमन्यथेत्याह–याऽसौ देवता वृन्दघातिनी तदा भेदः क्रियते, त्रयः २ द्वौ २ एकैको वा यावत् अलातोपमाऽत्र, यथोल्मुककाष्ठसंघातो ज्वलति नैकैकं दारु, तथा संमिलिता हन्यन्ते नैकैकनष्टाः सन्तः, एवमशिवादेकाका स्याद् ॥२९॥ कथमेकत्र भवन्तीत्याह–

संगारो रायणिए, आलोयण पुव्वपत्तपच्छा वा ।
सोममुहिकालरत्तच्छ-ऽणंतरे एक दो विसए ॥३०॥ (भा. २२)

भेदकाले संगारः–संकेतः क्रियते यथाऽमुकत्र मिलनीयं, तत्र पूर्वं पश्चाद्वा प्राप्तस्य रत्नाधिकस्यालोचना दीयते, कियत् पुनः क्षेत्रमतिक्रमणीयं–['सोममुही'–त्यादीनि] देवताया विशेषणानि, सोममुख्यां तद्देशपरित्यागः, कालमुख्यां द्वौ देशौ, रक्ताक्ष्यां त्रयो देशास्त्याज्याः ॥३०॥

अशिवे यथैकाकी स्यात्तथा ख्यातं, दुर्भिक्षे यथा स्यात्तथाह–

अशिवे एकाकित्वं क्षेत्रातिक्रमणमर्यादा च ।

१. संहते (मुद्रित प्र०)

एमेव उ ओमम्मि, भेओ उ अलंभि गोणि दिट्ठंतो ।
रायभयं [च] चउद्धा, चरिमदुगे होइ गणभेओ ॥३१॥ (भा. २३)

एवमेव यो विधिरशिवद्वारे सोऽत्रापीति, तुशब्दो बहुसादृश्यप्रतिपादनार्थः, '*संवच्छरबारसएण होहिति ओमंपि ते तओ निंति' इत्यादि । अलाभे आहारस्य, भेदो भवति, दृष्टान्तो यथा संहतानां गवां स्वल्पतृणोदकेन न तृप्तिः, पृथग्भूतानां तु स्यात्तथैवेहापि ।

तृतीयद्वारमाह–राजेति, राजभयं चतुर्द्धा, चशब्द एवमेव 'संवच्छरबारसए' इत्यस्यार्थस्यानुकर्षणार्थः । चरमे–पश्चिमे [1]भेदद्वये भवति गणभेदः ॥३१॥

दुर्भिक्षे राजभये एकाकिभवन-विधिः ।

भेदचतुष्टयमाह—

णिव्विसउत्ति य पढमो, बिइओ मा देह भत्तपाणं तु । (प्र. से.)
तइओ उवगरणहरो, जीव (य) चरित्तस्स वा भेओ ॥३२॥ (भा. २४)

'जीय' त्ति जीवितभेदकारी चतुर्थः, उपकरणहारिजीवितचारित्रहारिणोर्गणभेदः कार्यः ॥३२॥

राजभये गण-भेद-विचारणा

॥२१॥

---

*या पूर्वं संवच्छरेत्यादिः गाथोक्ता सैवात्रावमद्वारे 'होहिति ओमंति ते तओ निंति' इति द्वितीयपादपरावर्तिता बोध्येति भावः सं.।
१ द्वये गण० पा. भ.।

आह—कथं साधूनां त्यक्तापराधानां राजभयं तदाह—

अहिमर अणिट्ठदरिसण, वुग्गाहणया तहा अणायारे।
अवहरणदिक्खणावे, आणालोए व कुप्पिज्जा ॥३३॥ (भा. २५)

अंतेउरप्पवेसो, वायनिमित्तं च सो पउसेज्जा।

अभिमरः—कश्चित्साधुवेषेण घातको भवति, ततो निर्विवेकित्वात् स राजा कुप्येत् साधुभ्यः, अभव्यत्वादनिष्टान् मुनीन् मन्यमानो दर्शनं नेच्छति, केनापि प्रत्यनीकेन 'विरुद्धा एते' इति व्युद्ग्राहितो—ज्ञापितः कुप्येत्, लोकं प्रत्यनाचारं समुद्देशादीन् दृष्ट्वा कुप्येत्, अपहरणं कृत्वा तत्प्रतिबद्धो दीक्षितः, आज्ञालोपः कश्चित् कृतो वेति कुप्येत् ॥३३॥ अन्तःपुरे प्रविश्य केनापि लिङ्गधारिणा विकर्म कृतं, वादिना वा केनचिद्भिक्षूणा पराभूतस्तन्निमितात् स राजा प्रद्विष्यात्।

चतुर्थं क्षुभितद्वारमाह—

क्षुभितद्वारम्।

खुभिए मालुज्जेणी, पलायणं जो जओ तुरिअं ॥३४॥ (भा. २५)

क्षोभे एकाकी भवति, क्षोभ आकस्मिकः संत्रासस्तत्र मालाऽरघट्टस्य पतिता, उज्जयिन्यां बहुशो मालवा आगत्य मानुषादीन् हरन्ति, अन्यदा तत्र केनचिदुक्तं माला पतिताऽन्येन सहसा प्रतिपन्नं मालवाः पतितास्ततः संक्षोभे प्रनाशनं

यः कश्चिद्यत्र स्थितः श्रुतवान् स ततो नष्टस्त्वरितम् ॥३४॥

अधुना यदुक्तं राजभयद्वारे 'वायनिमित्तं चे'ति राज्ञः कोपस्तदाह—

तस्स पंडियमाणिस्स, बुद्धिल्लस्स दुरप्पणो ।
मुद्धं पाएण अक्कम्म, वाई वाउरिवागओ ॥३५॥ (भा. २६)

आहाऽयुक्तमत्र व्याख्यानं, क्षुभितद्वारान्तरितत्वादुच्यते—निर्युक्तिग्रन्थवशाददोषः । तस्य राज्ञः पण्डितंमन्यस्य परेषां बुद्धिं लातीति बुद्धिलस्तस्य दुरात्मनः मूर्द्धानं पादेनाक्रम्य विद्यादिबलेनादर्शनीभूतः साधुर्वायुरिव ततो राजा परिभवं मन्यमानो द्वेषं यायादिति ॥३५॥

पञ्चममुत्तमार्थद्वारमाह—

णिज्जवग्गस्स सगासं, असई एगाणिओ व गच्छिज्जा ।
सुत्तत्थपुच्छगो वा, गच्छे अहवाऽवि पडिअरिउं ॥३६॥ (भा. २७)

निर्यामकपार्श्वेऽनशनार्थी द्वितीयाभावे एकाक्यपि याति, सूत्रार्थपृच्छको वा गच्छेत्, अथवा प्रतिचरितुमनशनिनम् ॥३६॥

फिडितद्वारमाह–

फिडिओ व परिरएणं, मंदगई वा वि जाव मिलेज्जा ।

फिडितः–मार्गभ्रष्टः, पथद्वयदर्शनात् संजातमोहोऽन्येनैव पथा प्रयातः, परिरयो गिर्यादेः परिहरणं, तेन वा एकाकी कश्चिदसहिष्णुर्मन्दगतिर्वा यावन्न मिलति, तावदेकाकी भवति ।

ग्लानद्वारमाह–

सोऊणं व गिलाणं, ओसहकज्जे असई एगो ॥३७॥ (भा. २८)

'सोऊणे'ति–श्रुत्वा ग्लानं संघाटकाभावे औषधादिकार्ये वा एकाक्यपि व्रजति ॥३७॥

अतिशयिद्वारमाह–

अईसेसिओ व सेहं, असई एगाणिअं पठावेज्जा । (प्र. पयट्टेज्जा)

अतिशयी वा कश्चिदभिनवप्रव्रजितं द्वितीयाभावे एकाकिनमपि तत्स्वजनोत्प्रव्राजनभयादन्यत्र प्रस्थापयति ।

देवताद्वारमाह–

देवय कलिंग रुवणा, पारणए खीररुहिरं च ॥३८॥ (भा. २९)

'देवय' इति कलिङ्गदेशेषु काञ्चनपुरे तनुगमनिकां [संज्ञाभूमिं] गच्छद्भिराचार्यैर्वृक्षाधः स्त्रीरूपेण [१]रूदती देवता-दिनत्रयान्ते [द्वितीयदिवसे] पृष्टा, तयोचे पारणे [क्षुल्लकानीतं] क्षीरं रुधिरं भविष्यतीति चिह्वात् पुरे जलप्रवाहः [प्रसेतव्यः], तत् क्षीरं पात्रे निक्षिप्य स्तोकं स्तोकं सर्वैः साधुभिर्नष्टव्यं दिशोदिशं, यत्र स्वस्वभावं तद् भवति तत्र न जलप्रवाहः, पुनस्तत्र मिलन्ति, एवमेकाकी भवति ॥३८॥

आचार्यद्वारमाह–

चरिमाए संदिट्ठो, ओगाहेऊण मत्तए गंठी ।
इहरा कयउस्सग्गो, परिच्छ आमंतिआ सगणं ॥३९॥ (भा. ३१)

चतुर्थपौरुष्यां संदिष्टस्त्वयाऽमुकत्र गन्तव्यं, स चाभिग्रही साधुः सर्वमुपकरणमुद्ग्राह्यति मात्रके ग्रन्थिं ददाति[२] मा भूद् भूयः प्रत्युपेक्षणीयं स्यात्, एवमसावाभिग्रहिकः संयन्त्र्य तिष्ठतीति, 'इहर' त्ति आभिग्राहिकाऽभावे उत्पन्ने कार्ये गुरुः कृतकायोत्सर्गः–कृतावश्यकः, परीक्षार्थं कोऽत्र मद्वचनानन्तरं प्रवर्तते इति स्वगणमामन्त्रयति ॥३९॥



१. रूदती पृष्टा. पा. भं । २. दत्त्वा मा भूत्पुन. प्रत्युपेक्षणीयमिति तिष्ठति । पु ।

विहारवेलाया-मन्योन्य-विधिः ।

कथमित्याह—

गच्छेज्ज को णु सव्वे, वऽणुग्गहो कारणाणि दीविंता ।
अमुओ एत्थ समत्थो, अणुग्गहो उभयकिइकम्मं ॥४०॥ (भा. ३२)

कतमः साधुस्तत्र गमनक्षमः १, तदनन्तरं सर्वे ब्रुवतेऽहं गच्छामि २ अनुग्रहोऽयमस्माकं, तत्राचार्यो [१]वैयावृत्त्यकरयोगवाहि—दुर्बलादीनि कारणानि दीपयित्वाऽमुकोऽत्र समर्थः, स भणत्यनुग्रहो मेऽयं, स यियासुः साधुर्ज्येष्ठ—कनिष्ठयोश्चैत्यसाधुवन्दनां करोति, कारयति च[२], यदि पर्यायेण लघुस्तदा[३] तां करोति, यदि च रत्नाधिकस्तदा तस्याऽन्ये साधवश्चैत्यसाधुवन्दनां विदधतीत्यर्थः ॥४०॥

गमने द्वितीय वारमपृच्छतो दोषाः ।

पोरिसिकरणं अहवा वि, अकरणं दोच्चऽपुच्छणे दोसा ।
सरण सुय साहु सन्ती[ण्णी], अंतो बहि अण्णभावेणं ॥४१॥

यद्यसौ सूर्योद्गमे यास्यति ततः प्रादोषिकीं कुरुते पौरुषीं, अथ रात्रिशेषे यास्यति, ततः सूत्रपौरुषीमकृत्वैव स्वपिति, तेन गच्छताऽऽचार्यः प्रच्छनीयः, द्वितीयवारामपृच्छतो दोषा इमे—स्मरणमाचार्यस्य जातं, यमे[दे]वं न

१ वैयावृत्त्यकर—दुर्बलादीनि, पु.। २. स च गुरोश्चैत्यसाधुवन्दना करोति पु.। ३. ततः शेषाणामपि पु.।

भविष्यति, 'ृतं' वा तैः किञ्चित्, यदर्थं प्रेष्यमाणोऽस्ति स तत्र नास्ति, साधुः संज्ञी वा श्रावकस्ततः स्थानादायातस्तेनाख्यातं, अभ्यन्तरतः—कस्य ? प्रतिश्रयस्य, केनचिदुक्तं [1]यथाऽस्माकमप्येवंविधाः साधवस्ततो गता मृता वा, बाह्यतोऽन्यस्मै कथ्यमानं केनचिद् 'श्रुतं' अन्यभावः उन्निष्क्रमितुकामो योऽसौ गन्ता, एतच्चाचार्याय तत्संघाटिकेनाख्यातं, ततश्च म्रियते केनापि व्याजेन ॥४१॥

बोहण अप्पडिबुद्धे, गुरुवंदण घट्टणा अ पडिबुद्धे ।
णिच्चलणिसण्णझाई, दट्ठुं चिट्ठे चलं पुच्छे ॥४२॥

तस्मिन्नचेतयति गन्तरि गीतार्थो बोधनं करोति, ततो गुरून् वन्दते, गुरावप्रतिबुद्धे शिरसा पादौ घट्टयति, प्रतिबुद्धं निश्चलं ध्यायिनं दृष्ट्वा तिष्ठेत् क्षणं ध्यानभङ्गभयात्, अथ चलोऽसौ ततः प्रष्टव्यो भगवन् ! गच्छन्नस्मि ॥४२॥

स गन्तुं प्रवृत्त इत्याह—

अप्पाहिअणुन्नाओ, ससहाओ णीइ जा पहायं ति ।
उवओगं आसण्णे, करेइ गामस्स सो उभए ॥४३॥

संदिष्टः प्राक् पश्चादनुज्ञातः ससहायो यावत्प्रभातं तावद्याति, ग्रामसमीपं गत उभयविषयमुपयोगं—मूत्रपुरीषपरित्यागं करोति, गवादिसंस्थानात् स्थण्डिलसद्भावात् ॥४३॥

१. तस्मादुक्ताद्गता वा ते साधवः पा. मं. ।

विहर्तुराचार्यवन्दनविधिः ।

विहारविधिः

एतैरपायैः प्रभातं यावत्तिष्ठति तानाह--

हिम-तेण-सावयभया, दारा पिहिया पहं अयाणंतो ।
अच्छइ जाव पभायं, वासियभत्तं च से वसभा ॥४४॥

शीत-चौर-सिंहादिभयात्, द्वाराणि ग्रामस्य पिहितानि, [फलहकं] पन्थानं न वेत्ति स, तस्य वृषभा गीतार्था वासिभक्तं-दोषान्नमानयन्ति ॥४४॥

केभ्यस्तदानीयते के च आनयन्तीत्याह—

ठवणकुल संखडीए, (प्र. इव) अणहिडंते सिणेह-पयवज्जं ।
भत्तट्ठिअस्स गमणं, अपरिणए गाउयं वहइ ॥४५॥

ये भिक्षां न पर्यटन्ति तेषां जना गौरवेण ददति, स्नेह-पयोवर्जं, न तैलममङ्गलत्वान्न घृतं परितापहेतुत्वात्, न दुग्धं भेदकत्वात् काञ्जिकविरोधित्वाच्च[१], संखडिर्भोजनकरणं, प्रभुक्तवतस्ततो गमनं भवति, अपरिणते [भक्ते] वहति गव्यूतिमात्रं, क्रोशयुगं [द्वयं] गव्यूतिः ॥४५॥

१. काञ्जिकप्रायपायित्वाच्च संयतानाम् मु. प्र. ।

तस्य गच्छतोऽयं विधिः—

अत्थंडिलसंकमणे, चल—वक्खित्तणुवउत्तसागरिए ।
पडिपक्खेसु उ भयणा, इयरेण विलंबणा लोगं ॥४६॥

स्थण्डिलादस्थण्डिलं संक्रामता साधुना पादौ रजोहरणेन प्रमार्जनीयौ, यदा सागारिकश्चलः — पथि व्रजन्, व्याक्षिप्तो-व्यापारव्यग्रः, अनुपयुक्तो—निरवधानो, यद्येवंविधस्ततो रजोहरणेन प्रमार्जयति, प्रतिपक्षेषु भजना-विकल्पना केषुचित् क्रियते केषुचिन्नैव । यदा सागारिकः स्थिरो व्याक्षिप्त उपयुक्तः साधुं प्रति भवति, तदा 'इयरेण'—इतरशब्देन रजोहरणनिषद्योच्यते, कार्पासिकेनौर्णिकेन वा पादौ प्रमार्ष्टि तां हस्तेन विलम्बमानां नयति, न तु देहं स्पर्शयति, कियतीं भुवं ? यावत्तद्दृष्टिप्रसरः, अथवेतरेण चीवरादिना पश्चात्तां (तं) गोपयति । इतरेण वा सार्थेन सह व्रजता विलम्बना कार्या, मन्दगतिना गन्तव्यम्, अदर्शनीभूते सार्थे वृक्षान्तरितोऽयं प्रमार्जयति । अत्र चल—व्याक्षिप्ता—नुपयुक्तैस्त्रिभिः पदैरष्टौ भङ्गकाः, सर्वत्रानुपयुक्ते भङ्गेऽस्ति प्रमार्जनं, तस्यानुपयुक्तत्वात्, शेषेषु नास्ति, चतुर्षु अस्ति, चतुर्षु नास्ति ॥४६॥

साधुर्मार्गमजानानः पृच्छति, तत्राऽयं विधिः—

पुच्छाए तिण्णि तिआ, छक्के पढम जयणा ति—पंचविहा ।
आउम्मि दुविह—तिविहा, तिविहा सेसेसु काएसु ॥४७॥

पृच्छायां त्रयस्त्रिका भवन्ति, पुरुषः स्त्री नपुंसकं च, एकैकस्त्रिप्रकारः, बाल–तरुण–वृद्ध–भेदात्, एवमेते त्रयस्त्रिका भवन्ति । तथा तेनैव गच्छता, षट्के–पृथिव्यादिलक्षणे प्रथमा पृथिवीकायस्य त्रिपञ्चविधा यतना, तत्र त्रिविधा सचित्तादिभेदात्, पञ्चविधा कृष्ण–नील–रक्त–पीत–शुक्लभेदात्, अथवा त्रयः पञ्चकाः पञ्चदशभेदाः, तथाहि–सचित्तः पृथिवीकायः कृष्णादिभेदात्पञ्चधा, एवं मिश्रोऽचित्तोऽपि, एवं पञ्चदशप्रकाराः स्युः । तथा चाप्काये द्विविधा त्रिविधा च, भौमा–न्तरिक्ष–भेदाद् द्विधा, सचित्तादिभेदात् त्रिधा । शेषेषु तेजो–वनस्पति–त्रसाख्येषु सचित्तादिभिस्त्रिधा ॥४७॥

आद्यद्वारमाह–

पुरिसो इत्थि–णपुंसग, एक्केक्को थेर मज्झिमो तरुणो ।
साहम्मि अण्णधम्मिअ–गिहत्थदुग अप्पणा तइओ ॥४८॥

स चैकैको नवविधोऽपि साधर्मिकोऽन्यधार्मिकश्च स्यात् । कियन्तस्तेन प्रष्टव्या इत्याह–'गिहत्थ'–साधर्मिकान्यधार्मिकगृहस्थद्वयं आत्मना तृतीयो युक्त्यान्वेषणं करोति, साधर्मिकस्य प्रत्ययिकत्वात् ॥४८॥

मार्गे पृच्छाविधिः

तदभावे किमित्याह–

साहम्मिअपुरिसासइ, मज्झिमपुरिसं अणुण्णविअ पुच्छे ।
सेसेसु होंति दोसा, सविसेसा संजईवग्गे ॥४९॥

अविधि
दोषाः ।

साधर्मिकाऽभावेऽन्यधार्मिकश्च स्यात्, मध्यमपुरुषद्वयमनुज्ञाप्य धर्मलाभपुरःस्सरं प्रष्टव्यं, अन्यधार्मिक[मध्यम]-ग्रहणं साधर्मिकविपक्षत्वादवसीयते, अत्र शेषेषु साधर्मिकाऽन्यधार्मिकमध्यमपुरुषद्वयव्यतिरिक्तेषु दोषा भवन्ति विशेषतः संयतीवर्गे ॥४९॥

के ते दोषा इत्याह–

थेरो पहं ण याणइ, बालो पवंचे ण याणई वा वि ।
पंडि–त्थि–मज्झसंका, इयरे ण याणंति संका य ॥५०॥

भ्रष्टस्मृतित्वान्न स्थविरः, बालस्तु प्रपञ्चयति केलिकिलत्वात्, न वा जानाति, अष्टवर्षादारम्य यावत्पञ्चविंश-तिकः [बालः] । पण्डकस्त्रियोर्मध्यमायाः शङ्का, इतरे वृद्ध–बाल–स्त्री–नपुंसकभेदा मार्गं न जानन्तीति शङ्का च स्यात् ॥५०॥

पथि
पृच्छाविधिः ।

क्व स्थितेन पृच्छा कार्येत्याह–

पासट्ठिओ य पुच्छेज्ज, वंदमाणं अवंदमाणं वा ।
अणुवइऊण व पुच्छे, तुण्हिक्कं मा य पुच्छिज्जा ॥५१॥

पार्श्वस्थितः पृच्छेद् वन्दमानमवन्दमानं वा, यद्यसावग्रतो गतस्ततोऽनुव्रज्य कतिचित् पदानि प्रष्टव्यः, तूष्णीं व्रजति पृच्छ्यमानोऽपि, तदा नैव पृच्छ्यः ॥५१॥

॥३१॥

पंथब्भासे य ठिओ, गोवाई मा य दूरि पुच्छिज्जा ।
संकाईया दोसा, विराहणा होइ दुविहा उ ॥५२॥

पन्थाभ्याशे समीपस्थो गोपालादिः प्रच्छनीयो, दूरस्थपृच्छायां द्रविण-बलीवर्दशृङ्गिणादिदोषाः, दूरे च गच्छतो द्विविधा विराधना–कण्टकादिभिरात्मविराधना, पृथिव्याद्याक्रमणेन संयमविराधना [च] ॥५२॥

मध्यमाऽन्यधार्मिकाऽभावे कः पृच्छय इत्याह–

असइ मज्झिम थेरो, दढस्सुई भद्दओ य जो तरुणो ।
एमेव इत्थिवग्गे, णपुंसवग्गे य संजोगा ॥५३॥

असति मध्यमपुरुषे, वृद्धो दृढस्मृतिः, स्थविराभावे तरुणः, स्वभावेनैव भद्रकः पृच्छयः, [१]एवं स्त्रीनपुंसकवर्गेऽपि संयोगाः स्युः ॥५३॥

न केवलमेतावन्त एव किन्त्वन्येऽपीत्याह–

एत्थं पुण संजोगा, होंति अणेगा विहाणसंगुणिआ ।
पुरिसित्थिणपुंसेसुं, मज्झिम तह थेर–तरुणेसु ॥५४॥

१ 'प्रथमं मध्यमवयाः स्त्री प्रष्टव्या, तदभावे स्थविरा, तदभावे भद्रिका तरुणी, एवं नपुंसकेऽपि' पु. ।

अत्र पृच्छाप्रक्रमे संयोगा भवन्त्यनेके, विधानेन—भेदप्रकारेण संगुणिताश्चारणिकया अनेकशो भिन्ना इत्यर्थः, यथा पु.सा.म.वृ.बा. एवंविधौ द्वौ द्वौ प्रष्टव्यौ एवं ६ [1]भङ्गाः ।

[2]द्विकसंयोगेपु.सा.म.वृ.१, पु.सा.म.बा.२, इत्यादि १५ भङ्गाः, सर्वे २१, एवं स्त्री—नपुंसकवर्गेऽपि, एवं सर्वे संमिलिताः ६३ स्युः। पुनरपि पुरुषषड्भेदाः, स्त्रीषड्भेदगुणने ३६, यथा—पु.सा.म.स्त्री.सा.म.१, पु.सा.म.स्त्री.सा.वृ.२, पु.सा.म.स्त्री.सा.बा.३ इत्यादि । एवं पुरुषषड्भेदा नपुंसकषड्भेदगुणने ३६ एवं सर्वे संमिलिता १७१ भेदाः पृच्छायां भवन्ति । उक्तं पृच्छाद्वारम् ॥५४॥

'छक्के पढमजयण'त्ति विवृणोति—

तिविहो पुढविक्काओ, सच्चित्तो मीसओ अ अच्चित्तो ।
एक्केक्को पंचविहो, अच्चित्तेणं तु गंतव्वं ॥५५॥

अचित्तेन गन्तव्यमुत्सर्गेण ॥५५॥ पृथिवीकायस्य भेदानाह—



१ (1) पुरुषौ साधर्मिकौ मध्यमवयस्कौ (2) पुरुषौ साधर्मिकौ वृद्धौ, (3) पुरुषौ साधर्मिकौ बालौ (तरुणौ), (4) पुरुषौ अन्यधार्मिकौ मध्यमवयस्कौ (5) पुरुषौ अन्यधार्मिकौ वृद्धौ, (6) पुरुषौ अन्यधार्मिकौ बालौ (तरुणौ) ।

२ (1) पुरुषः साधर्मिको मध्यमो वृद्धश्च । (2) पुरुषो साधर्मिको मध्यमो बालश्च एवं द्विकसंयोगे पञ्चदशभेदाः ।

सुकोल्ल–उल्ल–गमणे, विराहणा दुविह सिग्ग–खुप्पंते ।
सुक्कोवि अ (प्र. सुक्केणवि) धूलीए, ते दोसा भट्ठिए गमणं ॥५६॥

द्वयोः शुष्कार्द्रयोः शुष्केन गन्तव्यम्, आर्द्रगमने द्विधाऽऽत्म–संयमविराधना, कण्टकवेध–त्रसादिपीडनात् । 'सिग्ग'त्ति श्रमो भवति, 'खुप्पंते'त्ति कर्दमे निमज्जति, शुष्केऽपि धूलीबहुले (पथि) त एव दोषा आत्म–संयम-विराधनादयः, अक्ष्णोर्धूलिः प्रविशति, तत्कृतमलिनवस्त्रक्षालनेऽसामाचारी, अन्यथा हीलना, भ्राष्ट्या रजोरहितया भुवा गन्तव्यम् ॥५६॥ अधुनाऽऽर्द्रस्य पृथ्वीकायस्य भेदानाह——

तिविहो उ होइ उल्लो, महुसित्थो पिंडओ य चिक्खल्लो ।
लत्तपहलित्त उंडअ, खुप्पिज्जइ जत्थ चिक्खिल्लो ॥५७॥

आर्द्रस्त्रिविधः– '१ महुसित्थो २ पिंडओ अ ३ चिक्खल्लो, एतेषां स्वरूपमाह—'लत्त'–अलत्तो—अलक्तकः, 'पथः' येन प्रदेशेनाऽलक्तकः कामिन्या पात्यते तावन्मात्रं यो लिम्पति कर्दमः, स मधुसिक्थकोऽभिधीयते, उण्डकाः – पिण्डकाः तद्रूपो यो भवति–पादयोः पिण्डरूपतया यो लाति स पिण्डकः, यत्र निमज्जनं स्यात् स चिक्खल्लः ॥५७॥



अथ स मार्गः सप्रत्यपायो निःप्रत्यपायश्च स्यात्, प्रत्यपायानाह——

पच्चवाया वालाइ–सावया तेण–कंटगा मेच्छा ।
अक्कंतमणक्कंते, सपच्चवाएयरे चेव ॥५८॥

प्रत्यपाया—व्यालादिश्वापदाः स्तेनकण्टकम्लेच्छाः । एवं पूर्वं शुष्केनाक्रान्तनिःप्रत्यपायेन [आष्टया] गन्तव्यम् ॥५८॥ तदभावे किमित्याह——

तस्साऽसइ धूलीए, अक्कंत-निपच्चवएण गंतव्वं ।
मीसग-सच्चित्तेसुऽवि, एस गमो सुक्क-उल्लाइं ॥५९॥

आष्टयभावे धूलीपथेन गन्तव्यम्, आक्रान्तनिःप्रत्यपायेन, एषोऽचित्तपृथिवीकायविधिरुक्तः । तदभावे मिश्रेण, तदभावे सचित्तेन, तत्राप्येष एव विधिः शुष्कार्द्रादिः । एतदुक्तं भवति-पूर्वं मिश्रशुष्केन, तदभावे मिश्रार्द्रेण, तदभावे [1]सचित्तार्द्रेण ॥५९॥

इदानीं साधुः स्थण्डिलादस्थण्डिलं क्रामन् कस्मिन् काले केन प्रमार्जनं करोतीत्याह——

उडुबद्धे रयहरणं, वासावासासु पायलेहणिआ ।
वड-उंबरे पिलंखू, तस्स अलंभंमि चिंचिणिआ ॥६०॥

ऋतुबद्धे-शीतोष्णकाले रजोहरणेन पादौ प्रमार्जयति, वर्षासु यावद्वर्षा वर्षाकाले वर्षति सति पादलेखनिकया पादप्रमार्जनं कर्तव्यम् । वटमयी उदुम्बरमयी प्लक्षमयी तदभावे चिञ्चिणिकामयी—अम्बिलिकामयीति ॥६०॥

गमन—प्र

पादलेख तस्या मान

॥३५॥

१ अथवा 'एस गमो' त्ति " अक्कंताणक्कंतसपच्चवायमेयभिन्नो जोएयव्वो, सव्वत्थ सपच्चवायो परिहरणीओ त्ति " एष विधिः मु. प्र. ।

सा च कियत्प्रमाणेत्याह----

बारसअंगुलदीहा, अंगुलमेगं तु होइ विच्छिन्ना ।
घणमसिणनिव्वणा वि अ, पुरिसे पुरिसे य पत्तेयं ॥६१॥

सा च घना–निबिडा कार्या, मसृणा–निर्व्रणा भवति [प्रति]पुरुषमेकैका ॥६१॥

उभओ नहसंठाणा, सच्चित्ताचित्तकारणा मसिणा ।

उभयोः– पार्श्वयोर्नखवत्तीक्ष्णा, तस्या एकेन पार्श्वेन सचित्तपृथिवीकायोऽन्येनाचित्तपृथिवीकायः संलिख्यते । संलिखत आत्मविराधनाभयान्मसृणा । अप्कायद्वारमाह—

आउक्काओ दुविहो, भोमो तह अंतलिक्खो य ॥६२॥

द्विधाऽप्कायो भौमोऽन्तरिक्षश्च ॥६२॥ प्रत्यासत्तिन्यायादन्तरिक्षज उच्यते—

महिआ–वासं तह (प्र. पुण) अन्तरिक्खिअं दट्ठु तं ण णिग्गच्छे ।
आसण्णाओ णियत्तइ, दूरगओ घरं च रुक्खं वा ६३॥

सोऽन्तरिक्षजो द्विविधो–धूमिकारूपो वर्षारूपश्चाप्कायः, तं दृष्ट्वा न निर्गच्छेत् । निर्गतस्य जातं महिकावर्षं तत आसन्ने भूभागे निवर्तते, अथ दूरं गतस्ततः शून्यं गृहं वृक्षं वाऽऽश्रित्य तिष्ठति ॥६३॥

सभए वासत्ताणं, अच्चुदए सुक्खरुक्ख तरणं वा ।
णइ-कोप्पर-वरणेणं, भोमे पडिपुच्छि आगमणं ॥६४॥

सभए-स्तेनादिभयोपेते वर्षात्राणं प्रावृत्य व्रजति, अत्युदके शुष्कवृक्षारोहणं कर्तव्यं, स नास्ति, ततस्तरण्डं गृहीत्वा तरति, उक्तोऽन्तरिक्षजः । इतरमाह-यद्यग्रे नदी स्यात् वक्ररूपा, तदा नदीकूर्परेण व्रजति, [नदीं परिहृत्य इत्यर्थः] अथ वरणेन सेतुबन्धेन याति । एवं भौमे प्रतिपृच्छ्य कश्चित्पुरुषं गमनं कर्तव्यं ॥६४॥

वरणेन कीदृशेनेत्याह—

णेगंगि-परं-परपारिसाडि-सालंबवज्जिए सभए ।
पडिवक्खेण उ गमणं, तज्जाइयरे व संडेवा ॥६५॥

न एकाङ्गी-अनेकाङ्गी-अनेकेष्टिकादिनिर्मितः, 'परंपर' इति परम्परप्रतिष्ठः-व्यवधानप्रतिष्ठः, 'परिसाडी'त्ति गच्छतो यत्र धूल्यादि पतति, 'सालंबवज्जिए'ति सावष्टम्भलग्नरहितः, सभयः (यत्र व्यालादयः शुषिरेषु सन्ति)। यद्येभिर्गुणैर्युक्तः स्यात् तदा न गन्तव्यं, संक्रमे तस्मिन् प्रतिपक्षेन-एकाङ्गयपरम्परादिना गन्तव्यम् । भङ्गाश्चात्र

पद्पञ्चकनिष्पन्नत्वात् द्वात्रिंशद्यथा [१]स्थापना—

| | | | |
|---|---|---|---|
| S S S S S | S S S I S | S S S S I | S S S I I |
| I S S S S | I S S I S | I S S S I | I S S I I |
| S I S S S | S I S I S | S I S S I | S I S I I |
| I I S S S | I I S I S | I I S S I | I I S I I |
| S S I S S | S S I I S | S S I S I | S S I I I |
| I S I S S | I S I I S | I S I S I | I S I I I |
| S I I S S | S I I I S | S I I S I | S I I I I |
| I I I S S | I I I I S | I I I S I | I I I I I |

अथ संक्रमो नास्ति ततः 'संडेव'त्ति सण्डेवको—ग्रावा, स द्विविधः— तज्जात इतरश्च, तस्यामेव भुवि जातः स तज्जातः, इतरोऽन्यत आनीय तत्र निहितः ॥६५॥ स चैकैकस्त्रिविधः तदाह—

१ अणेगंगिओ परपरो परिसाडी सालंबणवज्जिओ सभउ' त्ति प्रथमो भङ्गः, 'एगंगि परंपरो' इत्यादि द्वितीयो भङ्गः, एवमन्ये सर्वे भङ्गा- योजनीयाः । अत्र 'परंपर' स्थाने 'चलऽथिर'त्ति पाठान्तरं विद्यते, तेन षड्भिः पदैः चतुःषष्टिभङ्गाः, णेगंगि चलो अथिरो पारिसाडी सालंबणवज्जिए सभए' एष प्रथमो भङ्गः एवमन्ये (सं०) ।

चलमाणमणक्कंते (प्र. मईक्कंते), सभए परिहरिअ गच्छ इयरेणं ।
दगसंघट्टणलेवो, पमज्ज पाए अदूरंमि ॥६६॥

चलमानाऽनाक्रान्तसभयभेदास्त्रिधा [०भयभेदात् त्रिधा] स खण्डेवकः—पाषाणः, तं परिहृत्येतरेणाऽचलाऽऽक्रान्ताऽभयेन गन्तव्यम्, अत्र पदत्रयेणाऽष्टौ[१] भङ्गाः । संक्रमाभावे उदकेन गन्तव्यं, तत्राऽयं विधिः— उदकसंघट्टे, लेपेऽदूरे तीरे पादौ प्रमृज्योत्तरति ॥६६॥ चतुर्द्धा जलं तदाह—

पाहाणे महुसित्थे, वालुअ तह कद्दमे य संजोगा ।
अक्कंतमणक्कंते, सपच्चवाएयरे चेव ॥६७॥

पाषाणजलं यत्—पाषाणानामुपरि वहति, मधुसिक्थकजलम् अलक्तकमार्गावगाहि कर्दमस्योपरि वहति, वालुकाजलं—वालुकाया उपरि वहति, अत्र पाषाणजलादेराक्रान्ताऽनाक्रान्तसप्रत्यपायनिःप्रत्यपायैः संयोगाः कर्त्तव्याः । चतुर्विधे जले चतुर्भङ्गी ज्ञेयाऽऽक्रान्तादिभेदेन ॥६७॥ जलसंघट्टादिलक्षणमाह—

जंघद्धा संघट्टो, णाभी लेवो परेण लेवुवरिं ।
एगो जले थलेगो, णिप्पगले (प्र. लण) तीरमुस्सग्गो ॥६८॥

१ तेषा चैपा स्थापना । | १ऽऽऽ | २ऽऽ। | ३ऽ।ऽ | ४ऽ।। | ५।ऽऽ | ६।ऽ। | ७।।ऽ | ८।।। |

जंघार्द्धमात्रप्रमाणं जलं-संघट्टः, नाभिप्रमाणं-लेपः, नाभिपरेण लेपोपरि जलमुच्यते । संघट्टेऽयं विधिः- एकः पादो जलेऽन्यः स्थले-आकाशे [वा] कर्त्तव्यः, अथ तीरप्राप्तविधिः- तीरे एको जलेऽन्य आकाशे निःप्रगलन्नास्ते, पादः पुन आश्यानः स्थले, द्वितीयं निष्प्रगलं कृत्वा तीरे कायोत्सर्गं करोति ॥६८॥ नाभिप्रमाणेऽयं विधिः—

णिभए-ऽगारित्थीणं तु, मग्गओ चोलपट्टमुस्सारे ।
सभए अत्थग्घे वा, ओइण्णेसुं घणं पट्टं ॥६९॥

निर्भये जले सत्यहरणशीलत्वाद्व्यालादिरहितत्वाच्चागाराणां स्त्रीणां च मार्गतः-पृष्ठतो गच्छता चोलपट्ट-उपर्युत्सारणीयः, सभयेऽस्ताघे(अगाधे)जलेऽवतीर्णेषु कियत्सु मध्ये स्थितो याति, चोलपट्टं घनं निबिडं करोति, यथा जलेन नापह्रियते ॥६९॥

दगतीरे ता चिट्ठे, णिप्पगलो जाव चोलपट्टो उ ।
सभए पलंबमाणं, गच्छइ काएण अफुसंतो ॥७०॥

सभये प्रलम्बमानं नयति चोलपट्टं शरीरेणास्पृशन् विराधनाभयात् ॥७०॥ नद्यामवतरतो गृहस्थाभावेऽयं विधिः—

असइ गिहि णालियाए, आणक्खेउं पुणोऽवि पडियरणं ।
एगाभोग पडिग्गह, केई सव्वाणि णय पुरओ ॥७१॥

गृहस्थाभावे नालिकया आत्मप्रमाणाधिकचतुरङ्गुलया यष्टिकया "आणक्खेउ"—परीक्ष्य पुनः प्रतिचरणा—आगमनं करोति, आगत्य [च] आभोगः— उपकरणं 'एक'त्ति एकत्र बध्नाति, पतद्ग्रहं पृथगधोमुखं पात्रक बन्धे बध्नाति तरणार्थं, केचिदेवमाहुः— सर्वाण्येव पात्रकाण्यधोमुखानि चीरेण बध्यन्ते तरणार्थम् । एष एव विधिर्नावं चटतोऽपि, न च पुरतः—प्रथमं चटति प्रवर्त्तनाधिकरणदोषात्, चशब्दान्न पृष्ठतः, अर्द्धचटतो वहति तस्मादारूढेषु स्तोकेष्वारोहति ॥७१॥

सागारं संवरणं, ठाणतिअं परिहरित्तुऽणावाहे (प्र. ते)।

ठाइ णमोकारपरो, तीरे जयणा इमा होइ ॥७१॥

सागारं संवरणं-प्रत्याख्यानं करोति चटन्, स्थानत्रयं त्यक्त्वा तिष्ठति—नावादेवताधिवासत्वान्न पुरतः, अवल्लग-[क]वाहण[न]—भयान्न मार्गतः— पृष्ठतः, उदकोल्लिचनभयान्न मध्ये, अपि तु पार्श्वेन नमस्कारपरस्तिष्ठति ॥७२॥ तीरे इयं यतना—

णवि पुरओ णवि मग्गओ, मज्झे उस्सग्ग पण्णवीसाउ ।

दइउदयं तुंबेसु अ, एस विही होइ संतरणे ॥७३॥

न पुरतो, न मार्गतः, गृहस्थमध्यस्थितेनोत्तरणीयं, तीरे कायोत्सर्गः पञ्चविंशत्युच्छ्वासप्रमाणः कर्त्तव्यः, नाव-

भावे दृति-उडुप-तुम्बकादिभिस्तरणे कायोत्सर्गः कर्तव्यः । अत्राप्काये मिश्राचित्तयतना नोक्ता छद्मस्थेन [1]तयोस्तत्त्वतो ज्ञातुमशक्यत्वात्, यो ज्ञास्यति स करिष्यत्येव, उक्तमप्कायद्वारम् ॥७३॥ अथ तेजस्कायस्तत्राह—

वोलीणे अणुलोमे, पडिलोमऽद्देसु ठाइ तणरहिए ।
असई य ग(क)त्तिणंतग उल्लण (प्र.ग) तलि(डि)गाइ डेवणया ॥७४॥

यदि तस्य साधोर्गच्छतो वनदवोऽनुकूलो भवति—यदभिमुखं साधुर्गच्छति तदभिमुखमग्निरप्येतीत्यर्थः । ततस्तस्मिन् व्युत्क्रान्ते सति गन्तव्यं, यदा स प्रतिलोमोऽभिमुखमायाति, तदार्द्रेषु प्रदेशेषु तृणरहितेषु च तिष्ठति, तदभावे 'कत्तिणं' ति कृत्तिश्चर्म तेनात्मानमावृणोति, तदभावेऽनन्तकं—कम्बलादिवस्त्रं तदार्द्रीकृत्याऽऽवृणोति, ततस्तिष्ठति । अथ गच्छतो बहुगुणं ततः 'तडि[लि]गा' इति उपानहौ परिधाय डेवनं—लघङ्नं वह्नेः करोति, यदा विध्याते याति तदाऽचित्ततेजस्काययतना, यद्युपानहौ परिधाय याति तदा सचित्तो मिश्रो वा, एषा त्रिप्रकारा यतना । उक्तं तेजः ॥७४॥ अधुना वायुः—

जह अंतरिक्खमुदए, णवरि णिअंबे अ वणणिगुंजे य ।
ठाणं समए पाउरण—घणकप्पमलंबमाणं तु ॥७५॥

[1] मिश्राचित्तयोः ।

यथान्तरिक्षोदकयतनोक्ता, 'आसन्ना उ' इत्यादि० [६३ गा. तृतीयचरणे] सा इहापि दृश्या, 'नवरि'त्ति अयं विशेषः 'नितम्बे'-पर्वतैकदेशे 'वननिकुञ्जे वा स्थेयं, यदि प्रदेशः सभयः 'पाउरण'-प्रावृत्य घनं कल्पं-कम्बलादिरूपकं गच्छति, 'अलंबमाणं तु' यथा कोणो न प्रलम्बते, तत्र वायौ कल्पप्रावृतशरीरस्य सचित्तयतना, अप्रलम्बं कल्पं कुर्वतोऽचित्तयतना, प्रावृतस्यैव मिश्रापि, एषा त्रिप्रकारा यतना ॥७५॥ वनस्पतिद्वारमाह—

तिविहो वणस्सई खलु, परित्तऽणंतो थिराथिरेकेक्को ।
संजोगा जह हेट्ठा, अक्कंताई तहेव इहिं ॥७६॥

त्रिविधो वनस्पतिः । सचित्ताचित्तमिश्ररूपः । एकैको द्विधा-परित्तोऽनन्तश्च, स्थिरो-दृढसंहननः । इतरोऽस्थिरः । संयोगा, यथा 'हिट्ठा' पश्चादाक्रान्तानाक्रान्तसप्रत्यपायादयस्तथैवात्रापि, अचित्त-परित्त-थिर-अक्कंत-निपच्चवाएणं गम्मइ एसो सुद्धो पढमभंगो, सेसा एगतीसं भंगा जहासमयं भइयव्वा ॥७६॥ त्रसद्वारमाह—

तिविहा बेइंदिया खलु, थिरसंघयणेयरा पुणो दुविहा ।
अक्कंताई य गमो, जाव उ पंचिंदिआ णेआ ॥७७॥

त्रिधा द्वीन्द्रियाः सचित्तादिभेदात्, सचित्ताः सकलजीवप्रदेशवन्तः, अचित्ता विपर्ययात्, मिश्राः करम्बीभूताः, पुनरेकैको द्विधा-स्थिरसंहननोऽस्थिरसंहननश्च, आक्रान्तादिर्गमो-भङ्ग इत्यनेन चतुर्भङ्गी । अयं क्रमस्त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियाणां सचित्तादिर्योजनीयः ॥७७॥ एवं सजातीययतनोक्ता, विजातीयेन सहाऽऽह—

पुढविदए य पुढवीए, उदए पुढवितसवालकंटा य ।
पुढविवणस्सइकाए, ते चेव णु पुढविए कमणं ॥७८॥

पृथिव्युदकयोर्युगपद्गमने प्राप्ते पृथ्व्यां गम्यम्, उदके पृथिवीत्रसादिसद्भावात्, चशब्दाद्वनस्पतेश्च । पृथिवी-वनस्पत्योः पृथिव्यैव गन्तव्यं, वनस्पतौ तद्दोषसंभवात् ॥७८॥

पुढवितसे तसरहिए, णिरंतरतसे सुपुढविए चेव (प्र. गमणं) ।
आउवणस्सइकाए, वणेण णियमा वणं उदए ॥७९॥

पृथिवीत्रसयोस्त्रसरहिते–विरलत्रसेषु गम्यं, निरन्तरेषु तु पृथिव्याम् । अप्कायवनस्पत्यो–र्वनस्पतिना गम्यम् उदके नियमाद्वनस्पतिसद्भावात् ॥७९॥

तेऊ–वाउ–विहूणा, एवं सेसावि सव्वसंजोगा ।
णच्चा विराहण–दुगं, वज्जंतो जयसु उवउत्तो ॥८०॥

तेजस्कायवायुकायाभ्यां रहिताः शेषा अपि सर्वसंयोगा अन्येप्यनुक्ता भङ्गा ज्ञेयाः। सर्वथात्म–संयम–विराधना-द्वयं ज्ञात्वा द्वयं वर्जयेत्। उपयुक्तो यतस्व यतनां कुर्विति । यदुक्तं 'एवं सेसावि सव्व संजोगा' ते चामी–पृथिव्यप्वनस्पति–त्रसेषु द्विकसंयोगाः ६, त्रिक सं. ४, चतुष्क सं. १ एवं ११ अचित्ते लब्धाः । एवं मिश्रैः ११, सचित्तैश्च ११,

सर्वे ३३, उक्ता षट्कायतना ॥८०॥ प्राह्यऽन्यतरविराधनामन्तरेण प्रवृत्तिरेव न स्यात् तदा किं स्यात् इत्याह—

सव्वत्थ संजमं संजमाउ अप्पाणमेव रक्खिज्जा (प्र. क्खंतो)।
मुच्चइ अइवायाओ, पुणो विसोही ण याविरई ॥८१॥

सर्वत्र संयमरक्षा कार्या तदभावेऽभिप्रेतार्थसिद्धयसिद्धेः, संयमादप्यात्मानमेव रक्षेत्, आत्माभावे तत्प्रवृत्त्यसिद्धेरात्मानमेव रक्षन्मुच्यतेऽतिपाताद्—हिंसादिदोषाद्, पुनस्तपसादिना विशुद्धिर्भवेत् । अथ मन्यसे पृथिव्याद्यतिपातोत्तरकालं विशुद्धिर्भवतु, किन्तु हिंसायां वर्तमानोऽविरतो लभ्यत इत्येकव्रतभङ्गे सर्वव्रतभङ्गः ? तदेतन्नास्ति, नचाविरतिः तस्याशयविशुद्धतया विशुद्धपरिणामत्वात् । ॥८१॥ संयमादप्यात्मा रक्षितव्यः, किमर्थमित्याह—

संजमहेउं देहो, धारिज्जइ सो कओ उ तदभावे ?।
संजमफाइणिमित्तं, च देहपरिपालणा इट्ठा ॥८१॥

स च [संयमः] कुतस्तदभावे—देहाभावे, ततः संयमस्फातिनिमित्तं देहपरिपालनमिष्टम् ॥८१॥ पर आह—

चिक्खल्ल—वाल—सावय—सरेणु—कंटय तणे बहुजले अ ।
लोगोऽवि णेच्छइ पहे, को णु विसेसो भयंतस्स ॥८२॥

चिक्खल्ल—व्याल—श्वापद—सरेणु—कण्टक—तृणान् बहुजलान् सोपद्रवपथो लोकोऽपि नेच्छति, को नु विशेषो ? लोकात्

संयमाद् रक्षितव्यः

सकाशाद् भदन्तस्य येनैवमुक्तम् ? उच्यते—

जयणमजयणं च गिही, सचित्तमीसे परित्तऽणंते अ ।
णवि जाणंति ण यासिं, अवहपइण्णा अ (प्र.इ.)ह विसेसो ॥८३॥

यतनामयतनां सचित्तादौ गृहिणो न जानन्ति, नवैतेषामवधप्रतिज्ञा, अत एव विशेषः ॥८३॥ किं च—

अविअ जणो मरणभया, परिस्समभया व ते विवज्जेइ ।
ते पुण दयापरिणया, मोक्खत्थमिसी परिहरंति ॥८४॥

'ते' त्ति साऽपायान् पथः ॥८४॥ प्राणातिपाताऽऽपत्तावपि साधोर्गृहिणा सह वैधुर्यमाह—

अविसिट्ठंमिवि जोगंमि, बाहिरे हो विहुरयाइ इहरा ।
सुद्धस्स उ संपत्ती, अफला जं देसिआ समए ॥८५॥

अविशिष्टेऽपि—तुल्येऽपि योगे प्राणातिपातादौ बाह्ये—बहिर्वर्तिनि, भवति विधुरता—विसदृशता, इतरथा शुद्धस्य साधोः संप्राप्तिः—प्राणातिपातापत्तिरफला यत्प्रदर्शिता समये तद्विरुध्यते ॥८५॥

एक्कंमिवि पाणिवहंमि, देसिअं सुमहदंतरं समए ।
एमेव णिज्जरफला, परिणामवसा बहुविहीआ ॥८६॥

एकस्मिन्नपि—तुल्ये[ऽपि] प्राणिवधे दर्शितं सुमहदन्तरं समये, यथा द्वौ पुरुषौ प्राणिवधे प्रवृत्तौ, मृत्त्वैकोऽतिसंक्लिष्टपरिणामतया सप्तमे नरके, अन्यो नातिसंक्लिष्टतया द्वितीये उत्पन्नः, एवमेव निर्जराफलविशेषाः परिणाम-विशेषाद्बहुविधा भवन्ति, विशिष्ट—विशिष्टतर—[विशिष्ट]तमाः। एकां प्राणिजातिमङ्गीकृत्योक्तम् ॥८६॥ सकलव्यक्त्याश्रयमन्तरमाह—

जे जत्तिआ अ हेऊ, भवस्स ते चेव तत्तिआ मुक्खे।
गणणाईया लोगा, दुण्हवि पुण्णा भवे तुल्ला ॥८७॥

ये यावन्तो भवस्य हेतवो भवन्ति त एव नान्ये (तावन्मात्रा एव) मोक्षस्य, गणनातीता द्वयोर्भवमोक्षयोः सम्बन्धिनां हेतूनामसंख्येया लोकाः पूर्णाः, तत्र पूर्णाः भृताः, एकहेतुन्यूना अपि स्युरतः पूर्णास्तुल्याः— सदृशाः क्रियाविशेषणम् ॥८७॥ येषाममी त्रैलोक्यप्रदार्था भवाय मोक्षाय भवन्ति तदाह—

एरिआवहमाईआ, जे चेव हवंति कम्मबंधाय।
अजयाणं ते चेव उ, जयाण णिव्वाणगमणाय ॥८८॥

ईर्यापथाद्या व्यापारा य एव कर्मबन्धायाऽयतनापराणां भवन्ति, त एव यत्नवतां मोक्षाय, एवं साधोर्गृहस्थेन सह विसदृशतोक्ता ॥८८॥ सजातीयमेव साधुमाश्रित्य तामाह—

ये भवस्य
ते मोक्ष.

एगंतेण णिसेहो, जोगेसु ण देसिओ विही वावि ।
दलिअं पप्प णिसेहो, होज्ज विही वा जहा रोगे ॥८९॥

योगेपु–गमनागमनादिव्यापारेषु निषेधः स्वाध्यायादौ विधिर्वा न दर्शितः, किन्तु दलिकं–वस्तु प्राप्य विज्ञाय निषेधो विधिर्वा भवेत्, कस्यचित् साधोराचार्यादिप्रयोजने सचित्तेऽपि पथि व्रजतो गमनमनुज्ञायते कारणिकत्वात् नान्यस्य, यथा रोगे–ज्वरादौ परिपाचने भोजनादेर्निषेधः, जीर्णज्वरे तस्यैव विधिः क्रियते ॥८९॥ अथैकमेव वस्त्वा-सेव्यमानं बन्धाय मोक्षाय[वा] कथं भवतीत्याह––

जंमि णिसेविज्जंते, अइआरो होज्ज कस्सइ कयाए ।
तेणेव य तस्स पुणो, कयाए सोही हवेज्जाहि ॥९०॥

यस्मिन् वस्तुनि क्रोधादौ निषेव्यमानेऽतिचारः कस्यचित्साधोः, कस्याञ्चिदवस्थायां तेनैव तस्य शुद्धिरिति, चण्डरुद्रसाधोरिव, तेन हि स्वशिष्यो दण्डेन ताडितः, तं रुधिरार्द्रं दृष्ट्वा पश्चात्तापवान् संवृत्तः केवली जात इति ॥९०॥ अथ बाह्यो व्यापारो यथा बन्धहेतुर्न स्यात् तथाऽऽह––

अणुमित्तोऽवि ण कस्सई, बंधो परवत्थुपच्चओ भणिओ ।
तहवि अ जयंति जइणो, परिणामविसोहीमिच्छंता ॥९१॥

अणुमात्रोऽपि—स्वल्पोऽपि बन्धो न बाह्यवस्तुनिमित्ताद् भणितः, किन्त्वात्मपरिणामादेव, आह—यद्येवं न पृथिव्यादि यतना कार्या ? उच्यते—यद्यपि बन्धो न भवति तथाऽपि यत्नं विदधति मुनयः । पृथिव्यादौ विशुद्धपरिणाममभिलषन्तः ॥९१॥ यस्तु हिंसायां वर्त्तते तस्य परिणाम एव न शुद्ध इत्याह—

जो पुण हिंसायणेसु, वट्टई तस्स णणु परीणामो ।
दुट्ठो ण य तं लिंगं, होइ विसुद्धस्स जोगस्स ॥९२॥

यः पुनर्हिंसायतनेषु—हिंसास्थानेषु वर्तते, ननु तस्य परिणामो दुष्टः, न च तद्धिंसास्थानवर्तित्वं लिङ्गं विशुद्धपरिणामस्य ॥९२॥

तम्हा सया विसुद्धं परिणामं इच्छया सुविहिएणं ।
हिंसाययणा सव्वे, परिहरियव्वा (प्र. वज्जेयव्वा) पयत्तेणं ॥९३॥

स्पष्टा ॥९३॥ तथा च—

वज्जेमित्ति परिणओ, संपत्तीए विमुच्चई वेरा ।
अविहिंतोऽवि न मुच्चइ, किलिट्ठभावो तिवातस्स ॥९४॥

वर्जयाम्यहं प्राणिवधादीत्येवं परिणतः सन् प्राणातिपातसंप्राप्तावपि विमुच्यते वैरात्-कर्मबन्धात्, यस्तु क्लिष्ट-

परिणामः सोऽव्यापादयन्नपि न मुच्यते वैरात्, उक्ता षट्काययतना ॥९४॥ इदानीं गच्छन् ग्रामादौ प्रविशति तत्र का सामाचारीत्याह --

पढमबिइया गिलाणे, तइए सण्णी चउत्थ साहम्मी ।
पंचमियंमि अ वसही, छट्ठे ठाणट्ठिओ होइ ॥९५॥ दारं

प्रथमद्वारे द्वितीयद्वारे च ग्लानविषया यतना, तृतीये श्रावकः, चतुर्थे साधर्मिकः साधुः, पञ्चमे वसतिः षष्ठेद्वारे वर्षाप्रतिघातात् स्थानस्थितो भवति । आह—तृतीये षडर्थाधिकारा भविष्यन्ति, ततः किं केवलः संज्ञी संगृहीतः ? उच्यते—तुलामध्य[1]ग्रहणन्यायेन शेषाण्यपि गृहीतानि ॥९५॥ नन्वस्यातित्वरिताचार्यकार्यप्रवृत्तत्वात् कोऽवसरो ग्रामप्रवेशने ? उच्यते—

एहिअपारत्तगुणा, दुन्नि य पुच्छा दुवे य साहम्मी ।
तत्थेक्केक्का दुविहा, चउहा जयणा दुहेक्केक्का (पडिदारगाहा) ॥९६॥

तस्य ग्रामे प्रविशत ऐहिका भक्तपानादयः, परत्रगुणा ग्लानादिप्रतिजागरणादयः, प्रविशतस्तस्य पृच्छा द्विधा विध्यविधिभेदेन भवति, साधर्मिकाश्च सांभोगिकान्यसांभोगिकभेदेन द्विधा, (तत्रपुनरेकैको द्विविधः) एकानेकभेदेन,

१ वइएत्यादि० पदस्थचशब्दा न्महानिनादनामकं द्वारमाक्षिप्यते, तेन संज्ञीद्वारस्य मध्यता स्पष्टा । अथवा संज्ञीतरेषा वर्णनमग्रे भविष्यतीति ज्ञेयम् ॥(सं०)

चतुर्विधा यतना—[1]सांभोगिकसंयतसंयतस्य[2]सांभोगिक[3]संयत—[4]संयतीभेदात्,(पुनरपि)एकैको द्विधा संयतसंयती[1]भेदात्, चतुर्विधा यतना—द्रव्यादिः, एकैका द्विधा,—तत्र द्रव्यतः प्रासुकेन तदभावेऽप्रासुकेन, क्षेत्रतोऽकृतादिगृहे स्थातव्यं तदभावे उद्घाटनं गृहस्य कपाटादेरपि क्रियते, कालतः प्रथमपौरुष्यां प्रासुकं दीयतेऽलाभे कृत्वापि दीयते, भावतः प्रासुकद्रव्येण, तदभावेऽप्रासुकेनापि समाधिर्विधीयते ग्लानस्य ॥९६॥ इयं द्वारगाथा प्रथमद्वारमाह—

इहलोइआ पवित्ती, पासणया तेसि संखडी सड्ढो ।
परलोइआ गिलाणे, चेइय वाई य पडिणीए ॥९७॥ (पडिदारगाहा)

'इहलोइअ'त्ति द्वारं, प्रविष्टस्यायं गुणः— यानभिप्रवृतस्तदीयां-कदाचिद्वार्तां लभते यथा ततो निर्गत्याऽमुकत्र तिष्ठन्ति, अत्रैव वा समागताः स्युः, ततस्तेषां पश्यता—दर्शनं स्यात्तत्रैव कार्यं समाप्तिः, संखडीत श्राद्धगृहाद्वा भक्तं गृहीत्वा व्रजतः कालक्षेपो न भवति । द्वितीयद्वारं 'परलोइअ'त्ति ग्लानप्रतिचरणचैत्यवन्दनवादिजयप्रत्यनीकोपशमनानि परत्रगुणाः पृच्छाद्वारं, ॥९७॥ अविधिपृच्छामाह—

अविही पुच्छा अत्थित्थ, संजया णत्थि तत्थ समणीओ ।
समणीसु अ ता नत्थी, संका य किसोरवडवाए ॥९८॥

संयताः सन्ती'ति विशेषप्रश्ने आह—न 'सन्ति' सत्योऽपि श्रमण्यो नोक्ताः, अथ श्रमणीः पृच्छति आह—न'सन्ति'ताः,



१ ०भेदात्, एकैका द्विधा [illegible] ॥K॥

श्रमणाः सन्तोऽपि नोक्ताः, शङ्का श्रमणीपृच्छायां 'किशोरवडवान्यायात्' ॥९८॥

सङ्ढेसु चरिअकामो संकाचारी य होइ सड्ढीसुं ।
चेइयघरं व णत्थिह, तम्हा उ विहीइ पुच्छेज्जा ॥९९॥

चरितुकामो–भक्षयितुकामः, श्राविकायां शङ्का, नूनमयं तदर्थी चरितुकामश्च, अथ चैत्यगृहमेव केवलं पृच्छति, ततस्तदभावे [1]वर्गचतुष्टयाभावे च तत्प्रभवगुणहानिः स्यात्, तस्माद्विधिना पृच्छेत् ॥९९॥ विधिपृच्छामाह—

गामदुवारऽब्भासे, अगडसमीवे महाणमज्झे वा ।
पुच्छेज्ज सयं पक्खा, विंआलणे तस्स परिकहणा ॥१००॥

ग्रामद्वाराभ्यर्णे कूपसमीपे वा महाजनसमुदाये वा स्वकं पक्षं पृच्छत्, किमस्मत्पक्षोऽस्ति नेति ? यदि परः पृच्छति को भवतां स्वपक्षः ?, इत्येवं विचारणे तस्याग्रे परिकथना, पञ्चविधोऽस्मत्पक्षः चैत्यगृहादिः ॥१००॥ उक्तं पृच्छाद्वारं । यदि चैत्यगृहमस्ति ततस्तत्रैव गन्तव्यं कथमित्याह--

णिस्संकिअ थूभाइसु, काउं गच्छेज्ज चेइअघरं तु ।
पच्छा साहुसमीवं, तेऽवी अ संभोइया तस्स ॥१०१॥

---

१ साधु–साध्वी–श्रावक श्राविकारुपो वर्गचतुष्टयः ।

अर्द्धं कण्ठ्यम्, साधर्मिकद्वारमाह-पृच्छति चैत्यगृहान्निर्गत्य पश्चात् साधुसमीपं याति, ते साम्भोगिकाः साधवः स्युरसाम्भोगिका वा, यदि साम्भोगिकास्तदा का सामाचारीत्याह––

णिक्खिविउं किइकम्मं, दीवणऽणाबाहपुच्छणसहाओ ।
गेलण्ण विमज्जणया, अविसज्जुवएस दावणया ॥१०२॥

निक्षिप्योपकरणं साधुहस्ते विमुच्य, कृतिकर्म-वन्दनं करोति, ततो दीपना-गमनकार्याऽऽविर्भावनं करोति, अनाबाधा यूयं ?, तेऽप्याहुरेवमेव, ततः साधुराह–भवद्दर्शनार्थमागतोऽधुना गच्छन्नस्मि, तेऽपि यद्यस्ति ततः सहायं ददति, अथ कश्चिद् ग्लानः, ततस्तिष्ठति, तत्प्रतिचारकसद्भावे विसर्जयन्ति तं, अथ न विसर्जयन्ति, एवं ब्रुवते, औषधाद्यस्ति सर्वं, किन्तु तत्संयोजनां न जानीमस्तत उपदेशं ददाति, अथवं ब्रुवते वयं न लभामहे, ततो दापयत्यौषधादि, ततो याति ॥१०२॥ अथ व्रजन्तमेवमाह–

पुणरवि अयं खुभिज्जा, अयाणगा मो स वा भणिज्ज संचिक्खे ।
उभओऽवि अयाणंता, वेज्जं पुच्छंति जयणाए ॥१०३॥

पुनः क्षोभं यायाद् वयं न जानीम उपशमयितुं, ग्लानो वा स्थापयति, ततः 'संचि०' संतिष्ठति, अथोभावप्यागन्तुकवास्तव्यौ न जानीतस्ततो वैद्यं पृच्छतो यतनया ॥१०३॥ तामाह—

गमणे पमाण उवगरण, सउण वावार ठाण उवएसो ।
आणण गंधुदगाई, उट्ठमणुट्ठे अ जे दोसा ॥१०४॥

यदि ग्लानो गन्तुं पारयति तदा स एव नीयते, तदभावेऽन्यैस्त्रिपञ्चसप्तभिः साधुभिर्गम्यं, न एकद्विचतुर्भिर्यम-दण्ड-यमपुरुष-वाही-[हि]क-परिकल्पनात्, शुक्लवासोभिर्गन्तव्यं न कृष्णमलिनादिभिः । शकुनेषु गम्यं नाशकुनेषु, 'वावार'त्ति यदि वैद्यो भुङ्क्ते, किञ्चित् छिन्दन् भिन्दन्वाऽऽस्ते तदा न प्रष्टव्यः, अथ पिटकगण्डादिग्लानस्य छेत्तव्यं स्यात्तदा प्रष्टव्यो वैद्यो नोत्कुरुटिकादौ प्रष्टव्यः, किन्तु शुचिप्रदेशस्थः । ततो वैद्यो यतनया पृष्टः सन् उपदेशं ददाति, द्रव्यक्षेत्रकालभावैरयमवधारणीयः । अथ वैद्यो ब्रूयात् पश्यामि तं ततः स वैद्यो ग्लानसमीपमानीयते, न च ग्लानो वैद्य-समीपं नीयते, उत्क्षिप्ते लोको ब्रवीति नूनमयं मृत इत्यपशकुनः, मूर्छा वा स्यात् विपत्तिर्वा वैद्यगृहे स्यादिति, आगच्छति च वैद्ये गन्धावासाः सन्निहिताः क्रियन्ते, तद्दानार्थम् उदकमृत्तिकया विलेपनादि क्रियते, आचार्यो वैद्य आगते उत्तिष्ठति तदा प्रवचनहीलना, अनुत्थाने स्तब्ध इति प्रतिकूलः स्यात्तस्मादेतद्दोषभयात् पूर्वमुत्थाय स्थेयं सूरिणा, उक्तमुत्थितानुत्थितद्वारम् ॥१०४॥ ग्लानस्य कियन्तं कालं साधुना प्रतिचरणा कर्त्तव्येत्याह—

पढमाविियारजोगं, णाउं गच्छे बिइज्जए दिण्णे ।
एमेव अण्णसंभोइयाण अण्णाइ वसहीए ॥१०५॥

प्रथमालिकाऽऽनयनं करोति ग्लानः, स्वयमेव बहिर्भूमिगमनक्षमो जात इत्येवं ज्ञात्वा सहाये दत्ते [सहायासत्त्वे]-ऽदत्ते[1] वा सति याति, एष साम्भोगिकविधिरुक्तः । एवमन्यसाम्भोगिकेष्वपि द्रश्यः, किन्त्वन्यस्यां वसतौ स्थितो ग्लानप्रतिचरणां करोति, अयमपरो विशेषः, असाम्भोगिकसकाशं प्रविशता तदनाक्रान्तभूभागे चोपकरणादि विमुच्य कृतिकर्मादि करोति मा भूत्तच्छिक्षकाणां तत्सामाचारीदर्शनेऽन्यथाभावः स्यादिति ॥१०५॥ बहुमध्यगतसाम्भोगिकान्यसाम्भोगिकग्लानविधिरुक्तोऽधुनैकाकिग्लानविधिमाह—

एगागिगिलाणंमि उ, सिट्ठे किं कीरई ? ण कीरई वावि ।
छग-मुत्त-कहण-पाणग-धुवणत्थर तस्स णियगं वा ॥१०६॥

स ग्रामपार्श्वे गच्छन् कस्मादपि पुरुषादिदं शृणुयात्—एकाकिग्लाने शिष्टे कथिते यद्भवता प्रतिचरणा क्रियते न वा ?, इत्युक्ते सुष्ठु क्रियत इति ब्रवीति, पर आह-यद्येवं छगं-पुरीषं मूत्रं ताभ्यां विलिप्तोऽस्ति, एवं कथिते पानकेन ग्लानधावनं करोति, तदीयैरेवोपकरणैरास्तरणं करोति तदभावे स्वकीयैः ॥१०६॥ तथा चाह—

सारवणं साहल्लय, पागडधुवणे सुई (य सुइ)समायारा ।
अइभिंभले समाही, सहुस्स आसास पडिअरणं ॥१०७॥

[1] अभावाददत्ते वा० पु० ।

सारवणं निष्क्रियकरणं तस्मिन्निष्क्रिये ग्लाने कृते सति, 'सार'० प्रतिश्रयप्रमार्जनं वा, जनैः सम्बन्धं पृष्टो धर्मबान्धवोऽयं मे, लोकः प्रशंसति—अहो 'साहल्लय' सफलता धर्मस्य, प्रकटधावनं ग्लानोपध्योः, लोको ब्रूते-शुचिसमाचाराः श्रमणाः, अथाऽसौ अतिविह्वलः—दुःखेन करालितः [स्यात्ततः] 'समाहि'त्ति प्रार्थितभोजनादि दातव्यम्, स्वस्थः सन्नभिधीयते यथा कालं कुरु, अथ समर्थस्तत आश्वास्यते—न भेतव्यम्, अहं प्रतिचारकोऽस्मि ॥१०७॥ ततश्च—

सयमेव दिट्ठपाढी, करेइ पुच्छइ अयाणओ वेज्जं ।
दीवण दव्वाइंमि अ, उवएसो जाव लंभो उ (प्र.अ) ॥१०८॥

दृष्टपाठी—दृष्ट उपलब्धः पाठश्चरकसुश्रुतादिर्येन स, स्वयमेव क्रियां करोति वैद्यवत्, अजानन् वैद्यं पृच्छति । 'दीवण'त्ति एकाक्यागमनकार्यकथनं, अतो न निमित्तं ग्राह्यं, [1]द्रव्यादिचतुष्टयोपदेशः, यदा प्रासुकं न लभ्यते तदाऽप्रासुकेनाऽपि क्रियते ॥१०८॥

कारणिअ हट्ठपेसे, गमणुलोमेण तेण सह गच्छे ।
णिक्कारणिअ खरंटण, बिइज्ज संघाडए गमणं ॥१०९॥

यद्यसौ ग्लानः कारणिकस्ततो 'हिट्ठ'त्ति—हृष्टीभूतः प्रेषणीयः, अथ तस्याप्यनुकूलमेव गन्तव्यं स्यात्ततस्तेन-ग्लानेन

१ आदिशब्दात् क्षेत्रकालभावा ज्ञेयाः ।

सह याति, एवमसाम्भोगिकोऽपि द्रष्टव्यः, कारणिकैकसाम्भोगिकाऽसाम्भोगिकग्लान उक्तः । अथ निःकारणिकैकग्लानस्ततः 'खरंटण'त्ति प्रवचनोपदेशपूर्वकं कर्कशभणनमिति, खरण्टितं द्वितीयं–सहायं कृत्वा संघाटकेन व्रजति ॥१०९॥ साम्भोगिकासाम्भोगिकसंयत–एकानेक–कारणिकयतनोक्ता ॥ अधुना साम्भोगिकाऽसाम्भोगिकसंयतीना–मेकानेककारणिकी–निष्कारणिक्यादीनां यतना प्रतिपाद्यते–विधिपृच्छया पृष्टे संयत्यस्तत्र स्युः, को विधिरित्याह——

समणिपवेसि णिसीहिअ, दुवारवज्जण अदिट्ठपरिकहणं ।
थेरीतरुणि विभासा, णिमंतणाऽबाहपुच्छा य ॥११०॥

श्रमणीप्रतिश्रयप्रवेशे बहिःस्थेनैव नैषेधिकी कर्त्तव्या, वारत्रयं–द्वारे मध्ये प्रवेशे च, द्वारं प्रतिहत्यैकत्र प्रदेशे तिष्ठति, अदृष्टे परिकथनं साधुरागत इति, 'थेरी तरुणी विभासे'ति । यदि प्रवर्तिनी स्थविरी तदात्मद्वितीयात्मतृतीया वा निर्गच्छति, अथ तरुणी ततस्त्रीचतुःस्थविरीभिः [सह निर्गच्छतीति विभाषा], ततस्तमासनेन निमन्त्रयन्ति ताः, 'अबाधा भवन्त्य' इति स पृच्छति ॥११०॥

सिट्ठंमि सहू पडिणीयणिग्गहं अहव अण्णहिं पेसे ।
उवएसो दावणया, गेलण्णे वेज्जपुच्छा अ ॥१११॥

'अस्त्याबाधे'ति शिष्टे यद्यसौ समर्थस्ततो दुष्टं निग्रहयति, असमर्थोऽन्यत्र प्रेषयति, औषधाद्युपदेशं दत्तेऽलाभे

दापयति ग्लानत्वेऽयं विधिः । अथाऽसौ दातुं न जानाति ततो वैद्यं पृच्छति ॥१११॥

तह चेव दीवण चउक्कएण अण्णत्थवसहि जा पढमा ।
तह चेवेगाणीए, आगाढे चिलिमिली णवरं ॥११२॥

तथैव प्राग्वत् । 'दीवण'त्ति एकाक्यागमनकारणकथनं, वैद्येन द्रव्यादिचतुष्के उक्ते यतना प्राग्वत्, अन्यत्र वसतौ स्थिता यावत्प्रथमालिकादिक्षमा स्यात्तावत्प्रतिचरति, ततो याति, बहुमध्यगतग्लानविधिरुक्तः । 'तह चेव'त्ति–तथैवैकाकिन्याः । अयं विशेष आगाढे–अतीवाऽपटुतायां एकाश्रय एव यवनिकान्तरितः प्रतिचरति ॥११२॥

णिक्कारणिअं चमढण, कारणिअं णेइ अहव अप्पाहे ।
गमणित्थि-मीस-संबंधि–वज्जिए असइ एगागी ॥११३॥

निष्कारणिकां 'चमढण'त्ति प्रवचनोक्तैर्वचोभिः खिंसति, अथाऽसौ कारणिका ततस्तां स्वयमेव नयति । 'अह व [अ]प्पाहे'त्ति अथवा तद्गुरोस्तत्प्रवर्त्तिन्या वा संदिशति । स्वयं च नयतः को विधिरित्याह–'गमणित्थि'त्ति स्त्रीभिः सम्बन्धिनीभिः सह, तदभावे मिश्रैः स्त्रीपुरुषैः सम्बन्धिभिः, तदभावेऽसम्बन्धिनीभिः तदभावेऽसम्बन्धिभिः पुरुषस्त्रीभिः, तदभावे सम्बन्धिपुरुषैः, तदभावेऽसम्बन्धिभिः [पुरुषैः], तदभावे असम्बन्धिवर्जिते अन्योपायेऽसति एकाकिनीं नयति ॥११३॥ चतु[र्वि]धमुक्तयतनामुपसंहरन्नाह—

एग-बहू समगुण्णाण, वसहीए जा अ एग अमणुण्णो ।
अमणुण्ण-संजईण य, अण्णहि एक्कं चिलिमिलीए ॥११४॥

एकानेकसाम्भोगिकैरेकासाम्भोगिकग्लानप्रतिचरणैकस्यामेव वसतौ कर्त्तव्या, अनेकासाम्भोगिकसंयताऽनेकसाम्भोगिकाऽसाम्भोगिकसंयतीनामन्यस्यां वसतौ, एकां तु ग्लानीमाश्रित्य जवनिकान्तरित एकस्यामेव वसतौ प्रतिचरति। 'एहिअ-पारत्तगुणा दोण्णि य पुच्छा दुवे अ साहम्मी'इत्यादि द्वारगाथा व्याख्याता, तद्व्याख्यानाच्च व्याख्यातं प्रथमं ग्लानद्वारम् ॥११४॥ अथ द्वितीयग्लानद्वारमाह—

विहिपुच्छाए पवेसो, सण्णिकुले चेइ पुच्छ साहम्मी ।
अण्णत्थ अत्थि इह ते, गिलाणकज्जे अहिवडंति ॥११५॥

तस्य व्रजतः पूर्ववद्विधिपृच्छायां पर आह—अस्ति श्रावकः, ततः सञ्ज्ञिकुले चैत्यानि वन्दते श्राद्धान् पृच्छति शोभना यूयं शीलव्रतैः?, साधर्मिकान् पृच्छति । साधर्मिकाः सन्ति नेति ?, तेऽप्याहुरन्यत्रासन्नग्रामे विद्यन्ते । ते च ग्लानप्रायोग्यभक्तार्थमिहाऽधिपतन्ति ॥११५॥ ततो व्रजन्तं साधुं भोजनादिना निमन्त्रयति श्रावकः, साधुः किं करोतीत्याह—

सव्वंपि ण घेत्तव्वं, णिमंतणे जं तहिं गिलाणस्स ।
कारणि तस्स य तुज्झ य, विउलं दव्वं तु पाउग्गं ॥११६॥

सर्वं प्रायोग्य[मप्रायोग्यं वा] न ग्राह्यं, यतस्तत्र ग्लानस्य गृह्यते श्राद्ध आह–कारणे तस्य [ग्लानस्य] तव च विपुलं द्रव्यं वर्त्तते गृह्यतामिति, ततश्च तस्योपरोधेन गृहीत्वा व्रजति ॥११६॥ क्वेत्याह–

जाएँ दिसाएँ गिलाणो, ताएँ दिसाएँ उ होइ पडियरणा ।
पुव्वभणिअं गिलाणो, पंचण्हवि होइ जयणाए ॥११७॥

यया दिशा ग्लानस्तया दिशा प्रतीक्षणं-प्रतिपालनां करोति साधूनां, पूर्वभणितो ग्लानविषयो विधिर्द्रष्टव्यः। किं साम्भोगिकासाम्भोगिकस्यैव प्रतिचरणा कर्त्तव्या?, नेत्याह–'पंचण्ह वि' पञ्चानामपि पासत्थोसन्नकुशीलादीनाम्, अपिशब्दान्निह्नवदेवकुलिकाश्च, [देवकुलप्रतिपालकाश्च] गृह्यन्ते ॥११६॥ इमां गाथां भाष्यकृद् व्याख्यानयन्नाह–

तेसिं पडिच्छण पुच्छण, सुट्ठु कयं अत्थि णत्थि वा लंभो ।
खग्गूडे विलओलण, दाणमणिच्छे तहिं णयणं ॥११८ ॥ (३५ भा०)

तेषां ग्लानप्रतिजागरकसाधूनां प्रतिपालनं करोति, दृष्ट्वा पृच्छत्यमुकेनेदं मे दत्तं यदि ग्लानप्रायोग्यं ततो गृह्यतां, तेऽप्याहुः– सुष्ठु कृतं, अस्ति ग्लानप्रायोग्यं तत्रान्यदपि, त्वमेवेदं गृहाणेति, यद्वा नास्ति तत्रेदं, किन्त्वन्यत्र लाभो भविष्यति, त्वं गृहाण, अथ ते 'ख०' निर्द्धर्मप्राया एवमाहुः– 'विलउल्लण'त्ति धाटिरेव निपतिता, ततः सर्वं ददाति, अथ [तेऽपि] पुरुषा नेच्छन्ति, ततो ग्लानसमीपे द्रव्यानयनं करोति ॥११८॥ यद्यसौ समर्थस्ततो–

पंतं असहू करित्ता, णिवेयणं गहण अहव समणुण्णा ।
खग्गूड देहि तं चिअ, कमढग तस्सप्पणो पाए ॥११९॥

[1]श्रान्तं-नीरसं, असमर्थो भुक्त्वा याति, तत्र प्राप्तः सन्निवेदनं करोत्याचार्याय, सोऽप्याचार्यो गृह्णाति तद् ग्लानार्थम्, अथ 'समणुण्ण'त्ति तस्यैवानुज्ञां करोति, भक्षयेदं, ग्लानार्थमन्यदपि भविष्यति। अथाऽऽचार्यः खग्गूडः—शठ इदं वक्ति—त्वमेव ग्लानाय प्रयच्छ किं ममानेन ? एवमुक्ते स तत्र गत्वा तस्य कमढके पात्रे, तदभावे स्वस्य वा पात्रे कृत्वा ददाति ॥११९॥ पुनरप्याचार्यं प्रतीदं वक्ति

किं कीरउ ? जं जाणसि, अतरंति सढे त्ति वच्च तं भंते ! ।
णिद्धम्मा ण करेंती, करणमणालोइयसहावो ॥१२०॥

हे आचार्य! ग्लानस्यान्यत् किं क्रियते ? स आह—यज्जानासि तत् कुरु, पुनरसौ तत्समीपं गच्छति । 'अत०' ग्लानोऽपि वक्ति, शठा एते त्वां खलीकुर्वन्ति, व्रज, सन्ति मे परिचारकाः, एवमुक्ते याति, अथैवं वक्ति निर्धर्मा एते न कुर्वन्ति मे परिचेष्टां, ततोऽसौ 'करणं'त्ति वैयावृत्त्यं करोति, ग्लानं च ब्रवीति— 'अणा०' अमीषां निर्धर्माणां मध्येऽनालोचिताऽप्रतिक्रान्तः कथंचिदेव त्वं न मृत इति,अत एवमभिधाय तमात्मसहायं कृत्वा प्रयाति ॥१२०॥

१ प्रान्तं नीरसं भुक्त्वा समर्थो यतिः तत्र प्राप्तः का० । ॥K॥

उभओ णिद्धम्मेसुं, फासुपडोआर इयरपडिसेहो ।
परिमिअदाण विसज्जण, सच्छंदोद्धंसणागमणं ॥१२१॥

ग्लानः शेषसाधवश्च यदि निर्धर्मास्तदा प्रासुकेन प्रतीकारः कार्यः, इतरनिषेधः— अप्रासुकनिषेधः, परिमित-भक्तादिदानं, यथाऽसौ निर्विण्णो विसर्जयति, गच्छंश्च स्वच्छन्दस्त्वमित्यैवमुद्धंसनम्-आक्रोशं करोति ततो गच्छति ॥१२१॥ पडियरणा वक्खाणिया 'पुव्वभणियं गिलाणे'त्ति एतदपि व्याख्यातं, [1]'पंचण्हवि होइ'[ति] जयणे'त्याह—

एस गमो पंचण्हवि, होइ णियाइण (प्र.णिहयादीणं) गिलाणपडियरणे ।
फासुअकरण णिकायण, कहण पडिक्कामणा गमणं ॥१२२॥

एष गम—एषः प्रतिचरणविधिः पञ्चानामपि नित्यादीनामादिशब्दात् पासत्थोसन्नकुशीलसंसक्तानां, यदुत प्रासुकभक्तादिना प्रतिचरणा कर्त्तव्या, निकाचनं-दृढीभूतेन त्वया यदहं वच्मि तत्कार्यं, 'कह०' धर्मकथायाः, यद्वा लोकानां कथयति किमस्य प्रव्रजितस्य शक्यतेऽशुद्धेन कर्त्तुम्?, यद्यसौ प्रतिक्रामति—तस्मात् स्थानान्निवर्त्तते इति यावत् । ततस्तं ग्लानं लात्वा गमनं करोति ॥१२२॥ 'पंचण्हवि' अत्राऽपिशब्दोऽस्त्यतस्तदर्थमाह—

संभावणेऽविसद्दो, देउलिअ खरंटय-जयण उवएसो ।
अविसेस णिण्हगाण वि, ण एस अम्हं तओ गमणं ॥१२३॥

१ गाथा ११७, सं० ।

संभावनेऽपिशब्दः, किं संभावयति ? देवकुलिका-वेषमात्रधारिणो ग्लानाः प्रतिचर्याः, 'खरंटण'त्ति खिंसनां' करोति, यदुत धर्मे यत्नं कुरु, [१]यतनया कर्त्तव्यं, उपदेशं क्रियाविषयं ददाति, यत्र साधुनिह्नवविशेषो न ज्ञायते, तत्र निह्नवानामपि यतनया करोति, अथ निह्नवसाधुरेवं ब्रूते नायं प्राघूर्णकोऽस्मज्जातीयः, ततो याति ॥१२३॥

अथाऽसौ (निण्हवकादिः, एवं ब्रूते—

तारेहि जयण करणे, अमुगं आणेहऽकप्प जणपुरओ ।
ण वि एरिसया समणा, जण णाए तओ अवक्कमणं ॥१२४॥

तारय मां मान्द्यात्ततो यतनया करोति, अथैवं ब्रूयात्-अमुकं बीजपूराद्यानय, 'अकल्पमि'ति जनस्याग्रे वक्ति, 'न चेदृशाः श्रमणाः' इत्युक्ते जनेन भेदे ज्ञाते गच्छति तस्मात् स्थानात् ॥१२४॥ नोदक आह—

चोअगवयणं आणा, आयरिआणं तु फे(प्र.खं)डिआ तेणं ।
साहम्मिअ-कज्ज-बहुत्तया य सुचिरेण वि ण गच्छे ॥१२५॥

खण्डिता साधर्मिककार्यप्रभूततया सुचिरेणापि न यायाद् ? [न गच्छेत् विवक्षितं स्थानं प्र. पु.] आचार्य आह—

१ यतनया कर्त्तव्यं यथा संयमलाञ्छना न स्यात्० ॥ मु० प्र० ॥यदुत धर्मे यत्नं कुरु यतनया ॥K॥

तित्थगराणा चोयग ?, दिट्ठंतो [1]भोइएण [2](प्र. गाम भोइ) णरवइणा ।
जत्तुग्गय भोइअ दंडिए अ घरदार पुव्वकए ॥१२६॥

तीर्थकृतामाज्ञा, यतो ग्लानः प्रतिचरणीयः, अत्र भोगिक(ग्रामभोगिक पु०)नरपतिदृष्टान्तः—यात्रोद्गतभोगिकदण्डिनोरमुकग्रामे आवासः क्रियतामित्याज्ञाप्रदाने ग्रामेल्लकाश्चिन्तयन्ति—राजैकदिवसमागमिष्यति भोगिकः सदा स्थायी, राज्ञो गृहं तृणमयं सामान्यं कृतं, गृहदारुणा पूर्वसञ्चितेन भोगिकस्य रम्यं, राजा दृष्ट्वा कुपितः ॥१२६॥ भोगिका आचार्या, राजा तीर्थकरः, कुटुम्बी साधुः, अमुमेवार्थमाह—

रण्णो तणघरकरणं, सचित्तकम्मं तु गामसामिस्स ।
दोण्हंपि दंडकरणं, विवरीयऽण्णेणुवणआ उ ॥१२७॥

राज्ञस्तृणगृहं कृतं सचित्रकर्म च ग्रामस्वामिनः, द्वयोरपि दण्डकरणम्, एवं द्वयोरप्याचार्यसाध्वोस्तीर्थकराज्ञाऽतिक्रमे संसारदण्डः, उक्ताद्विपरीतेनान्येनाख्यानकेनोपनयः कार्यः— अन्यैर्ग्रामेल्लकैश्चिन्तितं, भोगिकस्य रम्यं गृहमेतदेवराज्ञो भवतु, गते राज्ञि पुनर्भोगिकस्यैव भविष्यति, राजा दृष्ट्वा हृष्टः सन् ग्राममकरं चकार । एवं तीर्थकृदाज्ञां कुर्वता कृताचार्याणामपि ॥१२७॥ अथ प्रथमोपनयमाह—

१ यात्रोद्यतेन राज्ञा तद्ग्रामभोगिकेन चामुकग्रामे आवासः क्रियतामिति द्वाभ्यामादिष्टं तत्र० पु० ।

जह णरवइणो आणं, अइक्कमंता पमायदोसेणं ।
पावंति बंध-वह-रोह–छिज्ज-मरणावसाणाइं ॥१२८॥

'रोह'त्ति रोधो–गमनव्याघातः, छेदो हस्तादेः, मरणावसानानि दुःखानि प्राप्नुवन्ति यथा ॥१२८॥

तह जिणवराण आणं, अइक्कमंता पमायदोसेणं ।
पावंति दुग्गइपहे, विणिवायसहस्सकोडीओ ॥१२९॥

विनिपातानां-दुःखानां सहस्रकोटीः ॥१२९॥ द्वितीयोपनयमाह—

तित्थगरवयणकरणे, आयरिआणं कयं पए होइ ।
कुज्जा गिलाणगस्स उ, पढमालिअ जाव बहिगमणं ॥ १३०॥

तीर्थकरवचनकरणे आचार्याणां (कयं) कृतं 'पए'त्ति–प्रागेव कृतं स्यात्, तस्माद् ग्लानस्य प्रतिजागरणा कर्त्तव्या। प्रथमालिका बहिर्गमनक्षमो [मश्च] जातो यावत् ॥१३०॥

जइ ता पासत्थोसण्ण-कुसीलणिण्हवगाणंपि देसिअं करणं ।
चरणकरणालसाणं, सब्भावपरंमुहाणं च ॥१३१॥

यदि तावत्पार्श्वस्थादीनां, सद्भावः – सम्यग्दर्शनं तत्पराङ्मुखाणां, चरणकरणालसादीनां, देशितं करणं वैयावृत्त्यस्य ॥१३१॥ (इतरेषां नितरामेवेत्याह–पु०)

किं पुण जयणाकरणुज्जयाण दंतिंदिआण गुत्ताणं ? ।
संविग्गविहारीणं, सव्वपयत्तेण कायव्वं ॥१३२॥

किंपुनः – किमुत यतनाकरणोद्यतानां 'संवि०' उद्यतविहारिणां सर्वप्रयत्नेन कर्त्तव्यम् ॥१३२॥ उक्तं ग्लानद्वारम् अथ सञ्ज्ञिद्वारमाह—

एवं गेलण्णट्ठा, वाघाओ अह इयाणि भिक्खट्ठा ।
वइयग्गामे संखडि, सण्णी दाणे अ भद्दे अ ॥१३३॥

एवं ग्लानार्थं व्याघातो न कार्य इत्यध्याहारः, अथवा ग्लानार्थमुक्तः प्रतिबन्धः । भिक्षार्थं यथाऽसौ स्यात्तथाऽऽह–'व्रज' इति गोकुलं, ग्रामः प्रसिद्धः, संखडी–प्रकरणं, सञ्ज्ञी–श्रावकः, 'दाणे'ति दानश्राद्धकः [1]भद्रकः, चशब्दान्महानिनादकुलानि ॥१३३॥ एतेषु प्रतिबध्यमानस्य यथा गमनविघातः स्यात्तथाऽऽह—

उव्वत्तणमप्पत्तं च, पडिच्छे खीरगहण पहगमणे ।
वोसिरणे छक्काया, धरणे मरणं दवविरोहो ॥१३४॥

१ साधूनां, चान्महा० पु० ।

स हि अनुकूलपन्थानमुत्सृज्य उद्वर्त्तते, यता व्रजस्ततो याति, व्रजे च प्राप्तः सन्नप्राप्तां वेलां प्रतीक्षते, ततश्च क्षीरं गृह्णाति, पीते क्षीरे पथि गच्छति, तेन भिन्नो, मुहुर्मुहुः पुरीषोत्सर्गं करोति, तत्र षट्कायविराधना, तद्वेगधरणे मरणं, द्रवविरोधः, द्रवेण-काञ्जिकेन विरोधः, अथवा द्रवम्—उदकं तेन निर्लेपनं करोति सागारिकपुरतः, अथ न करोत्युड्डाहः — प्रवचनहीला भवति । अथवा द्रवविरोधो विनाशो, यतस्तृषितः सँस्तदेव पिबति । एवं व्रजे यात आत्मविराधना गमनविघातश्च स्यात् ॥१३४॥ उक्तं व्रजद्वारम्। अथ ग्रामद्वारम्—

खद्धादाणिअगामे, संखडि आइण्ण खद्धगेलण्णे ।
सण्णी दाणे भद्दे, अप्पत्तमहाणिणादेसु ॥१३५॥

खद्धादानिकग्रामः— समृद्धग्रामस्तस्मिन्नु[1]द्वर्त्तनं कुर्वतस्त एव दोषाः, गतं ग्रामद्वारम् । संखडिद्वारमाह — संखड्यामुद्वर्त्ततेऽप्राप्तां वेलां प्रतिपालयति, तत्र च 'आइण्णे'त्ति आकीर्णं सम्बाधनं स्त्रीस्पर्शादिदोषाः, 'खद्धं'—प्रभूतमुच्यते, भूरिभक्षणे मान्द्यं स्यात्, त एव दोषा वोसिरणादिकाः, उक्तं संखडिद्वारम् । अथ संज्ञिद्वारं—'सन्नि'त्ति सञ्ज्ञिनं श्रुत्वोद्वर्तते, तत्र त एव दोषाः, उक्तं सञ्ज्ञिद्वारम् । अथ दानश्राद्धकद्वारम्-स कदाचित्प्रभूतं ददाति, तत्राऽपि त एव दोषाः, अथ भद्रकद्वारम् । कश्चित् स्वभावेन साधुर्भद्रकः स्याचत्रापि त एव दोषाः। महानिनादकुलेषु प्रख्यातेषूद्वर्त्त्याऽप्राप्तां वेलां प्रतिपालयति, तत्रापि त एव दोषाः ॥१३५॥

[1] उद्वर्तन—गमनमिति भाव. सं० ।

स्वमार्गास्थेषु व्र व्याघात

तथा स्वमार्गादननुकूलेषु व्यवस्थितेषु व्रजादिष्वप्राप्तां वेलां प्रतिपालयतो गमनविघातदोष उक्तः, अधुनाऽनुकूलमार्गव्यवस्थितव्रजादिषु प्रविष्टस्य तद्व्याघातः स्यात्तथाऽऽह ॥

पङ्गुच्छिखीर सतरं, घयाइ तक्कस्स गिण्हणे दीहं ।
गेहि विगिंचणिअ-भया, निसट्ठ–सुवणे अ परिहाणी ॥१३६॥

पङ्गुच्छिक्षीरं–पारिहट्टिक्षीरं अन्विष्यन् शेषं चाऽगृह्णन्, सतरं दधिघृतादि, आदिशब्दान्मोदकादि गृह्णन्, तक्रा[1]ग्रहणाद्दीर्घां भिक्षाचर्यां करोति, क्षीरादि लब्धं सद् गृद्धः प्रचुरं भक्षयति, यद्वा परित्यागभयान्निसट्ठं–प्रचुरं भक्षयति, प्रचुरभक्षणे प्रदोषे स्वाध्यायमऽकृत्वैव स्वपिति, 'परि०'–सूत्रार्थविस्मरणा, चशब्दाद् 'अह जग्गइ गेलन्न' मित्येतद्वक्ष्यति तृतीयगाथायाम् ॥१३६॥ उक्तं व्रजद्वारम् । ग्रामद्वारमाह—

गामे परितलिअगमाइ[माइ]-मग्गणे संखडी छणे विरूवा ।
सण्णी दाणे भद्दे, जेमणविगई गहण दीहं ॥१३७॥

ग्रामे प्रविष्टः सन् परितलितादि मार्गयति, परितलितं–सुकुमालिकादि तदन्विष्यन् दीर्घां भिक्षाचर्यां करोति । संखडिद्वारमाह ॥ 'सं०'क्षणे–उत्सवे विविधरूपः[पा स्यात्] तत्र गृहे–गृहे घृतपूरादि लभ्यते, सञ्ज्ञ्यादिषु 'जेमण'त्ति मृष्टभोजनविकृत्यर्थं दीर्घां भिक्षाचर्यां करोति ॥१३७॥ अथ न स्वपिति को दोषोऽत आह—

१ तक्रस्य वा ग्रहणे मु पु. ।

अह जग्गइ गेलण्णं, अस्संजयकरणजीववाघाओ ।
इच्छमणिच्छे मरणं, गुरुआणा छड्डणे काया ॥१३८॥

स्निग्धाहारभक्षणे जागरणं करोति, सूत्रार्थपौरुषीं करोतीत्यर्थः, ततश्च ग्लानत्वं भवति, तस्य यद्यऽसंयतः प्रतिजागर्तिं इच्छति च तदा जीवव्याघातः, अथ नेच्छति मरणं, ततो गुर्वाज्ञालोपश्च कृतः स्यात् मृतस्य च 'छड्डणे'—परित्यागे गृहस्थाः षट्कायव्यापादनं प्रकुर्वन्ति ॥१३८॥ दोषत्यागमाह—

तक्कोयणाण गहणे, गिलाण आणाइया जढा होंति ।
अप्पत्तं च पडिच्छे, सोच्चा अहवा सयं णाउं ॥१३९॥

तक्रौदनादिग्रहणे ग्लानत्वदोषाऽऽज्ञाभङ्गदोषादिका, आदिशब्दात्पलिमन्थदोषः, एते जढाः—त्यक्ताः स्युः । कारणान्तरेण प्रतिषिद्धस्यानुज्ञामाह—'अप्पत्ते'त्ति अप्राप्तामपि वेलां प्रतिपालयति, वक्ष्यमाणान् दोषान् श्रुत्वा पथिकादेः सकाशात्, अथ [वा] स्वयं ज्ञात्वा ॥१३९॥ दोषानाह—

दूरुट्ठिअ खुड्डलए, नव भड अगणी अ पंत पडिणीए ।
अप्पत्तपडिच्छण पुच्छ, बाहिं अंतो पविसिअव्वं ॥१४०॥

कदाचिद् ग्रामो दूरे स्यात्, उद्वसितो, लघुर्वा, नवो वा, तत्र च सचित्तपृथ्वीकायसद्भावात्, भटाऽऽक्रान्तो

वाऽग्निदग्धो वा, प्रान्तः—दरिद्रप्रायो वा, प्रत्यनीकाऽऽक्रान्तो वा स्याद्, एभिः कारणैरप्राप्तामपि वेलां प्रतीक्षते। सञ्ज्ञिकुलं प्रविशता विधिपृच्छा पूर्ववत् । नोदक एवमाह – बहिरेव तिष्ठतु साधुर्यावत् भिक्षावेला स्यात् । आचार्य आह—'अन्तः प्रविशितव्यं' इत्यग्रतो व्याख्यानयिष्यति ॥१४०॥ कारणमाश्रित्य दीर्घामपि भिक्षाचर्यां करोतीत्याह—

कक्खडखेत्तचुओ वा, दुब्बल अद्धाण पविसमाणो वा ।
खीराइगहण दीहं, बहुं च उवमा अयकडिल्ले ॥१४१॥

रूक्षक्षेत्रात् च्युतः- आयातः सन्, रोगाक्रान्तत्वाद् दुर्बलो वा, अथ दीर्घमध्वानं वा प्रवेक्ष्यत्येभिः कारणैर्दीर्घां भिक्षाचर्यां करोति, बहु च क्षीरं गृह्णाति येनासौ कार्यस्य समर्थो भवति। आह-इत्थं विसूचिकादिर्भविष्यति बहुभक्षणे ?। उच्यते अयो—लोहं तन्मयं—यत्कडिल्लं तेनोपमा, तप्तलोहकडिल्ले यथा तोयादि क्षिप्तं क्षयमुपयाति एवं साधौ रूक्षस्वभावे बह्वपि घृतादि क्षयं यातीति ॥१४१॥ य एव प्रागुक्ता दोषास्तानेव कारणान्तरमुद्दिश्य गुणवत्तया स्थापयन्नाह—

जे चेव पडिच्छण-दीह—खद्ध-सुवणेसु वण्णिआ दोसा ।
ते चेव सपडिवक्खा, होंति इहं कारणज्जाए ॥१४२॥दारं॥

प्रतीक्षण-दीर्घभिक्षाचर्या-बहुभक्षण-स्वापेषु वर्णिता दोषास्त एव सप्रतिपक्षा गुणा इत्यर्थः कारणे जाते ॥१४२॥ अधुना यदुक्तं—"पुच्छ बाहिं अंतो पविसियव्व"मेतद् व्याख्यानयति—

विहिपुच्छाए सण्णी, सोउं पविसे ण बाहि संचिक्खे ।
उग्गमदोसभएणं, चोयगवयणं बहिं ठाउ ॥१४३॥

विधिपृच्छया सञ्ज्ञिनं श्रुत्वा तद्गृहे प्रविशेत्, न बहिः सन्तिष्ठेत् उद्गमदोषभयात्, मा भूत् साधुमुद्दिश्य किञ्चिद् आहारं सञ्ज्ञी कुर्याद्. एवमुक्ते सत्याचार्येण नोदकपक्षः तत् किम्? इत्याह–'बहिं०' बहिरेव तिष्ठतु भिक्षावेलां यावत्, मा भूत्–प्राघूर्णक इति कृत्वा आहारं कुर्यात् श्रावकः ॥१४३॥ एवमुक्ते आचार्य आह––

सोच्चा दट्ठूणं वा, बाहिठिअं उग्गमेगयर कुज्जा ।
अप्पत्तपविट्ठो पुण, चोयग ! दट्ठुं णिवारेज्जा ॥१४४॥

श्रुत्वा अन्यस्मात्, स्वयं वा दृष्ट्वा बहिः स्थितम्, उद्गमादीनामेकतरं कुर्यात, अप्राप्तवेलायाम् एष बहिस्तिष्ठतो दोषः । प्रविष्टः पुनरसौ साधुरुद्गमादि निवारयेद् दृष्ट्वा ॥१४४॥ किञ्च––

उग्गमदोसाईणं, कहणा उप्पायणेसणाणं च ।
तत्थ उ णत्थि सुण्णे, बाहिं सागार कालदुवे ॥१४५॥

उद्गमोत्पादनैषणादोषान् कथयति, यदि शुद्धं भक्तं ततस्तत्रैव सञ्ज्ञिगृहे भोक्तव्यम्, तदभावे शून्यगृहे याति, अथ तत्राऽपि सागारिकास्ततो बहिर्याति, अथ तत्राऽपि तथैव, ततः कालद्वयं ज्ञातव्यम्,–दिनः स्वल्पो महान् वा,

अ
वेलायाम
बहिस्ति
दोषः ।

यदि महांस्ततः स्थण्डिले याति, अथ स्वल्पस्ततोऽस्थण्डिल एव यतनया भुङ्क्ते ॥१४५॥ इमां प्रतिपदं व्याख्यानयति, तत्र च प्रवेशविधिरुक्तः, बहिःस्थितस्य विशेषदोषानाह—

फेडेज्ज व सइ कालं, संखडि घेत्तूण वा पए गच्छे ।
सुण्णघराइपलोयण, चेइअ आलोयणाऽबाहं ॥१४६॥

स बहिःस्थितः 'फे०' अपनयेत्, 'स०' विद्यमानं भिक्षाकालं ग्रामे प्रहरमात्र एव भिक्षावेला स्यात्, तामपनयति, संखड्युद्धरितं पर्युषितं भक्तं गृहस्थैः प्रातरेव भुक्तं तस्य भ्रष्टः, अथ प्रगे राद्धं लात्वा ग्रामान्तरं गतः श्रावकः, ततश्च साधुस्तस्य भ्रष्ट इति, अत एतद्दोषभयात् प्रवेष्टव्यम् । प्रविशन् शून्यगृहादिप्रलोकनं करोति, कदाचित्तत्र भुङ्क्ते, प्रविष्टश्च श्राद्धगृहे चैत्यानि वन्दते, आलोचनां श्राद्धाय ददाति, यदुताऽहमाचार्येण कारणवशादेकाकी प्रहित इति, अबाधा भवतां व्रतादिषु ? ॥१४६॥ तत्र प्रविष्टो भिक्षायै दोषान् कथयन्नाह—

उग्गम एसणकहणं, ण किंचि करणिज्ज अम्ह विहिदाणं ।
कस्सट्ठा आरम्भो, तुज्झेसो ? पाहुणा डिंभा ॥१४७॥

आधाकर्मादिदोषकथनम्, आरम्भं दृष्ट्वा नाऽस्मदर्थं किञ्चित्कर्तव्यम्, अस्माकं विधिदानं क्रियते । अथ श्राद्धो न ब्रूते, तदा डिम्भरूपाणि पृच्छति, 'कस्सट्ठ'त्ति ? इति पृष्टे तान्याहुः— त्वदर्थमयमारम्भो यतः प्राघूर्णका यूयम् अथवा प्राघूर्णकार्थं न तव ॥१४७॥ अथाऽर्भकाणि न सन्ति ततः किम्? इत्याह—

भिक्षाः प्रविश. कर्तव्या

रसवइ पविसण पासणमिअममिअमुवक्खडे तहा गहणं ।
पज्जत्ते तत्थेव उ, उभएगयरे य ओयविए ॥१४८॥

केनचिद् व्याजेन रसवतीशालायां प्रविशति साधुः, प्रविष्टश्च मितममितं चोपस्कृतम् इति पश्यत्तां—दर्शनं करोति। यदि स्वल्पं तदा मितं गृह्णाति। अथ बहु ततस्तदनुरूपं गृह्णाति। 'उग्गमदोसाइणमि'ति (१४५)गाथापूर्वार्द्धं व्याख्यातम्। तस्यामेव यदुपन्यस्तं 'तत्थ उ'त्ति तदाह—'पज्जत्ते'त्ति यदि पर्याप्तं भक्तं लब्धं ततस्तत्रैव भुङ्क्ते। 'उभये'त्ति उभयं श्रावकः श्राविका च 'ओयवियं'—साधुखेदज्ञं यदि स्यात्,। 'एगतरं च ओयवियं' अल्पसागारिकः – श्रावक इत्यर्थः अल्पसागारिका श्राविकेत्यर्थः ततो भुङ्क्ते ॥१४८॥ इदानीं 'णत्थि'त्ति व्याख्यायते—

असइ अपज्जत्ते वा, सुण्णघराईण बाहि संसद्दे ।
लट्ठीइ दारघट्टण, पविसण उस्सग्ग आसत्थे ॥१४९॥

असति तस्मिन्नुभये अल्पसागारिकश्राद्धश्राविकयोरभावे, यदा श्राद्धगृहे भक्तं न पर्याप्तं—न सृतं तदान्यत्र भिक्षाटनं कृत्वा, शून्यगृहादिषु याति, बहिरेव व्यवस्थितः संशब्दं—काशितादिरूपं करोति, पश्चाद्दण्डेन द्वारघट्टनं, प्रविष्टश्च यदि किञ्चिन्न पश्यति तत ईर्यापथनिमित्तं कायोत्सर्गं करोति मनागाश्वसितः सन् ॥१४९॥ ततश्च—

आलोअणमालावो, अदिट्ठंमिवि तहेव आलावो ।
किं उल्लावं ण देसि ?, अदिट्ठ णिस्संकिअं भुंजे ॥१५०॥

आलोकनं—निरूपणं करोति, दृष्टे आलापः क्रियते किमिह ? भवानागत इति, अदृष्टे तथैवालापः, अथैवमप्युक्तो न कश्चिदुत्तरं ददाति, तदेदमुच्यते किमुल्लापं न ददासि ?, अथ न कश्चिद् दृष्टस्ततो निःशङ्किते भुङ्क्ते ॥१५०॥ अथ भुञ्जानस्य प्रकटीभूतस्ततः—

दिट्ठ असंभम पिंडो, तुज्झवि य इमोत्ति साह वेउव्वी ।
सोवि अगारो दोच्चा, णीइ पिसाउत्ति काऊणं ॥१५१॥

दृष्टेऽसम्भ्रमः—भयं न कार्यम् । असम्भ्रान्तेन च तेन साधुना 'पिण्डो तुज्झ वि अ इमोत्ति स्वाहा' भिक्षापिण्डं गृहीत्वैवं करोति— अयं यमाय पिण्डः, अयं वरुणाय पिण्डः, अयं धनदाय पिण्डः, अयमिन्द्राय पिण्डः, तवाप्ययं पिण्डः स्वाहा । 'वेउव्वि'त्ति विकृतं शरीरं करोति, पिशाचगृहीत इव भूत्वा तिष्ठति । एवंविधं साधुं दृष्ट्वा सोप्यगारी 'दोच्चा' इति भयेन णीइ-निर्गच्छति, 'पिसाउ'त्ति काऊणं—पिशाचोऽयमिति कृत्वा ॥१५१॥ यदा बहिःस्थ एव विलोकयति तदाऽयं विधिः—

तिव्वेण व मालेण व, वाउपवेसेण अहव सढयाए ।
गमणं च कहण आगम, दूरब्भासे विही इणमो ॥१५२॥

बहिःस्थितस्तीव्रेण–छिद्रेण पश्यति, मालेन उपरितलस्थितः शठतया पश्यति, वायुप्रवेशेन–गवाक्षेण, अथवाऽन्येन प्रदेशेन शठत्वेन पश्यति, दृष्ट्वा गमनं करोति सागारिकः, अन्येभ्यः कथयति–यदुताऽऽगच्छत पश्यत पात्रके भुञ्जानः साधुर्दृष्ट इति, तेऽप्यागच्छन्ति, पश्यामः किमेतत् सत्यं नवेति । दूरादागच्छतां समीपाद्वा विधिरयं ॥१५२॥

थोवं भुंजइ बहुअं, विगिंचइ पउमपत्तपरिगुणणं ।
पत्तेसु कहिं भिक्खं, दिट्ठमदिट्ठे विभासा उ ॥१५३॥

यदि दूरेण सागारिकास्ततः स्तोकं भुङ्क्ते, बहु भक्तं त्यजति गर्त्तादौ, अल्पसागारिकं करोति, [1]धूल्या वा आच्छादयति, अथाऽभ्यासे एव सागारिकास्ततः 'थोवं'ति अन्यथा व्याख्या, स्तोकं भुङ्क्ते यावन्मात्रं मुखे क्षिप्तमस्ति तावन्मात्रमेव भुङ्क्ते शेषं त्यजति प्राग्वत्, पात्रं पद्मपत्रसदृशं करोति, 'परिगु०' स्वाध्यायं करोति, प्राप्तास्ते पृच्छन्ति क्व भिक्षा कृता ?, दृष्टेऽदृष्टे च विभाषा विकल्पना । यदि भिक्षामटन् दृष्टस्तदैवं वक्ति तत्रैव श्राद्धादिगृहे भिक्षां भुक्त्वेहाऽऽगतः ॥१५३॥ अथ न दृष्टस्ततः —

अदिट्ठे किं वेला, तेसि णिबंधंमि दायणे खिंसा ।
ओहामिओ उ बडुओ, वण्णो अ पहाविओ तहिअं ॥१५४॥

१ धूल्या वा छादयति ॥K॥

अदृष्टे वाच्यं किं वेला वर्त्तते भिक्षाटनस्याथैवमप्युक्तानां तेषां पात्रकदर्शने निर्बन्धस्ततो दर्शयति दृष्टे च पात्रके तं बटुं खिंसन्ति धिक् त्वामसमीक्षितभाषिणं । 'ओहामिओ'त्ति पराजितो बहुभिस्तिरस्कृत इत्यर्थः । वर्णश्च यशः प्रख्यापितस्तत्रेति तस्मिन् भोजनविधौ 'सुण्ण' इत्ययमवयवो व्याख्यातः । इदानीं 'बाहिं सागार'त्ति व्याचष्टे ॥१५५॥

सुण्णघरासइ बाहिं, देवकुलाईसु होइ जयणा उ ।
तेगिच्छिधाउखोभो, मरणं अणुकंपपडिअरणं ॥१५५॥

शून्यगृहाभावे देवकुलादौ याति वनादौ वा, तत्रापीयमेव यतना । "बाहिं संसइ लट्ठीइ दार घट्टणे[१]ति" पूर्ववत्त्रापि । अथ कथं बहिः सागारिकसंभवोऽत आह । 'तेगिच्छि'त्ति चिकित्सको वैद्यः स कदाचित्तस्य साधोर्भिक्षामटतः [२]'धातुखोभ'त्ति धातुवैषम्यं दृष्ट्वा इदं चिन्तयति । यद्यस्यामवस्थायामयं साधुर्भक्षणं करोति ततोऽवश्यं म्रियते । इत्यनुकम्पया 'पडियरणं' साधोरनुमार्गेण गत्वा निरूपणं करोति, यद्ययमिदानीमेव भोक्ष्यति, ततो निवारयिष्यामि वैद्यकशास्त्रपरीक्षणं वा कृतं भवति । एवमसौ वैद्यस्तस्यानुमार्गेण गत्वा लीनस्तिष्ठति साधुरपि ॥१५५॥

इरियाइ पडिक्कंतो, परिगुणणं संधिआ भि का गुणिआ ? ।
अम्हं एसुवएसो, धम्मकहा दुविह पडिवत्ती ॥१५६॥

(१) असइ अपज्जत्ते वेति १४९ गाथास्थोऽयमंशः । (२) इदं नास्ति ॥K॥

ईर्यापथिकीं प्रतिक्रान्तः सन् कियन्मात्रं परिगुणयति । गुणनात्समधातुं दृष्ट्वेदं वक्ति वैद्यः । संहिता—चरकसुश्रुतरूपा का भवताधीता? येन गतमात्रणैव न भुक्तं । साधुराहास्माकमयं सर्वज्ञोपदेशो यदुत—स्वाध्यायं कृत्वा भुज्यते । ततश्च धर्मकथां कथयति । पश्चात्तस्य द्विविधा प्रतिपत्तिः । कदाचित्संयतो भवेत् कदाचित् श्रावक इति । देवकुलादौ भुञ्जानस्यायं विधिः । तदभावेऽनुकूलमार्गव्यवस्थितं स्थण्डिलं प्रति प्रयाति ॥१५६॥

थंडिल्लासइ चीरं, णिवायसंरक्खणाइ पंचेव ।
सेसं जा थंडिल्लं, असईए अण्णगामंमि ॥१५७॥

स्थण्डिले गत्वा भुङ्क्ते, स्थण्डिलेऽसति यदि क्षुधा पीड्यते तदाऽस्थण्डिलेऽपि चीरं विस्तार्य पादयोरधः परिशाट-रक्षणार्थं त्रीन् पञ्च वा कवलान् भुङ्क्ते । शेषं स्थण्डिले नयति । तदऽलाभेऽन्यग्रामे प्रयाति तत्र च स्थण्डिले भुङ्क्ते । ॥१५७॥ यदुक्तं 'कालदुवे'त्ति तदाह—

अपहुप्पंते काले, तं चेव दुगाउयं णऽइक्कामे ।
गोमुत्तिअदड्ढाइसु, भुंजइ अहवा पएसेसु ॥१५८॥

अथ तस्य गच्छतो योऽभिप्रेतग्रामः स क्रोशत्रये संजातः । ततः पर्याप्यमाणे प्रभूते काले सति पूर्वगृहीतं भक्तं त्यक्त्वाऽन्यद् गृह्णाति । अथाऽस्तमनकालस्ततस्तदेव क्षेत्रातिक्रान्तमपि भुङ्क्ते, यदि कालः पर्याप्यते

तदा द्विगव्यूतात्परतो नातिक्रामति । यदि गच्छतः क्रोशद्वयस्थितग्रामस्याऽऽरतः सूर्योऽस्तमुपयाति तदा गोमूत्र-दग्धप्रदेशेषु भुङ्क्ते, आदिशब्दात्शूकरोत्कीर्णप्रदेशादौ, 'अहवे'त्ति तदभावे धर्माधर्माकाशास्तिकायकल्पनां तत्र स्थाने कृत्वा भुङ्क्ते, अयमर्थः – धर्माधर्माकाशास्तिकायैस्तिरोहितायां भुव्यऽहं व्यवस्थितश्चानया यतनया सशूकृता [1]सशङ्कता दर्शिता भवति । उक्त' सञ्ज्ञिद्वारम् ॥१५८॥ साधर्मिकद्वारमाह—

दिट्ठमदिट्ठा दुविहा, णायगुणा चेव हुंति अण्णाया ।
अद्दिट्ठावि अ दुविहा, सुअमसुअ पसत्थमपसत्था ॥१५९॥

साधर्मिका द्विधा दृष्टा अदृष्टाश्च, ये दृष्टास्ते द्विधा ज्ञातगुणा अज्ञातगुणाश्च । अदृष्टा अपि द्विधा श्रुतगुणा अश्रुतगुणाश्च । ज्ञातगुणा द्विधा—प्रशस्तज्ञातगुणा अप्रशस्तज्ञातगुणाः । अज्ञातगुणा अपि द्विधा – प्रशस्ताऽज्ञातगुणा अप्रशस्ताऽज्ञातगुणाः । श्रुतगुणा अपि द्विधा प्रशस्तश्रुतगुणा अप्रशस्तश्रुतगुणा, एवमश्रुतगुणा अपि दृष्टाः ॥१५९॥

कथमज्ञातगुणा भवन्त्यत आह—

दिट्ठा व समोसरणे, ण य णायगुणा हवेज्ज ते समणा ।
सुअगुण पसत्थ इयरे, समणुण्णिअरे य सव्वेवि ॥१६०॥

१ नास्त्ययमंशः ॥K॥

स्नात्रादौ झटिति दृष्टा न ज्ञातगुणाः स्युः । 'सुअ०' इतरेऽदृष्टाः । प्रशस्तश्रुतगुणा गृह्यन्ते तदनेनाऽप्रशस्तश्रुतगुणा इति भङ्गकोऽनन्तरगाथोपन्यस्तः सूचित इति । 'सम०' सर्वेऽपि चैते श्रुतादिगुणभेदभिन्नाः साधवः, स० साम्भोगिकाः । इ० असाम्भोगिका इति। एतेषां मध्ये ये शुद्धास्तेष्वेव संवसनं करोति नेतरेषु ॥१६०॥ अमुमेवार्थमाह—

जइ सुद्धा संवासो, होइ असुद्धाण दुविह पडिलेहा ।
अब्भितर–बाहिरिआ, दुविहा दव्वे अ भावे अ ॥१६१॥

यदि शुद्धास्तदा संवासः प्रशस्तश्रुतगुणाः प्रशस्तज्ञातगुणाश्च तेष्वेवंविधेषु साधुषु संवसति । अशुद्धाः - अप्रशस्तश्रुतगुणा अप्रशस्तज्ञातगुणाः । अशुद्धानां द्विविधा प्रत्युपेक्षणा, अभ्यन्तरबाह्यभेदात् । एकैका द्विविधा द्रव्यविषया भावविषया च ॥१६१॥ बाह्यां द्रव्यतः प्रतिपादयन्नाह—

घट्टाइतलिअदंडग–पाउय संलग्गिरी अणुवओगो ।
दिसि पवणगामसूरिअ–वितहं उच्छोलणा दव्वे ॥१६२॥

घृष्टा जङ्घासु दत्तफेनका आदिशब्दात् मट्ठ–तुपट्टादयः । 'तलि०' सोपानत्का–उपानद्गूढपादाः । 'दंडग'त्ति वेत्रलतादण्डकै[1]र्गृहीतैः, 'पाउय'मिति [2]प्रावृताः यथा संयत्यः प्रावृण्वन्ति कल्पं तथा तैः प्रावृतं । 'संलग्गिरि'त्ति



१ कयुक्ताः ॥K॥ । २ प्रावृताः संयतीव ॥K॥ ।

परस्परहस्तलग्ना – युगलिता वा व्रजन्ति ईर्यायामनुपयुक्ताः । एवं बहिर्भुवं गच्छन्तः प्रत्युपेक्षिताः । इदानीं सञ्ज्ञा[१]भूमिगतान् परीक्षते 'दिसि'त्ति–पवनग्रामसूर्याणामागमोक्तविधिविपर्यासेनोपविशन्ति । 'उच्छो०' पुरीषमुत्सृज्य बहुपयसा क्षालनं करोति । आह पूर्वमाभ्यन्तरोपन्यासः कृतोऽनन्तरगाथायाम्, अत्र कस्मात्पूर्वं बाह्यप्रत्युपेक्षणोपन्यासः ? उच्यते पूर्वं बाह्यैव प्रत्युपेक्षणा पश्चादाभ्यन्तरा स्यात्, परमत्र प्राधान्यख्यापनार्थं आदावाभ्यन्तराया उपन्यासः कृतः ॥१६२॥ अधुना बाह्यां भावत आह—

विकहा हसिउग्गाइय-भिण्णकहा-चक्कवाल-छलिअकहा ।
माणुसतिरिआवाए, दायण आयरणया भावे ॥१६३॥ [दारं]

स्त्र्यादिकथाः कुर्वन्तः, ह० हसन्त उद्गायन्तश्च व्रजन्ति, 'भिन्न०' मैथुनसंबद्धाः कथाः कथयन्तः 'चक्कवाल'त्ति मण्डलबन्धेन स्थिता व्रजन्ति । 'छलि०' षट्प्रज्ञकगाथाः पठन्तो व्रजन्ति, मानुषतिर्यगापाते सञ्ज्ञां व्युत्सृजन्ति । 'दा०' अङ्गुल्या परस्परं किमपि दर्शयन्ति । इयमेवाचरणता दर्शिता । 'भावे'त्ति द्वारपरामर्शः । अशुद्धानपि साधून् दृष्ट्वा प्रविशति कदाचित्ते गुर्वनादेशेनापि कुर्वन्ति ॥१६३॥ एतदेवाह—

बाहिं जइवि असुद्धा, तहा वि गंतूण गुरुपरिक्खा उ ।
अहव विसुद्धा तहवि उ, अंतो दुविहा उ पडिलेहा ॥१६४॥

१ ०मिस्थान् ॥K॥

बाह्यया विशुद्धा एव स्युस्तथाप्यन्तः- [अभ्यन्तरतः] अभ्यन्तरा प्रत्युपेक्षणा द्विधा, द्रव्यभावभेदेन ॥१६४॥ अधुना द्रव्याभ्यन्तरमाह—

पविसंत णिमित्तमणेसणं व, साहइ ण एरिसा समणा ।
अम्हंपि ते कहंती, कुक्कुडखरियाइ ठाणं च ॥१६५॥

प्रविशन् भिक्षार्थं निमित्तं पृच्छयते गृहस्थैर्न कथयति, अनेषणां क्रियमाणां निवारयति। 'सा०' गृही कथयति नास्मदीयश्रमणा एवंविधाः,ते निमित्तादि कथयन्ति । अनेषणीयमपि लान्ति । एवमभिधीयते गृहस्थेन । 'कुकुड'त्ति कुर्कुटप्रायोऽयमिति । एवं भिक्षामटता प्रत्युपेक्षणा कृता । इदानीं दूरस्थ एवोपाश्रयसक्तां करोति । 'ख०'द्व्यक्षरिका वेश्या तत्समीपे उपाश्रयः । वसतिबाह्या प्रत्युपेक्षणोक्ता ॥१६५॥ उपाश्रयाभ्यन्तरे द्रव्यत आह—

दव्वंमि ठाणपुलए, सेज्जा-संथार-काय-उच्चारे ।
कंदप्पगिह-विकहा, वुग्गह-किड्डा य भावंमि ॥१६६॥

द्रव्यमिति द्वारपरामर्शः । वर्षाकालं विनाऽपि फलकेऽवस्थितिः, शय्याऽऽस्तृतैवास्ते । संस्तरकास्तृणमयाः, प्रकीर्यन्तेऽधस्तृणानि स्वपद्भिः, तं संस्तारकं पश्यति। 'काय'त्ति कायिकाभूमिं गृहस्थसम्बद्धां पश्यति। उच्चारयन्ति गृहस्थैः सह व्युत्सर्गं कुर्वन्ति, अथवा उच्चारं-श्लेष्मपरिष्ठापनमङ्गणे करोति, इयमाभ्यन्तरा द्रव्यतः । भावत आह-

'कं० वुग्ग०' विग्रहं-कलहं कुर्वन्ति, क्रीडा पाशकैः, इयं भावविषया ॥१६६॥ एतद्दोषवर्जितेषु संयतेषु प्रवेशमाह—

संविग्गेसु पवेसो, संविग्गऽमणुण्ण बाहि किइकम्मं ।
ठवणकुला पुच्छणया, एत्तो च्चिअ गच्छ गविसणया ॥१६७॥ [दारं]

संविग्ना मोक्षाभिलाषिणस्तेषु प्रवेशस्तदभावे संविग्नेष्वमनोज्ञेषु, उपकरणं बहिर्मुक्त्वा एकस्मिन् प्रदेशे, [१]कृति-कर्म करोति । स्थापनाकुलानि भिक्षार्थं पृच्छति ततस्ते कथयन्त्यमुकत्रामुकानि । 'इतो०' अस्या एव भिक्षाटनभूमेर्गमिष्यामीति ब्रवीति । 'गवि०' तं तस्मात् ग्रामादेर्निर्गतं [२]गवेषयन्ति । ॥१६७॥ उक्तं साधर्मिकद्वारम् । वसतिद्वारमाह – स साधुर्गच्छन्नस्तमनसमये वसतिं निरूपयति । [३]सा चैषु निरूपणीया—

संविग्ग-सण्णि-भद्दग-सुण्णे णिइयाइ मोत्तुऽहाच्छंदे ।
वच्चंतस्सेतेसुं, वसहीए मग्गणा होइ ॥१६८॥ [दारं]

संविग्नेषु वसतिमार्गणा कर्तव्या, तदभावे सञ्ज्ञी श्राद्धः संविग्नभावितस्तस्मिन्, भद्रकः साधूनां तस्मिन् वा, तदभावे नित्यवास्यादिषु, आदिशब्दात्पार्श्वस्थादयस्त्रयो गृह्यन्ते मुक्त्वा यथाच्छन्दान् स्वच्छन्दानित्यर्थः । तत्र वसतिर्न मृग्यते, व्रजतः साधोरेतेष्वनन्तरोदितेषु वसतेरन्वेषणं कर्त्तव्यम् ॥१६८॥ इमां द्वारगाथां प्रतिपदं व्याख्यानयति—

१ 'कृति' इति पदं नास्ति ॥k॥ २ निर्गमं गवेषयन्ति ते ॥k॥ ३ 'चैषु स्थानेषु' ॥k॥

वसही समणुण्णेसुं, णिइयादमणुण्ण अण्णहि णिवेए ।
सण्णिगिहिइत्थिरहिए, सहिए वीसुं घरकुडीए ॥१६९॥

संविग्नसमनोज्ञेषु [१]प्रथमं वसतिरन्वेष्या, नित्यवास्यादयोऽमनोज्ञा-अन्यसामाचारीप्रतिबद्धा वैतेषु न वसनीयं । किन्त्वन्यत्र वसतिं कृत्वा निवेदयत्यहमत्र स्थितोऽस्मि, प्रतिजागरणीया भवद्भिरिति, क्वेत्याह ? स्त्रीरहिते सञ्ज्ञि-गृहे चाऽऽस्ते । 'गिहि'त्ति गृही भद्रकोऽत्र सूचितः, स च स्त्रीरहितस्तदा तत्पार्श्वे वसति । अथ भद्रकोऽपि स्त्रीरहितो नास्ति किन्तु सभार्यः, ततः सहिते स्त्रीयुक्ते सति 'वीसु''त्ति पृथग् निवसति क्व ? घरकुडीए, तस्यैव बहिः स्थितर-न्धनकोष्ठे वा निवसति, अथवा तत्फलहिकान्तर्गतकुड्यां वा ॥१६९॥ तदभावे शून्यगृहे, किंविशिष्टे इत्याह—

अहुणुव्वासिअ सकवाड, णिव्विले णिच्चले वसइ सुण्णे ।
अणिवेइएयरेसिं, गेलण्णे ण एस अम्हंति ॥१७०॥

अधुनोद्वासिते [१] सकपाटे [२] निर्बिले [३] निश्चले [४] शून्यगृहे निवसति । एतैः चतुर्भिः पदैर्भङ्गाः षोडश । यदा इतरेषां नित्यवास्यादीनामनिवेद्य [२]वसति तदा कदाचित् ग्लानत्वे प्राप्ते नैषोऽस्माकमिति ते श्राद्धानां पुरः कथयन्ति । यदा तु पूर्वोक्तानां सर्वेषामेवाभावः, किन्तु तत्र क्षेत्रे नित्यवास्यादयः सन्ति ततस्तेष्वेव वसित-व्यम् ॥१७०॥ [३]एतावदाह—

१ आदौ ॥k॥ २ आस्ते ॥k॥ २ एतदाह ॥k॥

णीयाइ-अपरिभुत्ते, सहिएयरपक्खिए व सज्झाए ।
कालो सेसमकालो, वासो पुण कालचारीसु ॥१७१॥

नित्यवास्यादौ वासः कथमित्याह—'अपरिभुत्ते'त्ति नित्यवास्याद्यनाक्रान्तप्रदेशे वसति । ते च नित्यवास्यादयः 'सहि०' संयतीसहिता इतरे च, तेषु संयतीरहितेषु निवसति । ये संयतीयुक्तास्ते द्विविधाः कालाकालचारिणीभिः संयतीभिर्युक्ताः । कः कालः ? 'पक्खि०' पाक्षिकक्षामणार्थं स्वाध्यायार्थं वा [१]गच्छन्ति अयं कालः, शेषस्त्वकालः । वासः पुनः कालचारिसंयतीयुक्तसाधुषु ॥१७१॥ तदभावे—

तेण परं पासत्थाइएसु ण य वसइऽकालचारीसु ।
गहिआ—वासगकरणं, ठाणं [२]गहिएणऽगहिएणं ॥१७२॥

ततः परं पार्श्वस्थादिषु वसतः को विधिरित्याह । 'गहि०' गृहीतोपधिस्तत्रावश्यकं करोति, 'ठाणं'तिकायोत्सर्गं करोति गृहीतेनोपधिना यदि शक्नोति, शक्त्यऽभावेऽगृहीतेनापि ॥१७२॥ श्रान्तः सन् कायोत्सर्गं कर्त्तुं न शक्नोति ततः—



१ 'आयान्ति' ॥k॥ २ 'अगहिएणं' अस्यांशस्य व्याख्यानं नास्ति 'k' संज्ञकप्रतौ ।

णिसिअ तुयट्टण जग्गण, विराहणभएण पासि णिक्खिवइ ।
पासत्थाईणेवं, णिइए णवरं अपरिभुत्ते ॥१७३॥

गृहीतोपकरणो निषण्ण उपविष्ट आस्ते । 'तुयट्ट०' त्वग्वर्त्तनं शयनं करोति △'[1]गृहीतेनोपकरणेन यदि शक्नोति' △ जाग्रदास्ते न स्वपिति, अथ जागरणमपि कर्तुं न शक्नोति ततो विराधनाभयेन पात्रकभङ्गभयेनोपकरणं पार्श्वे निक्षिप्य स्वपिति, पार्श्वस्थादिषु निवसतोऽयं विधिः । नित्यवासिनां वसतो नवरमयं विशेषः - तदनाक्रान्तप्रदेशे उपकरणं स्थापयित्वा स्वपिति, शेषं तथैव गह्रिया—वास[ग]करणादि ॥१७३॥

एमेव अहाच्छंदे, पडिहणणा झाण अज्झयण कण्णा ।
ठाणट्ठिओ णिसामे, सुवणाहरणा य गहिएणं ॥१७४॥ [दारं]

यः पार्श्वस्थादौ विधिरुक्तः । एवमेव यथाच्छन्देऽपि, नवरमयं विशेषः - 'पडि०' तस्य यथाच्छन्दस्याऽसन्मार्ग-प्ररूपिकां कथां कुर्वतस्तेन साधुना प्रतिहननं व्याघातः कर्त्तव्यो यथैतदेवं न भवति, 'झाण'त्ति प्रतिघातकरणसामर्थ्या-ऽभावे ध्यानं करोति ध्यायन्नास्ते, अथ [2]तथापि कथां करोति, ततस्तद्व्याघातार्थं स्वाध्यायं विधत्ते, तथापि न तिष्ठति चेत्तदा कर्णौ स्थगयति । अथवा 'सु०' सुप्तः सन्नाहरणा—घोरयति घोरणं करोति महता [3]शब्देन, सोऽपि निर्विण्णः

[1] △ △ एतच्चिह्नान्तर्गतो भागः k संज्ञकप्रतौ विद्यते । [2] ०तथापि न तिष्ठति ॥k॥ [3] ०शब्देनाऽगृहीतोपधिः, ॥k॥

सन्नुपसंहरति कथाम् । उक्तं वसतिद्वारम् ॥१७४॥ षष्ठे द्वारे स्थानस्थितो भवति एभिः कारणैः—

असिवे ओमोयरिए, रायदुट्ठे भए णदुट्ठाणे ।
फिडिअ–गिलाण कालग–वासे ठाणट्ठिओ होइ ॥१७५॥ (दारगाहा)

'[१]असिवे'–देवताजनितोपद्रवे जाते सति तस्मिन् यथा[त्रा]भिप्रेतं गमनं कदाचिदपान्तराले वा भवति तद्। ततश्चानेन कारणेन स्थानस्थितो भवति । 'उ[ओ]मो'० दुर्भिक्षं, राजद्विष्टं, भयं–म्लेच्छादिजनितम् । 'नइ'त्ति नदी कदाचिद्विवक्षिते देशेऽपान्तराले वा भवति तेन च कारणेन स्थानस्थितो भवति । 'उद्वि'त्ति उद्वसितः स विवक्षितो देशः, 'फिडिए'त्ति कदाचिदाचार्यः स तस्मात् क्षेत्रात् च्युतोऽपगतः, ग्लानः स्वयं जातः, कश्चिदन्यो वा, कदाचिदसावाचार्यः कालगतो मृतः स्यात्तान्नश्रयं, 'वासं'ति वर्षाकालः संजातस्ततस्तत्प्रतिबन्धात् स्थानस्थितो भवति ॥१७५॥ इमां द्वारगाथां व्याख्यानयन्नाह—

तत्थेव अंतरा वा, असिवादी सोउ परिरयस्सऽसइं ।
संचिक्खे जाव सिवं, अहवावी ते तओ फिडिआ ॥१७६॥

तत्रैव विवक्षिते देशेऽन्तरा वाऽशिवादयो जाता आदिशब्दादवमौदरिकाराजद्विष्ट[२]भयानि । 'परिरयस्स०' भमा-

१ 'असिवे' इत्यत आरभ्य 'भवति' पर्यन्तो भागः 'k' संज्ञकप्रतौ नास्ति । २ ०भयानि तानि श्रुत्वा ॥k॥

डयस्स असत्यभावे तिष्ठति, एतदुक्तं भवति - यदि गन्तुं शक्नोति भमिणा ततोऽपान्तरालं परिहृत्याभिलषितं स्थानं गच्छति । अथ न शक्यते गन्तुं ततः 'संचि०' संतिष्ठेत् कियन्तं कालं 'जाव०' यावच्छिवं निरुपद्रवं जातमिति । 'अह०' अथवाऽऽचार्यास्ते तस्मात् क्षेत्रादपगता भ्रष्टाः, ततश्च वार्त्तोपलम्भं यावत्तिष्ठति ॥१७६॥ शेष[1]द्वाराणि व्याख्यानयति—

पुण्णा व णई चउमास-वाहिणी णवि अ कोइ उत्तारे ।
तत्थंतरा व दोसो व, उट्ठिओ ण य लब्भइ पवत्ती ॥१७७॥

पूर्णा भृता नदी चतुर्मासवाहिनी न कश्चिदुत्तारयति ततोऽपान्तराल एव तिष्ठति । तत्रान्तराले [अन्तरा] वा देश उद्वसितः । न च प्रवृत्तिर्वार्त्ता लभ्यतेऽतस्तिष्ठति तावत् ॥१७७॥

फिडिएसु जा पवित्ती, सयं गिलाणो परं व पडियरइ ।
कालगया व पवत्ती, ससंकिए जाव णिस्संकं ॥१७८॥

'फिडितेषु' तस्मात् क्षेत्रादपगतेषु सत्सु यावद्वार्त्ता भवति (स्यात्) तावत्तिष्ठति । अत्र भाष्यकृद्वगान्न पुनरुक्तदोषः ॥ तथा 'सयं०' स्वयमेव ग्लानो जातोऽथाऽन्यं वा ग्लानं प्रतिचरति ततस्तिष्ठति। अथवा कालगतास्ते आचार्या इति प्रवृत्तिः श्रुताऽतः सशङ्कितायां वार्त्तायां तावदास्ते यावन्निः[2]शङ्कितं जातमिति । ॥१७८॥

१ ०द्वाराणि भाष्यकारः स्तोकं स्तोकम् ॥k॥ २ निःशङ्कितः ॥k॥

वासासुं उब्भिण्णा, बीयाई तेण अंतरा चिट्ठे ।
तेगिच्छि भोइ सारक्खणहट्ठे ठाणमिच्छन्ति ॥१७९॥

वर्षासूद्भिन्ना बीजादयः ततोऽपान्तराले एव तिष्ठति । वर्षाकालप्रतिबन्धात्तिष्ठन् वैद्यं भोगिकं ग्रामस्वामिनं च पृच्छति, किमर्थम्? इत्याह—'सार'० वैद्यं [1]मान्द्ये द्ढीकरणार्थं, भोगिकं परिभवादेः संरक्षणार्थं, पृच्छति। ततः स्थानं वसनमिच्छति ॥१७९॥ केष्वित्याह—

संविग्ग-सण्णि-भद्दग—अहप्पहाणेसु भोइयघरे वा ।
ठवणा आयरियस्सा, सामायारी पउंजणया ॥१८०॥

संविग्नेषु—मोक्षाभिलाषिषु, सञ्ज्ञिगृहे, भद्रकगृहे, यथाप्रधानेषु, यो यत्र ग्रामादौ प्रधानस्तेषु तिष्ठति । एतदभावे भोगिकगृहे तिष्ठति । तत्र तिष्ठन्, ठवणा० दण्डकादिकमाचार्यं परिकल्पयति, निराबाधे प्रदेशे अयं ममाचार्य इति, तस्य चाग्रतः सकलां चक्रवालसमाचारीं प्रयुङ्क्ते निवेद्य करोतीत्यर्थः । एष एकः कारणिकः । इतश्च कारणिकद्वारम् ॥१८०॥ एवं तावत्कारणिकः—

१ मन्दताया द्ढी० ॥k॥

एवं ता कारणिओ, दुइज्जइ जुत्त अप्पमाएणं ।
णिक्कारणिअं एत्तो, चइओ आहिंडिओ चेव ॥१८१॥

'दुइ०' विहरति युक्तोऽप्रमादेन प्रयत्नपर इत्यर्थः । निष्कारणिक उच्यते, स द्विविधः, 'चइओ०'(प्र०) त्याजितः सारणावारणादिभिः । आहिण्डिकोऽ[1]गीतार्थः चक्रस्तूपादिदर्शनप्रवृत्तः ॥१८१॥ तत्र त्याजितमाह—

जह सागरंमि मीणा, संखोहं सागरस्स असहंता ।
णिंति तओ सुहकामी, णिग्गयमित्ता विणस्संति ॥१८२॥

यथा समुद्रे मीना मत्स्याः संक्षोभं सागरस्याऽसहमाना निर्गच्छन्ति ततः समुद्रात्सुखाभिलाषिणो, निर्गतमात्रा विनश्यन्ति ॥१८२॥

एवं गच्छसमुद्दे, सारणवीईहिं चोइया संता ।
णिंति तओ सुहकामी, मीणा व जहा विणस्संति ॥१८३॥ [दारं]

गच्छसमुद्रात् सारणवारणवीचिभिस्त्याजिता निर्गच्छन्ति, सुखकामिनो, मीना इव [2]विनश्यन्ति ॥१८३॥ आहिण्डिकमाह—

[1] 'आहिण्डिक'श्चागीतार्थः ॥k॥ [2] 'तथा विनश्यन्ति' ॥k॥

उवएस-अणुएवसा, दुविहा आहिंडआ समासेणं ।
उवएस देसदंसण, अणुवएसा इमे होंति ॥१८४॥

आहिण्डिको द्विविधः । 'उ०' उपदेशाहिण्डिको यो देशदर्शनार्थं सूत्रार्थोभयनिष्पन्नो हिण्डते विहरति ॥१८४॥ अनुपदेशाहिण्डिकमाह—

चक्के थूभे पडिमा, जम्मण णिक्खमण णाण णिव्वाणे ।
संखडि विहार आहार, उवहि तह दंसणट्ठाए ॥१८५॥

चक्रं—धर्मचक्रं, स्तूपो मथुरायां, प्रतिमा—जीवितस्वामिसम्बन्धिनी, जन्म—यत्रार्हतां सौरिकपुरादौ तत्र याति, निष्क्रमणभुवं—उज्जयन्तादि द्रष्टुं याति, ज्ञानं यत्रवोत्पन्नं तत्प्रदेशदर्शनार्थं व्रजति, यत्र स्वभावेनैव शोभनाहारस्तत्र, शोभनोपध्यर्थं [1]देशदर्शनार्थं [वा] याति, एतेषां कृते आहिण्डिकः सन् व्रजति ॥१८५॥

एए (ते) अकारणा संजयस्स असमत्त—तदुभयस्स भवे ।
ते चेव कारणा पुण, गोयत्थविहारिणो भणिआ ॥१८६॥

एतानि(न्य)कारणान्यसमाप्तसूत्रार्थोभयसंयतस्य भवन्ति, तान्येव धर्मचक्रादीनि गीतार्थविहारिणो दर्शनादिस्थिरी-

१ ०र्थं प्रयाति ॥k॥

करणार्थं कारणानि विहरतः ॥१८६॥ तथा च आह—

[1]गीयत्थो य विहारो, बिइओ गीयत्थमीसिओ भणिओ ।
एत्तो तइअविहारो, णाणुण्णाओ जिणवरेहिं ॥१८७॥

द्वितीयं विहरणं गीतार्थमिश्रं गीतार्थेन सह, इतस्तृतीयो विहारो नानुज्ञातः ॥१८७॥ किमर्थमित्यत आह—

संजमआयविराहण, णाणे तह दंसणे चरित्ते अ ।
आणालोव (प्र. आणाकोवो) जिणाणं, कुव्वइ दीहं तु संसारं ॥१८८॥

संयमाऽऽत्मज्ञान-दर्शन-चारित्रविराधना जिनाज्ञालोपश्च कृतः स्यात्तथाऽगीतार्थ एकाकी हिण्डन् दीर्घं च संसारं करोति ॥१८८॥ इमां गाथां [2]व्याख्यानयति—

संजमओ छकाया, आया कंटऽट्ठिऽजीर-गेलण्णे ।
णाणे णाणायारो, दंसण चरगाइ वुग्गाहे ॥१८९॥

संयमतः षट्कायविराधना संभवति, आत्मविराधना कंटकाऽस्थ्यजीरणग्लानत्वैः, ज्ञानाऽऽचारमकुर्वतो ज्ञान-विराधना, दर्शनविराधना चरकादिभिर्व्युद्ग्राह्यते, ततश्चापैति दर्शनं । किं पुनश्चारित्रं न व्याख्यातम् ? उच्यते, ज्ञान-

१ 'गीयत्थो' इत्यादिगाथा 'k'० प्रतौ न व्याख्याता सुगमत्वात् (सं) ।   २ ०यति भाष्यकारः ॥k॥

दर्शनाभावे चारित्रस्याप्यभाव एव । एवं तावदेकः कारणिको निःकारणिकः स्थाने स्थितो विहरन् भणितः ॥१८९॥ अधुनाऽनेकान् प्रत्युपेक्षकान् प्रतिपादयन्नाह—

णेगावि होंति दुविहा, कारणणिक्कारणे दुविहभेओ ।
जं एत्थं णाणत्तं, तमहं वोच्छं समासेण ॥१९०॥

अनेकेऽपि द्विधा कारणिक–निःकारणिकभेदेनैकैकोऽपि द्विधा स्थानस्थो विहरंश्च । ये कारणिका निःकारणिकाश्च स्थानस्था विहरन्तश्चाऽशिवादिभिः स्तूपादिभिरेकश्रमणविधिवत् ज्ञातव्या, योऽत्र विशेषस्तमहं वक्ष्ये सामान्येन ॥१९०॥ सामान्येन चतुर्द्धा साधवस्तानाह—

जयमाणा विहरंता, ओहाणाहिंडगा चउद्धा य।
जयमाणा तत्थ तिहा, णाणट्ठा दंसण–चरित्ते ॥१९१॥

यतमानाः संयमे, विहरन्तो मासकल्पेन, 'उहा०' अवधावमानाः (प्र.)(अवधावन्तः) प्रव्रज्यातोऽवसर्पन्तः, आहिण्डिका भ्रमणशीला एते चतुर्विधाः, 'जय०' यतमानास्त्रिधा ज्ञानदर्शनचारित्रार्थम् ॥१९१॥

जयमाणा खलु एवं, तिविहा उ समासओ समक्खाया ।
विहरंता विअ दुविहा, गच्छगया णिग्गया चेव ॥१९२॥

अधुना विहरमाणा द्विधा, गच्छगता गच्छनिर्गताश्च ॥१९२॥ एतदेवाह—

पत्तेयबुद्ध-जिणकप्पिया य, पडिमासु चेव विहरन्ता ।
आयरिअ-थेर-वसभा, भिक्खु खुड्डा य गच्छंमि ॥१९३॥

प्रत्येकबुद्धा जिनकल्पिकाश्च प्रतिमाप्रतिपन्नाश्च एते गच्छनिर्गता विहरमाणकाः। इदानीं गच्छप्रविष्टाः, आचार्यः प्रसिद्धः, स्थविरो - यः सीदन्तं ज्ञानादौ स्थिरीकरोति, वृषभः - वैयावृत्त्यक्षमः, भिक्षव एतद्व्यतिरिक्ताः, क्षुल्लकाः प्रसिद्धाः। आह—किमर्थं जिनकल्पिकादीनां गच्छनिर्गतानां पूर्वमुपन्यासः कृतः ? उच्यते, एतेषां प्राधान्यख्यापनार्थम् । प्रथममेवेत्थं कस्मान्नोपन्यासः कृतः ? इति चेद्, उच्यते, तेऽपि गच्छपूर्वा एवेति ज्ञापनार्थम्। प्रत्येकबुद्धा न गच्छनिर्गता इति चेत्, न, तेषामपि जन्मान्तरे गच्छपूर्वकत्वेन गच्छनिर्गतत्वसद्भावात् । यतस्तेषां नवपूर्वाणि पूर्वाधीतानि विद्यन्ते ॥१९३॥ अवधावतः प्रतिपादयति—

ओहावंता दुविहा, लिंगविहारे य होंति णायव्वा ।
लिंगेणऽगारवासं, णियया ओहावण विहारे ॥१९४॥

अवधावन्तः— प्रव्रज्यादेरपसर्पन्तः द्विविधाः, लिङ्गादवधावन्ति गृहस्थतां प्रतिपद्यन्त इत्यर्थः, उद्यतविहारादवधावन्ति पार्श्वस्थादयो भवन्ति, नित्यादिषु वसन्तीत्यर्थः ॥१९४॥ आहिण्डिकानाह—

गच्छगता
निर्गताश्च
विहरमाणका
के ? के ?।

उवएस-अणुवएसा, दुविहा आहिंडआ मुणेयव्वा ।
उवएस-देसदंसण, थूभाई हुंति णुवएसा ॥१९५॥

उपदेशाऽऽहिण्डिका अनुपदेशाऽऽहिण्डिकाः । देशदर्शनार्थं द्वादश वर्षाणि पर्यटन्ति सूत्रार्थौ गृहीत्वैते उपदेशाऽऽहिण्डकाः । स्तूपादिगमनशीला अनुपदेशाऽऽहिण्डकाः ॥१९५॥ विहरमाणानां गच्छगतानां विधिमाह—

पुण्णंमि मासकप्पे, वासावासासु जयणसंकमणा ।
आमंतणा य भावे, सुत्तत्थ ण हायइ जत्थ ॥१९६॥

पूर्णे मासकल्पे वर्षावासे वा यतनया क्षेत्रान्तरे संक्रमणं कार्यम्, आचार्यः शिष्यानामन्त्रयति—पृच्छति क्षेत्रप्रत्युपेक्षकप्रेषणकाले, चशब्दादागतेषु क्षेत्रप्रत्युपेक्षकेषु, क्षेत्रगमने [वा] भावं प्रतीक्षते कस्य किं क्षेत्रं रोचते? तत्र सर्वेषां मतं लात्वा यत्र सूत्रार्थहानिर्न भविष्यति तत्र गमिष्यत्याचार्यः ॥१९६॥ एतामेव व्याख्यानयति, अत्र यदुपन्यस्तं 'जयणसंकमणं'ति तदाह—

अप्पडिलेहिअदोसा, वसही भिक्खं च दुल्लहं होज्जा ।
बालाइगिलाणाण व, पाउग्गं अहव सज्झाओ ॥१९७॥

अप्रत्युपेक्षणे इमे दोषाः । वसतिर्भिक्षा वा दुर्लभा स्यात् । बालादिग्लानानां प्रायोग्यं दुर्लभं भवेत् । स्वा-

ध्यायो वा मांसाद्याकीर्णत्वात् दुर्लभः ॥१९७॥

तम्हा पुव्वं पडिलेहिऊण पच्छा विहीएँ संकमणं ।
पेसेइ जइ अणापुच्छिउं गणं तत्थिमे दोसा ॥१९८॥

तस्मात् पूर्वमेव प्रत्युपेक्ष्य पश्चाद्विधिना संक्रमणं कर्त्तव्यम् । यदुक्तं 'आमंतण'त्ति, तदाह – 'पे०' प्रेषयति यदि क्षेत्रप्रत्युपेक्षकान् गणमनापृच्छय तदेमे दोषाः ॥१९८॥

अइरेगोवहि-पडिलेहणाए कत्थवि गयत्ति तो पुच्छे ।
खेत्ते पडिलेहेउं, अमुगत्थ गयत्ति तं दुट्ठं ॥१९९॥

अतिरिक्तोपधि-प्रत्युपेक्षणायां सत्यां ते कुत्र गता इति पृच्छन्ति शेषसाधवः । आचार्योऽप्याह–प्रत्युपेक्षितुममुकत्र क्षेत्रे गताः, तेप्याहुः तत् क्षेत्रं न शोभनं ॥१९९॥ यतस्तत्र गच्छताम्—

तेणा सावय-मसगा, ओमऽसिवे सेह-इत्थि-पडिणीए ।
थंडिल्ल-अगणि उट्ठाण, एवमाइ भवे दोसा ॥२००॥

स्तेना अर्द्धपथे, श्वापदानि मशका वाऽतिदुष्टाः । दुर्भिक्षमशिवं, यदि वा 'सेह'त्ति अभिनवप्रव्रजितस्य स्वजनाः सन्ति ते चोत्प्रव्राजयन्ति, स्त्रियो वा मोहप्रचुराः, प्रत्यनीकोपद्रवः, स्थण्डिलानि न विद्यन्ते, अग्निना दग्धः स

देशः, उत्थित-उद्वसितः स देशो योऽपान्तराले, इत्येवमादयो दोषाः ॥२००॥ तत्राऽपि प्राप्तस्यैते दोषाः—

पच्चंत तावसीओ, सावय–दुब्भिक्ख–तेण–पउराइं ।
णियग–पदुट्ठुट्ठाणे, फेडण–हरियाइ (हरिहरिय) पण्णीए ॥२०१॥

स हि देशः प्रत्यन्तो म्लेच्छाद्युपद्रवोपेतः, तापस्यः—तापसप्रव्रजिताः प्रचुरमोहाः संयमाद् भ्रंशयन्ति । श्वापद-दुर्भिक्षयोर्भयं, 'ते०' स्तेनप्रचुराणि वा क्षेत्राणि, निजकः स्वजनादिरुत्प्रव्राजयति, प्रद्विष्यो वा तत्र कोपि, उद्वसितो देशः, 'फे०' प्राक् तत्र वसतिरासीदधुनाऽपनीता कदाचित् स्यात्, हरितपर्णी-हरितं तत्र शाकादिबाहुल्येन भक्ष्यते तच्च साधूनां न कल्पते, दुर्भिक्षप्रायं वा, अथवा हरितपर्णी तत्र देशे केषुचिद् [१]गृहेषु राज्ञो दण्डं दत्त्वा देवता-बल्यर्थं पुरुषो मार्यते, स च पुरुषः प्रव्रजितादि-भिक्षार्थं प्रविष्टः सन् । तत्र [२]गृहस्योपरि आर्द्रा वृक्षशाखा चिह्नं क्रियते तच्च गृहीतसंकेतो दूरत एव परिहरति, अगृहीतसंकेतश्च विनश्यति, [३]तस्माद्वर्णं पृष्ट्वा गन्तव्यमिति । आचार्यः प्रत्युपेक्षकान् प्रेषयन् सर्वं गणमालोचयति ॥२०१॥ एकैकालोचने इमे दोषा—

सीसे जइ आमंतइ, पडिच्छगा तेण बाहिरं भावं ।
जइ इयरा तो सीसा, ते वि समत्तंमि गच्छंति ॥२०२॥

१ 'गृहेषु देवताबल्यर्थं राज्ञा दण्डं दत्त्वा पुरुषो मार्यते,' इति क्रमः (का प्र०) । २ बल्यर्थं लब्धनृपाज्ञः स्वगृहे आर्द्रवृक्षशाखाङ्कनं करोतीति भावः । सं० । ३ गृहम् इति (का० प्र०)

शिष्यान् केवलानामन्त्रयतः प्रतीच्छका बहिर्भावं चिन्तयन्ति, बाह्या वयमत्र। अथ प्रतीच्छकानालोचयतः शिष्या बहिर्भावं मन्यन्ते, प्रतीच्छकाः सूत्रार्थग्रहणसमाप्तौ गच्छन्ति, तत आचार्य एकाकी संजात [संजायते] इत्येवं दोषः ॥२०२॥ अथ वृद्धपृच्छायां—

तरुणा बाहिरभावं, ण य पडिलेहोवही ण किइकम्मं।
मूलयपत्तसरिसया, परिभूया वच्चिमो थेरा ॥२०३॥

वृद्धानालोचयतस्तरुणास्तथैवोपधिप्रत्युपेक्षणा—कृतिकर्म—पादक्षालनादि न कुर्वन्ति। तरुणान् पृच्छतो वृद्धा एवं चिन्तयन्ति—'मूलम्' मौलम्—आद्यं यत्पर्णं निस्सारं परिपक्वप्रायं तत्तुल्या वयम्, अत एव परिभूता व्रजाम इति स्थविराः चिन्तयन्ति ॥२०३॥ अथ मतं वृद्धा न प्रष्टव्याः ? तन्न, यतः—

जुण्णमएहिं विहूणं, जं जूहं होइ सुट्ठुवि महल्लं।
तं तरुणरहस-पोइय-मय-गुम्मइअं सुहं हंतुं ॥२०४॥

जीर्णमृगैर्विहीनं यद्यूथं, सुष्ठ्वपि महत्तद्यूथं तरुणरभसे रोगे पोतितं निमग्नं, मदेन गुल्मयितं·मूढं सुखं हन्तुं [शक्यम्] ॥२०४॥ तस्मात्सर्वे मिलिताः प्रष्टव्याः, कथं—

थुइमंगलमामंतण, णागच्छइ जो य पुच्छिओ ण कहे ।
तस्सुवरिं ते दोसा, तम्हा मिलिएसु पुच्छेज्जा ॥२०५॥

स्तुतिमङ्गलं कृत्वा-प्रतिक्रमणस्यान्ते स्तुतित्रयं पठित्वा गुरुः सर्वानामन्त्रयति । आकारिते च दूरस्थो यो नाऽऽयाति, यो वा पृष्टः सन्न कथयति, तस्योपरि ते दोषाः ॥२०५॥ तत एकत्रीभूतेषु—

केइ भणंति पुव्वं, पडिलेहिअ एवमेव गंतव्वं ।
तं च (प्र.तु) ण जुज्जइ वसहीं, फेडण आगंतु पडिणीए ॥२०६॥

केचनाचार्या भणन्ति यत्र क्षेत्रे प्रागपि स्थिता आसंस्तत्राऽप्रत्युपेक्ष्य गम्यते, तन्न—यस्मात्तत्र प्राक्तनी वसतिः कदाचिदपनीता, आगन्तुकः प्रत्यनीकः संजातः । एतद्दोषभयात् पूर्वदृष्टाऽपि सा प्रत्युपेक्षणीया ॥२०६॥ इदं च ते प्रष्टव्याः—

कयरी दिसा पसत्था ?, अमुई सव्वेसि अणुमई गमणं ।
चउदिसि- ति दु एगं वा, सत्तग पणगं तिग जहण्णं ॥२०७॥

कतरा दिक् प्रशस्ता सुक्षेमपथेत्यर्थः, तेऽप्याहुः – अमुका दिक् सुक्षेमेति, सर्वेषामनुमतायां गन्तव्यं, चतसृष्वपि दिक्षु प्रत्युपेक्षका यान्ति । उपद्रवादिसंभवे तिसृषु, द्वयोरेकस्यां वा दिशि, कति यान्तीत्याह—स एकैकस्यां उत्कृ-

ष्टतः सप्तकं पञ्चकं, जघन्येन त्रिकं यान्ति साधूनाम् ॥२०७॥ पूर्वमाऽऽभिग्रहिकस्तदभावे—

अणभिग्गहिए वावारणा उ तत्थ उ इमे ण वावारे ।
बालं वुड्ढमगीअं, जोगिं वसहं तहा खमगं ॥२०८॥

अनभिग्रहिकान् व्यापारयेद् गमनाय नोदयेदित्यर्थः । न बाल–वृद्धाऽगीतार्थ–योगिवृषभक्षपकान् ॥२०८॥ एतां गाथां व्याख्यानयन्नाह[१]—

हीलेज्ज व खे (प्र.की) लेज्ज व, कज्जाकज्जं ण याणइ बालो ।
सो वाऽणुकंपणिज्जो, ण दिंति वा किंचि बालस्स ॥२०९॥

ह्रियते म्लेच्छादिना । क्रीडेद्वा बालस्वभावत्वात् । कार्याकार्यं वा न जानाति । स च बालो लोकानुकम्पातः सर्वं लभते । [२]गच्छं पुनर्गतो न किंचिल्लभते, अथवा ददति न लोका बालावज्ञया ॥२०९॥ वृद्धो न प्रेषणीयो यतस्तत्रैते दोषाः—

वुड्ढोऽणुकंपणिज्जो, चिरेण ण य मग्गथंडिले पेहे ।
अहवा वि बालबुड्ढा, असमत्था गोयरतिअस्स ॥२१०॥

१ ०ह भाष्यकारः ॥k॥ २ 'गच्छं०' इत्यत आरभ्य 'न' पर्यन्तोंऽशो नास्ति ॥k॥

अनुकम्पनीयत्वादसावेव लभते नान्यः, चिरेण प्रभूतेन कालेन गमनागमनं करोति, न च मार्गे स्थण्डिलं प्रत्युपेक्षितुं समर्थः, अथवाऽसमर्था बाला वृद्धाश्च गोचरत्रिकस्य ॥२१०॥ अगीतार्थे एते दोषाः—

पंथं च मासवासं, उवस्सयं एच्चिरेण कालेणं ।
एहामो त्ति ण याणइ, चउव्विहमणुण्ण ठाणं च ॥२११॥ [दारं]

पन्थानं मार्गं न जानाति, तथा मास-वर्षाकल्पमुपाश्रयं च परीक्षितुं न जानाति, कदाऽऽगमिष्यथ ? शय्यातरेण पृष्टा इयता कालेनाऽर्द्धमासादिनैष्याम इति वदन्ति, नैवं वक्तव्यम्—यतः कदाचिदन्या दिक् शोभनतरा स्यात्तत्र गम्यते, उपाश्रये चतुर्विधं द्रव्यादि शय्यातरोऽनुज्ञाप्यते । द्रव्यतस्तृणडगलादि, क्षेत्रतः पात्रकप्रलाक्षनभूमिरनुज्ञाप्यते, कालतो दिवा रात्रौ वा निःसरणं, भावतो ग्लानस्य कस्यचिद्भावप्रणिधानार्थं कायिकीसञ्ज्ञादि निरूप्यते इति चतुर्धामनुज्ञामत्र ज्ञापयितुं न जानाति । 'ठाणं च'त्ति वसतिः कीदृशे प्रशस्ते स्थाने ग्राह्येति न जानाति ॥२११॥ योगिनमपि न प्रेषयेत् । [१]कस्मात्—

तूरंतो अ ण पेहे, पंथं पाढट्ठिओ ण चिर हिंडे ।
विगई पडिसेहेइ, तम्हा जोगिं ण पेसेज्जा ॥२१२॥

त्वरमाणः पन्थानं न प्रत्युपेक्षते, पाठार्थी सन्न चिरं भिक्षां हिण्डते, लभ्यमाना विकृतीर्दध्यादिकाः प्रतिषेधयति, तस्माद्योगिनं न प्रेषयेत् ॥२१२॥ वृषभोऽपि न प्रेष्य इत्याह—



१ 'यतः' ॥k॥

ठवणकुलाणि ण साहे, सिट्ठाणि (प्र.वि) ण देंति जा विराहणया ।
परितावण अणुकंपण, तिण्हऽसमत्थो भवे खमगो ॥२१३॥

वृषभो हि प्रेष्यमाणो रुषा कदाचित् स्थापनाकुलानि न कथयति, 'सि०' कथितान्यपि तानि नान्यस्मै ददति तत्परिचितत्वात्, 'जा वि०' ततश्च स्थापनाकुलेष्वलभ्यमाने या विराधना ग्लादीनां सा सर्वाऽऽचार्यस्य दोषेण कृता भवति । न क्षपकोऽपि प्रेष्यते यतः परितापनाऽऽतपादिभिः अनुकम्पया तस्यैव लोको ददाति नान्यस्य, गोचरत्रिकस्याऽसमर्थः क्षपकः ॥२१३॥ यदा तु प्रेषणार्हा अन्ये न स्युः—

एए चेव हवेज्जा, पडिलोमेणं तु पेसए विहिणा ।
अविही पेसिज्जंते, ते चेव तहिं तु पडिलोमं ॥२१४॥

यदि त एव बालादयो भवेयुस्तदा 'प०' अनुलोम उत्सर्गः, तद्विपरीतः प्रतिलोमोऽपवादस्तमङ्गीकृत्य एतानेव बालादीन् प्रेषयति, [1]विधिना—यतनया वक्ष्यमाणया, अविधिना प्रेष्यमाणेषु त एव दोषाः । 'तहिं' तस्मिन् क्षेत्रे 'प०' प्रतिलोममपवादमङ्गीकृत्य, अथवा 'प०' अविधिप्रतिलोमो विधिस्तेन तत्प्रतिलोमविधिना प्रेषयेत् ॥२१४॥ बालादीनां प्रेषणार्हत्वे प्राप्ते विधिः प्रतिपाद्यते, पूर्वं गणावच्छेदकः प्रेष्यः, तदभावे गीतार्थः, तत्र को विधिः ?—

१ ०विधिना वक्ष्यमाणेन ॥k॥

प्रेषणार्हाभा
निषिद्धान्
प्रेषणे
विधिश्च

सामायारिमगीए, जोगमणागाढ खवग पारावे ।
वेयावच्चे दायण–जुयलसमत्थं व सहिअं व ॥२१५॥

अगीतार्थस्य सामाचारी कथ्यते, तदभावेऽनागाढयोगी 'योगं निक्षिप्य पारयित्वा-भोजयित्वा प्रेष्यते, तदभावे क्षपकः पारयित्वा प्रेष्यते, तदभावे वैयावृत्त्यकरः प्रेष्यते, 'दाय०' स च वैयावृत्त्यकरः कुलानि दर्शयति । तदभावे युगलं वृद्धबालौ तरुणसहितौ, वृद्धस्तरुणसहितः बालस्तरुणसहितो वेत्यर्थः । समर्थो वृषभः प्रेष्यते तरुणेन बालेन वृद्धेन वा सहितः, वः पादपूरणे। आह–पूर्वं बालादय उपन्यस्तास्ततः कस्मात्तेषामेव न विधिरुक्तः पूर्वम् ? उच्यते, अयमेव प्रेषणविधिर्यत्प्रथममगीतार्थस्तदनु योगिप्रभृतयः । अप्रेषणार्हत्वं सर्वेषां तुल्यं वर्तते ततो योऽस्तु सोऽस्तु प्रथमं न कोऽपि दोषः ॥२१५॥ तेषां गमनविधिमाह––

पंथुच्चारे उदए, ठाणे भिक्खंतरा य वसहीओ ।
तेणा सावयवाला, पच्चावाया य जाणविही ॥२१६॥

पन्थानं [1]चतुर्विधया प्रत्युपेक्षणया निरूपयन्तो यान्ति, उच्चार-प्रश्रवणभूमिं निरूपयन्तो व्रजन्ति, पानकस्थानानि निरूपयन्ति येन बालादीनां पानीयमानीय दीयते, विश्रामस्थानं गच्छस्य निरूपयन्ति, भिक्षा येषु प्रदेशेषु लभ्यते न लभ्यते वेति, अन्तराले वसतीर्निरूपयन्तो गच्छन्ति यत्र गच्छः सुखेन वसन् याति, स्तेन–श्वापद-व्यालादयश्च

१ द्रव्यक्षेत्रकालभावभेदभिन्नयेति । सं०।

गमनवि पथ्युच्चार भूम्यादि दर्शनम्।

न स्युः, 'पच्चा०' एकस्मिन् पथि गच्छतां दिवा प्रत्यपायोऽन्यत्र च रात्रौ प्रत्यपायस्तत्र निरूप्य गन्तव्यम्, 'जा०' अयं गमनविधिः ॥२१६॥ एतां गाथां व्याख्यानयन्नाह[१]—

सो चेव उ (प्र.य) णिग्गमणे, विही उ जो वण्णिओ उ एगस्स ।
दव्वे खेत्ते काले, भावे पंथं तु पडिलेहे ॥२१७॥

स एव विधिः य एकस्य निर्गमने 'चरिमाए संदिट्ठे'त्याद्युक्तः । पथि व्रजतामयं विधिः । 'दव्वे' द्रव्यादिभिर्मार्गं प्रत्युपेक्षते ॥२१७॥ द्रव्यादिव्याख्यामाह—

कंटग-तेणा वाला, पडिणीया सावया य दव्वंमि ।
सम–विसम–उदय–थंडिल, भिक्खायरि अंतरा खेत्ते ॥२१८॥

कण्टकस्तेनश्वापदव्यालप्रत्यनीकानां पथि यत् प्रत्युपेक्षणा सा द्रव्यविषया । समविषमोदकस्थण्डिलभिक्षाचर्यादीनामन्तराले या या प्रत्युपेक्षणा सा क्षेत्रतः ॥२१८॥ कालत आह—

दिअ राउऽपच्चवाए य, जाणइ सुगमदुग्गमे काले ।
भावे सपक्ख परपक्ख–पेल्लणा णिण्हगाईया ॥२१९॥

१ ०न्नाह भाष्यकारः ॥k॥

दिवा प्रत्यपायो वा, रात्रौ वा प्रत्यपायः, न वा प्रत्यपाय इत्येतज्जानाति । तथा दिवाऽयं पन्थाः सुगमो दुर्गमो वा रात्रौ वेति यत्परिज्ञानं सा कालतः । भावतो यदुत स विषयो देशः स्वपक्षेण परपक्षेण वा 'पे०' आक्रान्तो व्याप्तः, निह्नवादिः स्वपक्षः, आदिग्रहणाच्चरकपरिव्राजकादिः परपक्षः, एभिरनवरतं प्रार्थ्यमानो लोको न किञ्चिद्दातुमिच्छति इत्येवं या निरूपणा सा भावतः ॥२१९॥ कथं पुनस्ते व्रजन्तीत्याह—

सुत्तत्थं अकरिंता, भिक्खं काउं अइंति अवरण्हे ।
बिइयदिणे सज्झाओ, पोरिसिअद्धाइ संघाडो ॥२२०॥

सूत्रार्थपौरुष्यौ चाकुर्वन्तो व्रजन्ति तावद्यावदभिमतं क्षेत्रं प्राप्ताः, भिक्षां कृत्वा तदाऽऽसन्नग्रामे [1]तद्बहिर्वा भक्षयित्वाऽपराह्णे प्रविशन्ति, वसतिमन्वेषयन्ति, लब्धायां वसतौ कालं गृहीत्वा द्वितीयदिने किञ्चिन्न्यूनपौरुषीं स्वाध्यायं कृत्वा, 'पो०' पौरुषीकाले संघाटको भिक्षार्थं प्रविशति, अथवा स्वाध्यायं कियन्तमपि कालं कृत्वाऽर्द्धपौरुष्यां भिक्षार्थं प्रविशन्ति ॥२२०॥ प्रविष्टाः सन्तः—

खेत्तं तिहा करेत्ता, दोसीणे णीणिअंमि अ वयंति ।
अण्णो लद्धो बहुओ, थोवं दे मा य रुसेज्जा ॥२२१॥

[1] तद्बहिर्वेत्यंशो न 'k' संज्ञकप्रतौ ।

भिक्षार्थं गच्छता त्रिः क्षेत्रविभाग कार्यः ।

क्षेत्रं त्रिधा कृत्वा त्रिभिर्भागैर्विभज्य प्रातर्मध्याह्नापराह्णेषु हिण्डन्ते, पर्युषिताहारे निःसारिते सति वदन्ति, अन्य आहारः प्रचुरो लब्धः, ततः स्तोकं देहि-स्वल्पं प्रयच्छ, मा रोषं ग्रहीष्यस्यनादरजनितं, एतच्चासौ परीक्षार्थं करोति, किमयं लोको दानशीलो न वेति ॥२२१॥

क्षेत्रस्य प्राधान्याप्रधानते प्रातरादि-कालत्रये लब्धाहारादिना।

अहव ण दोसीणं चिअ, जायामो देहि दहि घयं खीरं ।
खीरे घय गुल पेज्जा, थोवं थोवं च सव्वत्थ ॥२२२॥

अथवैवं वदन्ति न वयं दोसीणं [पर्युषितान्नं] चिअ—एव याचयामः, किन्तु दधि घृतं तथा क्षीरं याचयामः, क्षीरे लब्धे गुडं घृतं पेयां दत्स्व, सर्वत्र-सर्वेषु कुलेषु स्तोकं गृह्णन्ति, प्रत्यूषविधिरुक्तः ॥२२२॥ मध्याह्नविधिमाह—

मज्झण्हि पउरभिक्खं, परितावิअ—पिज्जजूस—पयकढिअं ।
ओभट्ठमणोभट्ठं, लब्भइ जं जत्थ पाउग्गं ॥२२३॥

मध्याह्ने प्रचुरा भिक्षा लभ्यते, 'प०' परितलितं सुकुमारिकादि, तथा पेया यूषः पाटलादेः (पटोलादेः), पयः क्वथितं, 'ओ०' प्रार्थितं वा लभ्यते, 'जं०' यद्वस्तु यत्र क्षेत्रे प्रायोग्यमिष्टं, तदित्थंभूतं क्षेत्रं प्रधानमिति ॥२२३। अपराह्णविधिमाह—

चरिमे परिताविअ पेज्ज-जूस आएस अतरणट्ठाए ।
एक्केक्कं संजुत्तं, भत्तट्ठं एक्कमेक्कस्स ॥२२४॥

चरमपौरुष्यामटन्ति, तत्र परितलितानि पेया यूषश्च यदि लभ्यते, तत 'आएस'त्ति प्राघूर्णकः, 'अ०' ग्लानार्थाय स्यात्, ततश्च तत्प्रधानं । एवं तेऽटित्वा'ऽभत्तट्ठ"ति उदरपूरणमेकस्यानयन्ति, कथं 'एक्के०' एकसाधुरेकेन संयुक्तो यस्मिन्नानयने तदेकैकसंयुक्तमानयन्ति । 'एक्क०' परस्परस्यानयन्ति, अयमर्थः द्वौ साधू अटतः, एक आस्ते प्रत्यूषसि । द्वितीयवेलायां तयोर्द्वयोर्मध्यादेक आस्तेऽन्यो याति, प्रथमस्थितं गृहीत्वा, तृतीयवेलायां च यो द्वितीयवेलायां रक्षपालकः स्थितः स प्रथमस्थितरक्षपालेन सह व्रजति। इतरस्तु येन वारद्वयमटितं स तिष्ठति ॥२२४॥ एवं—

ओसह भेसज्जाणि अ, कालं च कुले य दाणमाईणि ।
सग्गामे पेहित्ता, पेहंति ततो परग्गामे ॥२२५॥

औषधं-हरीतक्यादि, भेषजं-पेयादि, एतच्च प्रार्थनाद्वारेण प्रत्युपेक्षते, कालं च, दानश्राद्धकादीनि एतानि स्वग्रामे प्रत्युपेक्ष्य, परग्रामे च प्रत्युपेक्षते ॥२२५॥

चोयगवयणं दोहं, पणीयगहणे य णणु भवे दोसा ।
जुज्जइ तं गुरुपाहुण-गिलाणगट्ठा ण दप्पट्ठा ॥२२६॥

दीर्घं भिक्षाटनं कुर्वन्ति, स्नेहवद्द्रव्यग्रहणे [च] ननु दोषाः ? आचार्य आह— युज्यते तत्सर्वं दीर्घभिक्षाटनप्रणीतग्रहणादि, यतो गुरुप्राघूर्णकग्लानार्थमसौ प्रत्युपेक्षते, न तद्दर्पार्थमात्मार्थं वा ॥२२६॥

जइ पुण खद्धपणीए, अकारणे एक्कसिंपि गिण्हेज्जा ।
तहिअं दोसा तेण उ, अकारणे खद्धणिद्धाइं ॥२२७॥

खद्धं-प्रचुरं प्रणीतं-स्निग्धं कारणं विनैकशोपि गृह्णीयात्तदा दोषः, यत—स्तेन [साधुना] तानि खद्धादीन्यकारणे सेवितानि, अथवा खद्धाइं—भक्षितानि स्निग्धानि ॥२२७॥

एवं-रुइए थंडिल, वसही देउलिअखुण्णगेहमाईणि (प्र.हाई) ।
पाओगमणुण्णवणा, वियालणे तस्स परिकहणा ॥२२८॥

एवमुक्तप्रकारेण रुचितेऽभीष्टे क्षेत्रे 'थं०' स्थण्डिलानि प्रत्युपेक्षन्ते, येषु मृतः परिष्ठाप्यते महास्थण्डिलं, वसतिं निरूपयन्ति-किं प्रशस्तेऽप्रशस्ते वा देशे सिंगखोडादियुक्त इति, पत्तनमध्ये शालादि, तदभावे शून्यदेवकुलगृहादीनि प्रत्युपेक्षते, वसतिं लब्ध्वा प्रायोग्याणां तृणडगलादीनां शय्यातरोऽनुज्ञापनां कार्यते, तेनाऽजानता विचारे कृते प्रायोग्यं किमिति 'तस्स०' कथ्यते प्रायोग्यं तृणडगलादि ॥२२८॥ एतां द्वारगाथां व्याख्यानयति । तत्र रुचिते क्षेत्रे स्थण्डिलं परीक्ष्यते तच्च बहुवक्तव्यत्वादुपरिष्टाद्वक्ष्यति[1] । अत्र वसतिस्तु कीदृशे स्थाने कर्त्तव्या कीदृशे नेत्याह—

१ परिष्ठापनिकानिर्युक्ति(क्तौ), श्रीआवश्यकान्तर्गतत्वादोघनिर्युक्तेः २३०।१।२।३।४।५।६॥३७॥ सूत्रे दृश्यन्ते गाथारताऽतत एव प्रक्षिप्ता अत्र ॥k॥

सिंगक्खोडे कलहो, ठाणं पुण णेव होइ चलणेसुं ।
अहिठाणि पोट्टरोगो, पुच्छंमि अ फेडणं जाण ॥२२९॥

तत्र वामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूपं क्षेत्रं बुद्धया कल्पयित्वा तत इदमुच्यते-शृङ्गप्रदेशे यदि वसतिं करोति ततः कलहो भवतीति क्रियां वक्ष्यति, स्थानमवस्थितिर्नास्ति पदप्रदेशेषु चरणेषु, अधिष्ठानेऽपानप्रदेशे उदररोगः, पुच्छप्रदेशे फेडनमपनयनं वसत्याः ॥२२९॥

मुहमूलंमि अ चारी, सिरे य कउहे य पूयसक्कारो ।
खंधे पट्टीए भरो, पोट्टंमि य धायओ वसहो ॥२३०॥

मुखमूले चारी भवति, शिरसि शृंगयोर्मध्ये ककुदे च पूजासत्कारो भवति । स्कन्धे पृष्ठे च भरः साधुभिरागच्छद्भिराकुला स्यात्, उरःप्रदेशे तु नित्यं तृप्तः स्यात् क्षेत्रवृषभः, वसतिर्व्याख्याता । तद्व्याख्यानाच्च देवकुलशून्यगृहाद्यपि व्याख्यातम् ॥२३०॥ 'पाउग्ग अणुन्नवणे'त्यवयवमाह—

दव्वे तण-डगलाई, अच्छण-भाणाइधोवणा खेत्ते ।
काले उच्चाराई, भावेण गिलाणकुरुवमा ॥२३१॥

द्रव्यतः - द्रव्यमङ्गीकृत्य तृणानां संस्तारकार्थं, डगलानां 'चाधिष्ठानप्रोञ्छनार्थं' लेष्टूनामनुज्ञापना क्रियते ।

वसतेर्वृषभ-कल्पना तद्-ङ्गेषु वसते लाभालाभादि

'अच्छण'त्ति स्वाध्यायादि यत्रोपविश्य क्रियते भाजनादिधावनं च, सा क्षेत्रानुज्ञा-दिवारात्रौ वोच्चारादिव्युत्सर्जनम् । भावाऽनुज्ञापना-ग्लानादेः साम्यकरणार्थं निवातप्रदेशाद्यनुज्ञापना क्रियते । 'वियालणे तस्स परिकहणे'त्यवयवमाह— कूरोपमा, यदा शय्यातरो ब्रूते इयति प्रदेशे मयाऽवस्थानमनुज्ञातं नाधिकं, तदा तस्य परिकथना कूरदृष्टान्तेन, यो हि भोजनं कस्यचिद्ददाति स नियमेनैव भाजनोदकासनाद्यपि दत्ते नान्यः, एवं वसतिं प्रयच्छता तृणोच्चार-प्रश्रवणभूम्यादि सामर्थ्याऽऽक्षिप्तं सर्वमेव दत्तम् । शय्यातरोऽथवेदं विचारयति कियन्तं कालं स्थास्यन्ति भवन्तः, इत्थं विचारे तस्य कथना ॥२३१॥

जाव गुरूण य तुज्झ य, केवइया तत्थ सागरेणुवमा ।
केवइ कालेणेहिह ?, सागार ठवंति अण्णेवि ॥२३२॥

यावद् गुरूणां तव च प्रतिभाति तावदवस्थानं करिष्यामः । अथवा कति स्थास्यथ? इति विचारे, [प्रश्ने] कथ्यते-यथा सागरः कदाचिदुद्वेलः कदाचिन्मर्यादावस्थः एवं गच्छोऽपि, कियता कालेनाऽऽगमिष्यथेत्युक्ताः साधवः 'साग'० सविकल्पं कथयन्ति, (कुर्वन्ति) कथं ? 'अण्णेवि' अन्येऽपि साधवः क्षेत्रप्रत्युपेक्षणार्थं गताः सन्ति तैरालोच्य समेष्यामः ॥२३२॥

पुव्वदिट्ठे इच्छइ, अहव भणिज्जा हवंतु एवइया ।
तत्थ ण कप्पइ वासो, असइ खेत्ताणऽणुण्णाओ ॥२३३॥

यदा त्वसौ पूर्वदृष्टानेवेच्छति नान्यांस्तत्र न कल्पते वासः, अथैवैतावन्त एव तिष्ठन्तु न शेषास्तत्रापि न वासः, यतः कदाचिद् बहवोऽपि स्युः, शेषक्षेत्राभावे तस्यामेव वसतौ अनुज्ञातो वासः ॥२३३॥ तत्र च नियतपरिमितायां वसतौ प्राघूर्णको यद्यागच्छति तदाऽयं विधिः —

सक्कारो सम्माणो, भिक्खग्गहणं च होइ पाहुणए ।
जइ जाणउ वसइ तहिं, साहम्मिअवच्छलाऽऽणाई ॥२३४॥

सत्कारो वन्दनादिः, सन्मानः पादप्रक्षालनादिकः, भिक्षाऽऽनयनं क्रियते, पश्चात्तस्य वसतिस्वरूपं कथ्यते, यत्परिमितैरेव लभ्यते नाधिकैः, एवमसावुक्तो यदि (स) जानन्नपि तत्र वसति, तदा तेन न साधर्मिकवात्सल्यं कृतं स्यात्, यतोऽसौ शय्यातरो रुष्टः सर्वानपि निर्घाटयति, आज्ञालोपश्च कृतो भवति [1]सूत्रस्य, आदिशब्दात्तद्रव्यान्यद्रव्यव्यवच्छेदः ॥२३४॥ इदानीं क्षेत्रप्रत्युपेक्षका गुरुपार्श्वे यान्तः किं कुर्वन्ति—

जइ तिण्णि सव्वगमणं, एसु ण एसुत्ति दोसुवि अ दोसा ।
अण्णपहेणऽगुणंता, णिययावासोऽह (प्र.हु) मा गुरुणो ॥२३५॥

यदि ते त्रयस्ततो गच्छन्ति सर्वे, यदि पञ्च सप्त वा तदा तत्र संघाटकं मुञ्चन्ति । 'एसु०' शय्यातरेण

१ ०भवति, सूत्रस्थादि० ॥सं०॥

प्रतिनिवर्तकानां क्षेत्रप्रत्युपेक्षकाणां कर्तव्यानि

पृष्टा नैवं वदन्ति – एष्यामो नवेति, यद्यागमिष्याम इति कथयन्ति, तदा शोभने क्षेत्रे लब्धे सति नागच्छन्ति, ततश्चानृतदोषः, यदि नागमिष्याम इति वदन्ति तदाऽन्यक्षेत्राऽप्राप्तौ यद्यागच्छन्ति तदा स एव दोषः । 'अण्ण०' क्षेत्रप्रत्युपेक्षका अन्येन मार्गेणागच्छन्ति कदाचित् शोभनतरो भवेत् । 'अगुणंत'त्ति सूत्रपौरुषीमकुर्वन्तः प्रयान्ति, मा भून्नित्यवासो गुरोरिति, किं कारणं ? यतस्तेषां विश्रब्धमागच्छतां मासकल्पोऽधिकः स्यात्, ततो नित्यवासो गुरोः ॥२३५॥

गंतूण गुरुसमीवं, आलोएत्ता कहेंति खेत्तगुणा ।
ण य सेसकहण मा होज्ज, संखडं रत्ति साहेंति ॥२३६॥

आलोच्येर्यापथिकातिचारं क्षेत्रगुणानाचार्याय कथयन्ति न शेषसाधुभ्यः, मा भूत्स्वक्षेत्रपक्षपातजा राटिः, रात्रौ मिलितानां सर्वेषां कथयन्ति साधूनां क्षेत्रगुणान् ॥२३६॥ ते च गत्वैतत् कथयन्ति

पढमाए णत्थि पढमा, तत्थ उ घयखीरकूरदहिलंभो ।
बिइयाए बिइ तइयाए, दोवि तेसिं च धुवलंभो ॥२३७॥

प्रथमायां पूर्वस्यां दिशि नास्ति प्रथमा सूत्रपौरुषी, यतस्तत्र कूर-घृत-दध्यादिलाभोऽस्ति । अन्ये त्वन्यां दिशं कथयन्ति, द्वितीयायां दिशि अर्धपौरुषी नास्ति, तदैव भोजनकालत्वात् । तृतीयायामुभे स्तः । 'तेसिं' चे'ति तेषां

घृतादीनां लाभः ॥२३७॥

ओहासिअ धुवलंभो, पाउग्गाणं चउत्थिए नियमा ।
इहरावि जहिच्छाए, तिकालजोगं च सव्वेसिं ॥२३८॥

प्रार्थितस्य ध्रुवो लाभः प्रायोग्यानां चतुर्थ्यां दिशि । 'इह०' अप्रार्थितेऽपि यदृच्छया त्रिकालयोग्यं बालादीनां प्राप्यते ॥२३८॥ एवं क्षेत्रप्रत्युपेक्षकैराख्याते सत्याचार्यः किं करोतीत्याह—

मयगहणं आयरिओ, कत्थ वयामोत्ति ? तत्थ ओयरिआ ।
खुभिआ भणंति पढमं, तं चिअ अणुओगतत्तिल्ला ॥२३९॥

मतग्रहणमभिप्रायग्रहणं शिष्याणां करोति, भो आयुष्मन्तः ! क्व व्रजामः ? कया दिशा गच्छामः ? इत्यामन्त्रिते शिष्यगणे तु औदरिकाः क्षुधिता भणन्ति, प्रथमां दिशं व्रजामः, तत्र प्रथमपौरुष्यां भुज्यते, तामेव दिशं, अणुओगतत्तिल्ला' व्याख्यानार्थिन इच्छन्ति, यतस्ते सूत्रनिरपेक्षाः केवलार्थार्थिन एव ॥२३९॥

बिइयं च सुत्तगाही, उभयग्गाही अ तइययं खेत्तं ।
आयरिओ अ चउत्थं, सो उ पमाणं हवइ तत्थ ॥२४०॥

द्वितीयां दिशं सूत्रग्राहिण इच्छन्ति, उभयग्राहिणस्तृतीयम्, चतुर्थं क्षेत्रमिच्छत्याचार्यः, तत्र चतुर्थ्यामपि पौरुष्यां

शिष्यगण-
जिगमिषा-
ज्ञानम्
आचार्यस्य
प्रमाणत्वं च

प्राघूर्णकादेः प्रायोग्यं लभ्यत इति स एव प्रमाणं सर्वेषां 'तत्रे'ति शिष्यगणमध्ये ॥२४०॥ केन कारणेन चतुर्थं क्षेत्रमिच्छत्याचार्य इत्याह—

मोहुब्भवो उ बलिए, दुब्बलदेहो ण साहए जोए ।
तो मज्झबला साहू, दुट्ठऽस्सेणेत्थ दिट्ठंतो ॥२४१॥

प्रथमद्वितीयक्षेत्रयोः प्रचुरभक्षणाद् बलवान् भवति, तस्य मोहः—कामोद्भव इत्यर्थः आह—एवं तर्हि यत्र भिक्षा न लभ्यते तत्र प्रयान्तु ? उच्यते, दुर्बलदेहः—कृशशरीरो नाराधयति योगान् व्यापारान्, अतो मध्यबलाः साधव इष्यन्ते । दुष्टाश्वेन चात्र दृष्टान्तः, दुष्टाश्वः—गर्दभो यथा बहुभक्षणान्मत्तः सन् कुम्भकाराऽऽरोपितभाण्डकानि भनक्ति दर्पादुत्प्लुत्य, निरुद्धाहारोऽतिदुर्बलत्वात् स्खलितः सन् भनक्ति, स एव मध्यमाहारक्रियया सम्यग् वहति । एवं साधवोऽपि मध्यबलाः संयमक्रियां वहन्ति ॥२४१॥

पणपण्णगस्स हाणी, आरेणं जेण तेण वा धरइ ।
जइ तरुणा णीरोगा, वच्चंति चउत्थगं ताहे ॥२४२॥

तत्र गच्छे पञ्चपञ्चाशद्वर्षदेशीयाश्चत्वारिंशद्वर्षा वा स्युः, ततो गम्यते चतुर्थं क्षेत्रं यतस्ते येन केनचिद् ध्रियन्ते यापयन्ति । यदि तरुणा नीरोगाः शक्तास्ततश्चतुर्थमेव क्षेत्रं व्रजन्ति ॥२४२॥

अह पुण जुण्णा थेरा, रोगविमुक्का य (प्र.व) असहुणो तरुणा ।
ते अणुकूलं खेत्तं, पेसंति ण यावि (प्र.चेव) खग्गूडे ॥२४३॥

झुर्णाः (जीर्णाः) स्थविराः स्युः, रोगेण ज्वरादिना विमुक्तास्तरुणा नाऽद्याऽपि येषां कायसाम्यं स्यात्ताननुकूलं क्षेत्रं प्रेषयन्त्याचार्याः, न खग्गडान् ॥२४३॥ कियता कालेन ते वृद्धादयः पुनरायान्ति ? उच्यते-पञ्चरात्रिन्दिनैः, यत उक्तं वैद्यके—

एग पण अद्धमासं, सट्ठीसुणमणुय-गोण-हत्थीणं ।
राइंदिएण उ बलं, पणगं तो एक्क दो तिण्णि ॥२४४॥

एकेनाहोरात्रेण श्वा, पञ्चभिर्मनुजाः, अर्द्धमासेन वृषभः, षष्टिभिर्दिनैर्हस्ति[नो] बलिनः स्युः । तत्र स दिनपञ्चकं धार्यते, तथाऽपि न बली, द्वि-त्रि-दिनपञ्चकान् धार्यते, तत आनीयते ॥२४४॥ एवं आलोचितशिष्यगणा आचार्याः शय्यातरमापृच्छ्य क्षेत्रान्तरं संक्रामन्ति, शय्यातराऽपृच्छने एते दोषाः—

सागारि पुच्छगमणे, बाहिरा मिच्छ छेय कयणासी ।
गिहि साहू अभिधारण, तेणग संकाइ जं चऽण्णं ॥२४५॥

तमनापृच्छ्य चेद्गम्यते 'बा'० बाह्या लोकधर्मस्यैते भिक्षव इत्येवं वक्ति शय्यातरः, ये लोकधर्मं दृष्टं न जानन्ति ते

कायसाम्यार्थमिष्टक्षेत्रवासमर्यादा ।

शय्यातरमनापृच्छ्य गमने दोषाः।

कथमदृष्टं जानन्तीत्यतो मिथ्यात्वं प्रतिपद्यते, छेदो वसतिदानस्य पुनस्तेऽन्ये वा वसतिं न लभन्ते। 'क'० कृतघ्ना ह्येते इति मन्यते। 'गि'० गृही कोऽपि श्रावकस्तमाचार्यमऽभिधार्य संचिन्त्यायातः प्रव्रज्यार्थम्। तेनाऽप्यागत्य शय्यातरः पृष्टः क्वाचार्यः? सोऽपि रुष्टः सन्नाह—यः कथयित्वा याति स ज्ञायते तं तु को जानाति। तदाकर्ण्य स कदाचिद्दर्शनमुज्झति, लोकज्ञानमप्येषां नास्ति कुतः परलोकज्ञानमिति, पाठार्थी साधुस्तमाचार्यं मनसि कृत्वाऽऽयाति[१], शय्यातरं पृच्छति, सोऽप्याऽऽह—न जाने क्वाऽपि गत इति, ततः स साधुरनाचारवानाचार्य इति विचिन्त्यान्यत्र याति, आचार्यो निर्जराया अनाभागी। कदाचित्तद्गृहं केनचित्तस्मिन्नेव दिने मुष्टं स्यात्ततः स्तेना इति शङ्का भवति, आदिशब्दाद्योषित् केनचित् सह गता ततो गृहात्, तेऽप्यनाख्याय गताः, ततः शङ्का। यच्चान्यदपि शङ्कादि जातं पत्तनगतं तत्सर्वमुपजायते ॥२४५॥ ततो गच्छद्भिः स विधिना प्रष्टव्यः। अविधिपृच्छायामेते दोषाः—

(भा०२) अविहीपुच्छा उग्गाहिएण, सिज्जातरी उ रोएज्जा।
सागारियस्स संका, कलहे य सएज्जिआ खिंसे ॥२४६॥

अविधिपृच्छेयं, यदुत—उत्क्षिप्तोपकरणेन पृच्छति। तेनाकस्मिकगमनेन शय्यातर्यो रुदन्ति, शय्यातरस्य शङ्का

१ याति। रुष्टशय्यातरकथनेऽनाचारवानगमित्यन्यत्र याति० ॥k॥

(भा०२) (प्र) वसहीए वोच्छेओ, अभिसंधारिंतयाण साहूणं।
पुणरावत्ती होज्ज व, पव्वज्जाउज्जुअमईणं ॥२४६॥

स्यात् । कलहे च सति 'स०' यथा न शोभना त्वं येन त्वया भिक्षोर्गमने रुदितं, किंच—ते स पिता[1] येन रोदिषि ॥२४६॥ अमुकत्र दिवसे गमिष्याम इत्यनागतकथनेऽप्येते दोषाः—

हरिअच्छेयण छप्पइय—घच्चणं किच्चणं च पोत्ताणं ।
छण्णेयरं च पगयं, इच्छमणिच्छे य दोसा उ ॥२४७॥

तद्धि शय्यातरकुटुम्बं साधवो यास्यन्तीति विमुक्तव्यापारं गृह एव तिष्ठति कृष्यादिप्रतिजागरणं न करोति। ततश्च क्षणिकं[2] सत् स्वगृहजातहरितच्छेदं करोति, तथा निर्व्यापारत्वादेव रण्डाः षट्पदीनां परस्परनिरूपणेनोपमर्दनं कुर्वन्ति, 'कि०' तत्र दिने क्षणिका विमुक्तकृष्यादिव्यापारा वस्त्राणि शोधयन्ति, 'छन्ने०' प्र(प्रा)कृतं भोजनं छन्नं कुर्वन्ति, इतरं प्रकटमेव भोजनं संयतार्थं कुर्वन्ति, तत्र चेच्छतामनिच्छतां दोषा भवन्ति, कथं? यदि तद् गृह्णन्ति ततस्तदकल्पनीयं, यदि न गृह्णन्ति ततः कदाचिद् रुष्यन्ति ॥२४७॥ विधिपृच्छा त्वियं—

जइआ च्चेव उ खेत्तं, गया उ पडिलेहगा तओ पाए ।
सागारियस्स भावं, तणुएंति गुरू इमेहिं तु ॥२४८॥

यदैव क्षेत्रं गताः प्रत्युपेक्षका 'तओ पाए' ततः प्रभृति शय्यातरस्नेहं तनूकुर्वन्ति गुरवः, एभिर्गाथाद्वयोपन्यस्तवचनैः ॥२४८॥

[1] ०किं ते स्वकीयाः स्युः, अनागत० ॥k॥ [2] ०स्थितं सत्० ॥I॥

उच्छू वोलिंति वइं, तुंबीओ जायपुत्तभंडा य ।
वसभा जायत्थामा, गामा पव्वायचिक्खल्ला ॥२४९॥ (सुगमा)
अप्पोदगा य मग्गा, वसुहावि अ पक्कमट्टिआ जाया ।
अण्णक्कंता पंथा, साहूणं विहरिउं कालो ॥२५०॥

[उच्छू०], अप्पो० एतद् गाथाद्वयं शय्यातरस्य शृण्वतः पठन्ति । सोऽपि श्रुत्वा भणति किं यूयं गमनोत्सुकाः, ॥२४९॥ ॥२५०॥ आहाऽऽचार्यः—

समणाणं सउणाणं, भमरकुलाणं च गोउलाणं च ।
अणियाओ वसहीओ, सारइयाणं च मेहाणं ॥२५१॥

एतां गाथां पठित्वा इदमाचरन्ति ॥२५१॥

आवस्सग कयणियमा, कल्लं गच्छाम तो उ आयरिआ ।
सपरिजणं सागारिअ, वाहिरि दिंति अणुसिट्ठिं ॥२५२॥

कृतप्रतिक्रमणा इदं भणन्ति—यदुत कल्ये गच्छामः, तत आचार्याः सपरिजनं शय्यातरमाहूयाऽनुशास्तिं ददति-धर्मकथां कुर्वन्तीत्यर्थः ॥२५२॥

पव्वज्ज सावओ वा, दंसण भद्दो जहण्णयं वसहिं ।
जोगंमि वट्टमाणे, अमुगं वेलं गमिस्सामो ॥२५३॥

स धर्मं श्रुत्वा प्रव्रजति, श्रावको वा स्यात्, दर्शनधरो वा, भद्रको वा, जघन्येन वसतिमात्रं ददात्येव । धर्मकथां कृत्वेदं ब्रुवते । यदुत-वर्तमाने योगे सति अमुकत्र वेलायां गमिष्याम इति ॥२५३॥ इदमुक्त्वा प्रत्यूषसि व्रजन्ति किम् कृत्वा ?; इत्यत आह—

तदुभय सुत्तं पडिलेहणा य उग्गयमणुग्गए वावि ।
पडिछाहिगरणतेणे, णट्ठे खग्गूड संगारो ॥२५४॥

सूत्रार्थयोः सूत्रस्य वा पौरुषीं कृत्वा व्रजन्ति, अथ दूरतरं क्षेत्रं ततः पादोनप्रहर एव पात्रप्रतिलेखनामकृत्वा व्रजन्ति, उद्गतमात्र एव सूर्येऽनुद्गते वा रात्रावेव वा गच्छन्ति, यान्तः परस्परं प्रतीक्षन्ते । अप्रतीक्षणे दोषाः 'अहि०' मार्गाऽनभिज्ञत्वात् पूत्करणादिनाऽधिकरणं, लोको विबुध्यते, स्तेना मोषणार्थमागच्छन्ति, 'नट्ठ'त्ति कदाचित् कश्चिन्नश्यति, ततः प्रदोष एव संकेतः क्रियतेऽमुकत्र गमिष्यामः, 'ख०' खग्गूडप्रायम् एवं वक्ति रात्रौ न युज्यते गन्तुं साधूनां ततः 'सं०' संकेतोऽमुकत्र त्वयाऽऽगन्तव्यम् ॥२५४॥ इमां गाथां भाष्यकृदाह—

पडिलेहतच्चिअ बेंटियाउ काऊण पोरिसि करिंति ।
चरिमा उग्गाहेउं, सोच्चा मज्झण्हि वच्चंति ॥२५५॥

प्रथमावयवमाह—ते हि साधवः प्रभातमात्र एव प्रतिलेख्य विण्टलिकां कुर्वन्ति, ततोऽनिक्षिप्तोपधय एव सूत्रपौरुषीं कुर्वन्ति, 'च०' पादोनपौरुष्यां पात्रकाण्युद्ग्राह्याऽर्थपौरुषीं कुर्वन्ति, ततो मध्याह्ने व्रजन्ति ॥२५५॥ अत आह—

तिहिकरणंमि पसत्थे, णक्खत्ते अहिवइस्स अणुकूले ।
घेत्तूण णिंति वसभा, अक्खे सउणे परिक्खंता ॥२५६॥

तिथौ बवादिकरणे च प्रशस्ते नक्षत्रेऽधिपतेराचार्यस्यानुकूले, गृहीत्वाऽक्षान् वृषभा निर्यान्ति शकुनान्निरीक्षमाणाः सन्तः ॥२५६॥ पश्चादाचार्याः किं कारणमित्याह—

वासस्स य आगमणे, अवसउणे पट्ठिआ णिवत्तंति ।
ओभावणा पवयणे, आयरिआ मग्गओ तम्हा ॥२५७॥

वृष्ट्यागमनेऽपशकुने च प्रस्थिता अपि ते निवर्त्तन्ते, यद्येवमाचार्या निवर्त्तन्ते तत 'ओ०' प्रवचनहीलना, यत एतदप्येते न जानते । ततो मार्गतः पृष्ठत आचार्या निर्गच्छन्ति ॥२५७॥ के ? तेऽपशकुना इत्याह—

मइल कुचेले अब्भंगिएल्लए साण खुज्जवडभे या ।
एए उ अप्पसत्था, हवंति खित्ताउ णिंताणं ॥२५८॥

मलिनः शरीरकर्पटकैः 'कु०' जीर्णकर्पटः, 'अ०' स्नेहाभ्यक्तशरीरः, श्वा वामपार्श्वाद्दक्षिणपार्श्वं याति, कुब्जो-वक्रः वडभो-वामनः, एतेऽप्रशस्ताः ॥२५८॥

णारी पीवरगब्भा, वड्डकुमारी य कट्ठभारो अ ।
कासायवत्थ कुच्चंधरा य कज्जं ण साहेंति ॥२५९॥

'पी०' आसन्नप्रसवकाला ॥२५९॥ शेषं सुगमम्, [शुभशकुनान्याह–]

जंबू अ चास-मऊरे, भार ाए तहेव णउले अ ।
दंसणमेव पसत्थं, पयाहिणे सव्वसंपत्ती ॥२६०॥ (सुगमा)

णंदी तूरं पुण्णस्स, दंसणं संखपडहसद्दो य ।
भिंगार-छत्त-चामर–धयप्पडागा पसत्थाई ॥२६१॥

'पु०' पूर्णकलशदर्शनं, ध्वज एव [पताका] ध्वजपताका शेषं स्पष्टम् ॥२६१॥

समणं संजयं दंतं, सुमणा मोयगा दहिं ।
मीणं घंटं पडागं च, सिद्धमत्थं विआगरे ॥२६२॥

श्रमणो लिङ्गमात्रधारी, संयतः, इन्द्रियादिभिर्दान्तः, सुमनसः–पुष्पाणि निर्गच्छंश्चासौ [शेषं सुगमम्] ॥२६२॥

सि(से)ज्झातरेऽणुभा(प्र.सा)सइ, आयरिओ सेसगा चिलिमिलीए ।
अंतो गिण्हंतुवहिं, सारविअपडिस्सया पुव्विं ॥२६३॥

व्रजनसमये शय्यातराननुभाषते 'व्रजाम' इत्येवमाद्याचार्यः । शेषाः साधवः चिलिमिन्याः–जवनिकाया अन्तः उपधिं गृह्णन्ति, पूर्वं संमार्जितोपाश्रयाः ॥२६३॥ कियदुपकरणं गृह्णन्तीत्याह–

बालाई उवगरणं, जावइयं तरति तत्तिअं गिण्हे ।
जहण्णेण जहाजायं, सेसं तरुणा विरिंचिंति ॥२६४॥

बालादयो यावदुपकरणं शक्नुवन्ति तावद् गृह्णन्ति, तैश्च 'ज०'जघन्येन रजोहरणं चोलपट्टश्च ग्राह्यः, शेषमुपकरणं तरुणा आभिग्राहिका 'वि०' विभजन्ति ॥२६४॥ तदभावे किमित्याह–

आयरिओवहि बालाइयाण गिण्हंति संघयणजुत्ता ।
दो सोत्ति-उण्णि-संथारए य गहणेकपासेणं ॥२६५॥

आचार्योपधिं बालादीनां च संहननोपेताः गृह्णन्ति, द्वौ सौत्रिकौ कल्पौ एक और्णिकः कल्पः, संस्तारकः चशब्दादुत्तरपट्टः, एषां ग्रहणं 'इक्कपासेणं'ति एकस्मिन् पार्श्वे एकत्र स्कन्धे स्थापयन्ति, द्वितीयस्कन्धे पात्रकाणि, आत्मीयां तूपधिं विण्टलिकां कृत्वा यत्र स्कन्धे उपधिः कृतः तयैव दिशा कक्षायां करोति ॥२६५॥ 'अधिकरण-तेणे'त्यवयवमाह—

आउज्जोवण वणिए, अगणि कुडुंबी कुकम्म कम्मरिए ।
तेणे मालागारे, उब्भामग पंथिए जंते ॥२६६॥

रात्रौ सशब्दं व्रजतामेते दोषाः—अपां यन्त्राणि योत्रयन्ति, अथवाऽप्कायाय योषितो विबुद्धा व्रजन्ति, 'जोवणं'ति धान्यप्रकरस्तदर्थं लोको याति, प्रकरो—मर्दनं धान्यस्य, लाटविषये 'जोवणं धण्णपइरणं भन्नइ' 'व०' वणिजो वा विभातमिति यान्ति, लोहकारशालादिष्वग्निः प्रज्वाल्यते, कुटुम्बिनः स्वकर्मणि लगन्ति । कुकर्माणो मात्सिकादयः, कुत्सिता माराः कुमाराः—सौकरिकास्तेषां प्रबोधः स्यात्, पूत्कारादिना स्तेनकानाञ्च, मालाकारा विबुध्यन्ते, 'उब्भा'० पारदारिकाः 'पं०' पथिकाः, 'जं०' यन्त्रका यन्त्राणि वाहयन्ति चाक्रिकादयः ॥२६६॥ यदुक्तं 'णट्ठे खग्गूड संगारे'त्ति—तत्र सामान्येन, अत्र तु संगारः कया यतनया कस्यां वा वेलायां कर्त्तव्यस्तदाह—

संगार बीय वसही, तइए सण्णी चउत्थ साहम्मी ।
पंचमगमि अ वसही, छट्ठे ठाणट्ठिओ होति ॥२६७॥

रात्रौ सशब्दं यातां दोषाः ।

संकेतविधिर्वक्तव्यः। द्वितीयद्वारे वसतिः, पूर्वप्रतिलेखनवसतिव्याघातेऽन्यवसतिग्रहणविधिर्वक्तव्यः, तृतीये सञ्ज्ञी, चतुर्थे साधर्मिकः, पञ्चमे वसतिर्वाच्या, 'विच्छिन्ना खुड्डुलिया' इत्यादि०, षष्ठे स्थानस्थः स्यात्। द्वारगाथेयम् ॥२६७॥ अधुना संगारद्वयं व्याख्यानयन्नाह[१]–

पाओसे संगारो, अमुई वेलाए णिग्गए ठाणं।
अमुगत्थ वसहि भिक्खं, बीओ खग्गूड संगारो ॥२६८॥

सप्रदोषे संकेत आचार्येण कर्त्तव्यः, 'अमु०' अमुकया वेलया यास्यामः, निर्गतानां सतां अमुकत्र विश्रामस्थानं करिष्यामः। [अमुकत्र] वसतिर्भविष्यति। अमुकत्र ग्रामे भिक्षाटनं कर्त्तव्यम्, एकस्तावदयं संगारः–संकेतः। 'बिति०' अमुकत्र द्वितीयः संकेतः खग्गूडस्य दीयते ॥२६८॥ स चैवमाह–

रत्तिं ण चेव कप्पइ, णीयदुवारे विराहणा दुविहा।
पण्णवण बहुतरगुणे, अणिच्छ बीउव्व उवही वा ॥२६९॥

साधूनां रात्रौ गमनमकल्प्यम्, दिवाऽपि तावन्नीचद्वारे द्विधा विराधना सतमस्कत्वादास्तां तावद् रात्रौ, एष च धर्मश्रद्धया न गच्छति। 'प०' ततः स प्रज्ञाप्यते–तत्र रात्रिगमने बहवो गुणा दृश्यन्ते–बालवृद्धादयः सुखेन गच्छान्ति रात्रौ तृषया न बाध्यन्ते, अथ तथाऽपि नेच्छति गमनं, ततस्तदर्थं द्वितीयो दीयते, अथवा जीर्णोपधिस्तस्य

सकारणे
प्रदोषगमने
संकेतद्वय-
करणम्।

१ ०न्नाह भाष्यकारः० ॥k॥

एकाकिनः स्वापेऽनेकधा दोषाः ।

दीयते शोभनश्च गृह्यते मा गृह्णन्तु स्तेनका इति ॥२६९॥ एकाकी यदि स्वपिति ततः को दोष इत्याह—

सुवणे वीसुवघातो, पडिबज्झंतो अ जो उ ण मिलेज्जा ।
जग्गण अप्पडिबज्झण, जइवि चिरेणं ण उवहम्मे ॥२७०॥

विष्वगेकाकिनस्तस्य स्वापे उपधिरुपहन्यते, एकाकी स्वपन् प्रमादवान् भवति । स्त्र्याद्यभियोगसंभवात्, ततोऽकल्प्यः स्यात्परिष्ठापनीयश्च, गच्छे तु स्वपतो नोपहन्यते, यतस्तत्र केचन सूत्रपौरुषीमन्ये द्वितीययामेऽर्थपौरुषीं कुर्वन्ति । तृतीयप्रहरे आचार्या उत्तिष्ठन्ति, चतुर्थे सर्वेप्युत्तिष्ठन्ति, जागरतो नास्ति उपध्युपघातः । एकाकिनो जागरणं नास्ति । 'प०' प्रतिबध्यमानो व्रजादिषु क्षीरयाचनेच्छया यो न मिलेत्तस्याप्युपधिरुपहन्यते, यत एकाकिनः पर्यटनं नोक्तम्, अत एकाकिनो व्रजादिषु प्रतिबन्धेऽप्युपधिरुपहन्यते यः पुनर्जागर्ति तस्मिन् दिने मुक्तो न व्रजादिषु प्रतिबध्यते एवंविधस्तत्र दिनेऽमिलन्नपि नोपधिमुपहन्ति । 'जग्ग० जइ०' किं बहुना जाग्रन्निशि गोकुलादिषु वा प्रतिबध्यमानो यद्यपि चिरेण मिलति बहुदिनैस्तस्यापि नोपहन्यतेऽप्रमादपरत्वात्तस्येति ॥२७०॥ गच्छस्य गमनविधिमाह—

पुरओ मज्झे तह मग्गओ य ठायंति खित्तपडिलेहा ।
दाइंतुच्चाराई, भावासण्णाइरक्खट्ठा ॥२७१॥

क्षेत्रप्रत्युपेक्षकाः केचन पुरतो गच्छस्य तिष्ठन्ति, केचन मध्ये, मार्गतश्च तिष्ठन्ति, ते हि मार्गाभिज्ञाः। 'दा०' उच्चारप्रस्रवणस्थानानि दर्शयन्ति गच्छस्य, 'भाव०' भावासन्नो अणहियासओ, तद्रक्षणार्थं, अयमर्थः—उच्चारादिना बाध्यमानस्य गच्छस्य ते मार्गज्ञाः स्थण्डिलानि दर्शयन्ति ॥२७१॥

डहरं भिक्खग्गामे अंतरगामंमि ठावए तरुणे।
उवगरणगहण असहू व, ठावए जाणगं चेगं ॥२७२॥

यत्र ग्रामे वासोऽभिप्रेतो भिक्षा वाऽटितुमभिप्रेता, तत्र 'ड०' लघीयसि सति अन्वरालग्रामे तरुणान् भिक्षार्थं स्थापयेत्। तेषामुपकरणमन्ये गृह्णन्ति, अथ ते ग्रहीतुं न शक्नुवन्ति, ततस्तानेव भिक्षार्थं तत्र स्थापयेत्, मार्गज्ञं चैकं तेषां मध्ये, येन ते सुखेनाऽऽगच्छन्ति ॥२७२॥

दूरट्ठिअ खुड्डलए, नव भड अगणी य पंत पडिणीए।
संघाडेगो धुवकम्मिओ व सुण्णे णवरि रिक्खा ॥२७३॥

अथाऽसौ वासकभिक्षार्थमभिप्रेतो ग्रामो दूरस्थः स्यादुत्थितो वा—उद्वसितः, क्षुल्लो वा—पुरा सम्पूर्णो दृष्ट इदानीमर्द्धमुद्वसितमतः क्षुल्लकः, 'नव'—पुरा यत्रासीत्ततः स्थानादन्यत्राऽधुना जातः, भटाऽऽक्रान्तो वा जातः, अग्निना दग्धः, प्रान्तः[1] पूर्वं शोभनो दृष्टः सम्प्रति प्रान्तीभूतो विरूपोऽभूत्, प्रत्यनीकाऽऽक्रान्तः, प्रतिलेखनाकाले प्रत्यनीक-

१ ०प्रान्तो राजदण्डितत्वात्० ॥ k ॥

कारणतोऽग्रगमने पाश्चात्यसाधुमीलनार्थं रेखासं विधिः।

स्तत्र नासीत् सम्प्रत्यायातः, पूर्वप्रतिलेखितग्रामे एवंविधे जाते तत्र संघाटकः स्थाप्यते पाश्चात्यप्रव्रजितमीलनार्थं, तदभावे एकः, 'धु०' ध्रुवकार्मिको—लोहकारादिस्तस्य कथ्यते—वयमन्यत्र यास्यामस्त्वया पाश्चात्येभ्यः कथ्यं—यदनेन मार्गेणागन्तव्यमिति। यदाऽसौ ग्रामः शून्यस्तदा मार्गेऽनभिप्रेते तिरश्चीनं रेखाद्वयं पात्यते, अभिप्रेते तु दीर्घां रेखां कुर्वन्ति ॥२७३॥ यदेभिर्दोषैर्युक्तो न स्यात् स ग्रामः, ततस्तत्रैव प्रविशति, अन्तरालस्थसाधूनां वसतिज्ञानार्थमागच्छतां न कोऽपि साधुः प्रतिपालयति, एतदाह—

जाणंतठिए ता एउ, वसहीए णत्थि कोइ पडियरइ।
अण्णाएऽजाणंतेसु, वावि संघाड—धुवकम्मी ॥२७४॥

पूर्वप्रत्युपेक्षितवसतिव्याघातेऽन्यस्यां वसतौ जायातां भिक्षार्थं स्थितेष्वजानत्सु वसतिज्ञापनार्थं संघाटको वहिः स्थाप्यते ध्रुवकर्मकाय वा कथ्यते, यदुत—साधवः समेष्यन्ति, तेषामियं वसतिर्दर्शनीया कथ्या वा ॥२७४॥ अन्तराले स्थापितं किं कर्त्तव्यमित्याह—

जइ अब्भासे गमणं, दूरं गंतु दुगाउयं पेसे।
ते वि असंथरमाणा, इंति अहवा विसज्जंति ॥२७५॥

प्रत्युपेक्षित-वसतिव्याघ कर्तव्य-विधिः।

यद्यभ्यासे गच्छस्ततस्ते गच्छसमीपमेवाऽऽगच्छन्ति, अथ दूरे गच्छस्ततो द्विगव्यूतं 'गंतु'-गत्वा गच्छसमीपमेकं साधुं प्रेषयन्ति, तेऽप्यसंस्तरमाणा-अतृप्ता 'इंति' आगच्छन्ति यत्र गृहीतभिक्षाः साधवस्तिष्ठन्ति। अथ तृप्तास्ततस्तं साधुं विसर्जयन्ति, यदुत-पर्याप्तमस्माकं, यूयं भक्षयि-वाऽऽगच्छतेति, संकेतद्वारं व्याख्यातं तत्प्रसङ्गायातं च व्याख्यातम् ॥२७५॥ वसतिद्वारमुच्यते—

पढमबियाए गमणं गहणं पडिलेहणा पवेसो उ ।
काले संघाडेगो व-ऽसंथरंताण तह चेव ॥२७६॥

तस्यां वसतौ प्रथमद्वितीयपौरुष्यां गमनं स्यात्, 'गहणं'ति दंडछणदोरयचिलिमिलीणं ग्रहणं कृत्वा प्रविशन्ति, (ततः) तां प्रमार्जयन्ति, ततो गच्छः प्रविशति। कदाचिद् भिक्षाकाल एव प्राप्ताः [ ततः संघाटक एको वसतिं प्रमार्जयत्यन्ये भिक्षार्थं यान्ति। संघाटकाभावे एक एव गीतार्थो वसतिप्रत्युपेक्षणार्थं प्रेष्यते, यदैकोऽपि न प्राप्यते तदा 'असंथ०' अतृप्यन्तः सर्वे एवाऽटन्ति, पश्चात्पूर्वप्रतिलेखितवसतौ प्रविशन्ति, यदा प्रतिलेखितवसतेर्व्याघातस्तदा, 'तह चेव'त्ति यथा भिक्षामन्विष्यन्ति तथा वसतिमपि मार्गयन्ति, लब्धायां च तत्रैव परस्परं हिण्डन्तः कथयन्ति, तत्र वसतौ निवर्त्तयन्ति ॥२७६॥ 'पढम-बिइयाए'त्ति द्वारमाह—

पढमबितियाए गमणं, बाहिं ठाणं च चिलिमिणीदोरे ।
घित्तूण इंति वसहा, वसहिं पडिलेहिउ पुव्विं ॥२७७॥

कारणतोऽग्रगमने पाश्चात्यसाधुमीलनार्थं रेखासंकेतादि विधिः ।

प्रथमायां द्वितीयायां वा पौरुष्यां तत्र क्षेत्रे प्राप्तिः स्यात्। तत्राऽयं विधिः 'वा०' बहिरेव तावदवस्थानं कुर्वन्ति, 'चिलिमिणी०' जवनिकां दवरिकां च गृहीत्वा वृषभा वसतौ प्रविशन्ति, ग्रहणद्वारं[1] व्याख्यातम्। किं कर्तु ?-वसतिं प्रत्युपेक्षितुं, 'पडिलेहण'त्ति द्वारं भणितम् ॥२७७॥ यदा तु पूर्वं प्रत्युपेक्षिताया व्याघातस्तदा—

वाघाए अण्णं मग्गिऊण चिलिमिणिपमज्जणा वसहे।
पत्ताण भिक्खवेलं, संघाडेगो परिणओ वा ॥२७८॥

पूर्वप्रतिलेखिताया व्याघातेऽन्यां मार्गयित्वा ततो वृषभाश्चिलिमिण्यादीनि गृहीत्वा प्रमार्जयन्ति। यदा तु भिक्षावेलायामेव प्राप्तास्तदा[2] 'काल'त्ति द्वारं व्याख्यातम्। संघाटको वसतिप्रत्युपेक्षणार्थं प्रेष्यते, 'संघाडे'त्तिभणियं। संघाटकाभावे एको वा प्रेष्यते परिणतो गीतार्थः, 'एग'त्ति भणियं ॥२७८॥ यदा त्वेकोऽपि नास्ति—

सव्वे वा हिंडंता, वसहिं मग्गंति जह व समुयाणं।
लद्धे संकलिअणिवेअण तु तत्थेव उ नियट्टे ॥२७९॥

सर्वे वा हिण्डन्त एव वसतिं मार्गयन्ति-अन्विष्यन्ति, यथा समुदानं-भिक्षां प्रार्थयन्ति-निरूपयन्ति। 'तह चे'वत्ति अवयवो भणितः [२८८ गाथास्थः]। लब्धायां वसतौ संकलिकया निवेदनं-यो यथा यं पश्यति स तथा तं वक्ति, लब्धा वसतिरिह निवर्त्तनीयं, ततस्तस्यामेव निवर्त्तन्ते ॥२७९॥ तत्र प्रवेशे को विधिरित्याह—

१ २८८ तमा गाथा दृष्टव्या ॥ सं० ॥ २ तदाशब्दस्य संघाटक इत्यत्रान्वयः कार्यः ॥ सं० ॥

एक्को धरेइ भाणं, ऐक्को दोण्हवि पवेसए उवहिं ।
सव्वो उवेइ गच्छो, (प्र.गच्छो उवेइ वसहिं) सबालवुड्ढाउला ताहे ॥२८०॥

एको धारयति-संघट्टयति पात्रकं, द्वितीयो बहिर्व्यवस्थितो गच्छादुपधिं भिक्षामटद्भ्यां मुक्तामानयति द्वयोरप्यात्मनः पात्रसंघट्टयितुश्च । ततो गच्छ उपैति–प्रविशति सबालवृद्धत्वादाकुलः, तदा तस्मिन् काले 'पढमबिइयाए'त्ति द्वारं भणितम् ॥२८०॥

चोयगपुच्छा दोसा, मंडलिबंधंमि होइ आगमणं ।
संजमआयविराहण, वियालगहणे य जे दोसा ॥२८१॥

चोदकस्य पृच्छा, यदुत–बाह्यत एव भुक्त्वा प्रविशन्तु, यतः–क्षुधार्तस्य तृषितस्योपधिमानयत इर्यापथमशोधयतः संयमविराधना, उपधिभाराक्रान्तस्य कण्टकादीननिरूपयत आत्मविराधना च स्यात् ?, आचार्यस्त्वाह–बहिर्भुञ्जतां दोषाः, कथम् ?, मण्डलिबन्धे सत्यागमनं स्यात् सागारिकाणां, तत्र च संयमात्मविराधना भवति, विकालवेलायां वसतिग्रहणे ये दोषास्ते वक्ष्यन्ते, द्वारगाथेयम् ॥२८१॥ 'चोयगपुच्छे'त्याह—

अइभारेण उ इरिअं, ण सोहए कंटगाइ आयाए ।
भत्तट्ठिअ वोसिरिआ, अइंतु एवं जढा दोसा ॥२८२॥

तदेव नोदक-पृच्छायाः सविस्तर-मुत्तरित-माचार्येण ।

चोदक[1] एवमाह—गच्छसमीपादुपधिं प्रवेशयंस्तदतिभारेण बुभुक्षया च पीडितः सन्नीर्यापथिकां न शोधयति, अतः संयमविराधना, बुभुक्षितत्वात् कण्टकादीन्न पश्यत्यत आत्मविराधना, तस्मात् 'भत्तट्ठिय'त्ति बहिरेव भुक्ताः सन्तः 'वो०' उच्चारप्रस्रवणं कृत्वा ततः प्रविशन्तु वसतौ । एवं क्रियमाणे दोषा जढाः—त्यक्ताः स्युः संयमात्मविराधनादयः ॥२८२॥ एवमुक्ते आचार्य आह—

आयरिअवयण दोसा, दुविहा णियमा उ संजमायाए ।
वच्चह ण तुज्झ सामी, असंखडं मंडलीए वा ॥२८३॥

आचार्यवचनं, बहिर्भुञ्जतां दोषा द्विधा नियमतः, संयमात्मविराधनादोषाः । भोजनस्थाने सागारिका यदि स्युः, ततो भिक्षामटित्वा आगता 'हे सागारिका ! व्रजते'ति भणने संयमविराधना आत्मविराधना च, एवं—एवमुक्ते ते भणन्ति, नास्य प्रदेशस्य यूयं स्वामिनः, ततोऽसंखडं—कलहः स्यात् । अथ मण्डल्यां जातायाम् ॥२८३॥

कोऊहल आगमणं, संखोभेणं अकंठ गमणाइं ।
ते चेव संखडाइं, वसहिं व ण दंति जं वऽण्णं ॥२८४॥

मण्डल्यां कौतुकेनाऽऽगच्छन्ति सागारिकाः, ततः साधूनां क्षोभेण कण्ठे कवलो नोपक्रामति, त एव वा संखडादयो दोषाः स्युः, रुष्टाः सन्तो वसतिं ते वा न प्रयच्छन्ति तत्र ग्रामे 'जं वऽण्णं'ति यच्चान्यद्ग्रहणाकर्षणादि

[1] नोदक एव० ॥k॥

कुर्वन्ति ॥२८४॥ इदानीं तस्माद् ग्रामादन्यग्रामे भोजनं गृहीत्वा गन्तव्यं, तत्र चैते दोषाः—

भारेण वेयणाए, ण पेहए थाणुकंट आयाए ।
इरियाइ संजमंमि अ, परिगलमाणेण छक्काया ॥२८५॥

उपधिभिक्षाभारेण या क्षुद्वेदना तया च न पश्यति स्थाणुकण्टकादीन् तत आत्मविराधना, इर्यामशोधयतः संयमविराधना च । तथा परिगलमाने पानादौ षट्कायविराधना भवति ॥२८५॥ तथा चैते दोषा अन्यत्र ग्रामे गच्छताम्—

सावय-तेणा दुविहा, विराहणा जा य उवहिणा उ विणा ।
तणअग्गिगहणसेवण—वियालगमणे इमे दोसा ॥२८६॥

श्वापदभयं स्यात्, स्तेना द्विविधा शरीरोपध्योरपहारिणः । विराधना या संस्तारकाद्युपधिं विना स्यात् तृणाग्न्योर्ग्रहणाऽऽसेवनरूपा, संयमविराधनेति द्वारं । यदुक्तं चोदकेन—विकाले प्रवेष्टुं युज्यते, तन्निरस्यन्नाह— 'विआलगमणे इमे दोसा' एते वक्ष्यमाणा विकालगमने दोषाः ॥२८६॥

पविसण मग्गण ठाणे, वेसित्थिदुगुंछिए य बोद्धव्वे ।
सज्झाए संथारे, उच्चारे चेव पासवणे ॥२८७॥

सभोजनं ग्रामान्तरे गच्छतां चेमे दोषाः ।

तत्र ग्रामे विकाले प्रविशतां ये दोषास्ते वक्ष्यन्ते, वसतिमार्गणे ये दोषास्तेऽपि च, 'ठाणे वेसित्थिदुगुंछिए य' इत्येतद्वक्ष्यति, विकालवेलायां बोद्धव्यम् 'सज्झा०' स्वाध्यायमप्रत्युपेक्षितवसतौ अगृहीते काले कुर्वतो दोषाः, अथ न करोति तथाऽपि दोषो हानिलक्षणः, 'सं०' अप्रत्युपेक्षितवसतौ संस्तारकभुवं गृह्णतः संयमात्मविराधनादोषः, 'उच्चा०' उच्चाराद्यप्रत्युपेक्षितायां भुवि स्थंडिलेष्वनिरूपितेषु व्युत्सृजतां दोषाः, धरणेऽपि दोषः, एवं प्रस्रवणेऽपि, द्वारगाथेयम् ॥२८७॥ अधुना प्रतिपदं व्याख्यानयति—

सावयतेणा दुविहा, विराहणा जा य उवहिणा उ विणा ।
गुम्मिअगहणाऽऽहणणा, गोणाई चमढणा चेव ॥२८८॥

विकाले प्रविशतां ग्रामे श्वापदभयं स्यात्, स्तेना द्विविधा शरीरोपध्यपहारिणस्तद्भयं भवति, उपधिना विना या च विराधना तृणाग्निग्रहणसेवनादिका सा च दोषः। गुल्मं—स्थानं तद्रक्षपाला गुल्मिकास्तैर्ग्रहणमाहननं च स्यात्, 'गोणादिचमढणा' बलीवर्दादिपादप्रहारादिभिश्चाय' विकालप्रवेशे दोषः ॥२८८॥ 'पविसणे'त्ति गयं, 'मग्गणे'त्ति आह—

फिडिए अण्णोण्णारण, तेण य राओ दिया य पंथंमि ।
साणाइ वेसकुत्थिअ, तवोवणं मूसिआ जं च ॥२८९॥

विकाले वसतिमार्गणे फिडितो भ्रष्टः स्यात्, तत्रान्योऽन्यं परस्परत आरणं शब्दनं तत् श्रुत्वा स्तेनका रात्रौ मोषितुमभिलषन्ति, दिवा वा पथि गच्छतः श्रमणान् मुष्णन्ति 'सा०' रात्रौ वसतेरन्वेषणे श्वादिर्दशति, 'मग्गण'त्ति भणियं । 'वेसित्थिदुगुंछिए' (२९८ गादास्थपदमिद') इत्यवयवमाह—'कु०' रात्रौ वसतिलाभे न जानन्ति किमिदं स्थानं वेश्यापाटकासन्नं ? ततस्तत्र वसतोऽयं दोषः, लोको ब्रूतेऽहो! तपोवनमिति । कुच्छि[त्सि]तं छिम्पकादिस्थानासन्ने ब्रवीति स्वस्थाने मूपिका गताः। एतेऽप्येवंजातीया एव । 'वेसित्थिदुगुंछिए'त्ति गतं ॥२८९॥ स्वाध्यायद्वारं सुखोन्नेयत्वाद्विमुच्य संस्तारद्वारमाह—

विकाले वस प्रवेशदोषे संस्तारकद्वारम्।

अप्पडिलेहिअकंटाविलंमि संथारगंमि आयाए ।
छक्कायसंजमंमि अ, चि(वि)लिणे सेहऽण्णहा भावो ॥२९०॥

रात्रावप्रत्युपेक्षितायां भुवि कण्टका भवन्ति बिलं वा, तत्र संस्तारके क्रियमाणे आत्मविराधना, 'छ०' तत्र[1] षट्कायस्यापि विराधना स्वपतः स्यात् । तथा चि(वि)लीनम् अशुचिकं भवति, तत्र शैक्षस्य जुगुप्सयाऽन्यथाभाव—उन्निष्क्रमणादिः, 'संथार'त्ति गयं ॥२९०॥ 'उच्चारपासवणे'त्ति व्याचष्टे—

कंटगथाणुगवाला—विलंमि जइ वोसिरेज्ज आयाए ।
संजमओ छक्काया, गमणे पत्ते अइंते य ॥२९१॥

१ तत्र स्वपतः षट्कायस्यापि संयमविराधनापीनि० ॥k॥

कण्टकस्थाणुव्यालबिलसमाकुले प्रदेशे उच्चारादिव्युत्सर्गत आत्मविराधना, रात्रौ षट्कायोपमर्देन संयमतश्च, कायिकीव्युत्सर्जनार्थं गमने (गच्छतो), 'पत्ति'त्ति कायिकाभुवं प्राप्तस्य व्युत्सृजतः । व्युत्सृज्य वसतिं प्रविशतः षट्कायोपमर्दो दोषः ॥२९१॥ यदि निरोधं करोति ततश्चैते दोषाः—

मुत्तणिरोहे चक्खू, वच्चणिरोहेण (प्र.य) जीवियं चयइ ।
उड्ढणिरोहे कोट्ठं, गेलण्णं वा भवे तिसुवि ॥२९२॥

'उच्चारपासवणे'त्ति गयं ॥२९२॥ संप्रत्यपवाद उच्यते—

जइ पुण वियालपत्ता, पए व पत्ता उवस्सयं ण लभे ।
सुण्णघरदेउले वा, उज्जाणे वा अपरिभोगे ॥२९३॥

यदि विकालवेलायां प्राप्तास्ततो न प्रमादकृतो दोषः । प्रगे एव प्रत्यूषस्येव प्राप्ताः [१]किन्तूपाश्रयं न लभन्ते, ततः शून्यगृहे देवकुले उद्याने वाऽपरिभोगे—लोकपरिभोगरहिते 'समुद्दिशन्ति'त्ति क्रियां वक्ष्यति ॥२९३॥

आवाय चिलिमिणीए, रण्णे वा णिब्भए समुद्दिसणं ।
सभए पच्छण्णाऽसइ, कमढय कुरुया य संतरिआ ॥२९४॥

१ ०प्राप्ता उपाश्रयं न लभन्ते० ॥k॥

विकालवसति-
प्रवेशदोषे
उच्चारपासवण-
द्वारम् ।

शून्यगृहादौ लोकानामापाते सति यवनिका दीयते । अथ शून्यगृहादिसागारिकाऽऽक्रान्तं ततोऽरण्ये निर्भये समुद्दिशन्ति, सभयेऽरण्ये प्रच्छन्नस्याऽसति अभावे सति लोकाऽऽपातेऽपि कमढके बाह्याभ्यन्तरशुक्लेपलिप्ते भुज्यते, 'कुरुआ य'त्ति तेष्वेव कुरुकुचा—पादप्रक्षालनादिका क्रियते, 'सं०' सान्तराः सावकाशा बृहदन्तराला उपविशन्ति ॥२९४॥ भुक्त्वा बहिः पुनर्विकाले वसतिमन्विष्यन्ति, सा च कोष्टकादिका स्यात्तत्र लब्धायां को विधिः—

कोट्ठग सभा व पुव्विं, काल—वियाराइभूमिपडिलेहा ।
पच्छा अइन्ति रत्तिं, पत्ता वा ते भवे रत्तिं ॥२९५॥

कोष्टकः—आवासविशेषः, सभा प्रतीता । कोष्टके सभायां [वा] वसतौ लब्धायां प्रागेव कालभूमिं प्रत्युपेक्षन्ते, यत्र कालो गृह्यते, विचारभूमिं—सञ्ज्ञाकायिकाभूमिं च प्रत्युपेक्षन्ते । पश्चाद्गच्छो रात्रौ उपैति, 'पत्ता वा०' यदा पुनस्ते आगच्छन्त एव कथमपि रात्रौ प्राप्तास्तदा रात्रावपि प्रविशन्ति ॥२९५॥

गुम्मिअ-भेसण-समणा, णिब्भय-बहिठाण-वसहि-पडिलेहा ।
सुण्णघरपुव्वभणिअं, कंचुग तह दारुदंडेणं ॥२९६॥ —

गुल्मिकाः—स्थानकरक्षपाला यदि भापयन्ति—त्रासयन्ति तदा, वयं श्रमणा न चौरा इति वक्तव्यं, अथ स सन्निवेशो निर्भय एव भवेत्तदा बहिरेव गच्छस्तावत्तिष्ठति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं व्रजन्ति, किंविशिष्टा वसति—

वसत्यनुरूपेण संस्तारकभूमेर्विभजनम् कर्तव्यश्च ।

रीन्वष्यते ? शून्यगृहादि पूर्वोक्त'[1], 'कंचुग तह दारुदण्डेणं'ति दण्डकपुञ्छनं तद्धि कञ्चुकं परिधाय सर्पातिपतनभयाद्दण्डपुञ्छनकेन वसतिमुपरिष्टात्प्रस्फोटयन्ति गच्छश्च प्रविशति ॥२९६॥ ततः को विधिः स्वापे—

संथारगभूमितिगं, आयरियाणं तु सेसगाणेगा ।

रुंदाए पुप्फइण्णा, मंडलिआ आवली इयरे ॥२९७॥

आचार्यस्य संस्तारकभूमित्रयं निरूप्यते, निर्वाता१, प्रवाता२, निर्वातप्रवाता३ च, शेषसाधूनामेकैका मंस्तारकभूमिर्दीयते 'रु०' यदि विस्तीर्णा वसतिः स्यात्तदा पुष्पप्रकरवद्विक्षिप्ताः स्वपन्ति यथा सागारिकावकाशो न स्यात्, यद्यसौ क्षुल्लिका ततः पात्रकाणि मध्ये कृत्वा मण्डल्या पार्श्वे स्वपन्ति, प्रमाणयुक्तायां वसतौ आवल्यां पङ्क्त्या स्वपन्ति ॥२९७॥ क्षुल्लिका—प्रमाणयुक्तवसत्योरयं विधिः—

संथारग्गहणाए, वेंटिअउक्खेवणं तु कायव्वं ।

संथारो घेत्तवो, मायामयविप्पमुक्केणं ॥२९८॥

संस्तारकग्रहणभूमिकाले यदा स्थविरादिः संस्तारकभूमिं विभजति, तदा साधुभिरुपधिविण्टलिकानामात्मीयानामुत्क्षेपणं कर्त्तव्यं, येन सुखेनैव दृष्टायां भुवि विभजितुं संस्तारकाः शक्यन्ते, यो यस्मै दीयते संस्तारकः स तेन ग्राह्यो मायामदविप्रमुक्तेन, तेन माया न कार्या, यदहं वातार्थी, ममेह प्रयच्छ, नाऽपि मदोऽहंकारः कार्यः, यदहमस्यापि पूज्यो येन मम शुभसंस्तारकभूर्दत्तेति ॥२९८॥

१ पूर्वोक्तं, कञ्चुकं परिधाय सर्पपतनभयाद्××दण्डासनेनोपरि स्फोटयन्ति० ॥k॥

पोरिसि-आपुच्छणया, सामाइय उभयकायपडिलेहा ।
साहणिअ दुवे पट्टे, पमज्ज भूमिं जओ पाए ॥२९९॥

पौरुष्यां निर्युक्तीर्गुणयित्वा, 'आ०' आचार्यसमीपे मुखवस्त्रिकां प्रतिलेखयित्वा भणति 'भगवन्! बहुपडिपुण्णा पोरिसी संदिशत संस्तारकं तिष्ठामीति' सामायिकं वारत्रयं कथयति । 'उ०' सञ्ज्ञाकायिक्योरुपयोगं कृत्वा सर्वं कायं प्रमृज्य, 'सा०' द्वावपि संस्तारोत्तरपट्टौ एकत्र संमील्य उर्वोरुपरि संस्थापयति । यतस्तेन पादौ भूमिं च प्रमृज्य ततः सोत्तरपट्टं संस्तारकं प्रक्षिपति । अस्याः संबन्धः सामाचार्यनुक्रमेण न कृतः किन्तु स्वबुद्ध्या यथाक्रमं गाथेयं व्याख्येया ॥२९९॥ ततः किं भणतीत्याह—

अणुजाणह संथारं, बाहुवहाणेण वामपासेणं ।
कुक्कुडिपायपसारण, अतरंत पमज्जए भूमिं ॥३००॥

अनुजानीध्वं 'सं०' संस्तारकं, पुनश्च बाहूपधानेन वामपार्श्वेन स्वपिति, कुर्कुटीवत् पादावाकाशे प्रसारयति पूर्वं, यदा न शक्नोति तदा भुवं प्रमृज्य पादौ स्थापयति ॥३००॥

संकोए संडासं, उव्वत्तंते य कायपडिलेहा ।
दव्वाइउवओगं, णिस्सास णिरुंभणालोयं ॥३०१॥

यदा पादौ संकोचयति तदा 'संडासं'उरुसंबन्धि [उरुसन्धि] अमृज्य संकोचयति । उद्वर्त्तयंश्चासौ कायं प्रमार्जयति, एवं स्वपतो विधिरुक्तः । यदा कायिक्यर्थमुत्तिष्ठति तदा किं करोति 'दव्वाइउवओगं' द्रव्यतः कोऽहं प्रव्रजितो गृही वा, क्षेत्रतः किम्! उपरितलेऽन्यत्र वाऽस्मि, कालतो रात्रिर्दिनो वा, भावतः कायिक्यादिना पीडितोऽहं नवेति । एवमुपयोगे दत्ते निद्राभिभूतः सन्निःश्वासं निरुणद्धि, नासिकां दृढं गृह्णाति निश्वासनिरोधार्थं, ततोऽपनिद्र 'आलोक'—द्वारं पश्यति ॥३०१॥ यतः—

दारं जा पडिलेहे, तेणभए दोण्णि सावए तिण्णि ।
जइ य चिरं तो दारे, अण्णं ठावेत्तु पडिअरइ ॥३०२॥

तदा स द्वारं यावत्प्रतिलेखयन् याति, एवमसौ निर्गच्छति, तत्र यदि स्तेनभयं भवति तदा द्वौ साधू निर्गच्छतः, तयोरेको द्वारे तिष्ठत्यन्यः कायिकीं व्युत्सृजति, 'सा'० श्वापदभये त्रयः साधव उत्तिष्ठन्ति, तृतीयो व्युत्सृजतो रक्षां करोति, यदि च चिरं व्युत्सृजतो जातं, ततो द्वारस्थः साधुरन्यं द्वारे स्थापयित्वा तं व्युत्सृजन्तं प्रतिजागर्त्ति ॥३०२॥

आगम्म पडिकंतो, अणुपेहे जाव चोद्दसवि पुव्वे ।
परिहाणि जा तिगाहा, निद्दपमाओ जढो एवं ॥३०३॥

सोऽपि साधुः कायिकीं व्युत्सृज्य—आगत्येर्यां प्रतिक्रान्तः 'अणुपेहे' अनुगुणनं करोति, यावच्चतुर्दशपूर्वाणि समाप्तानि, परिहाण्या स्तोकं स्तोकतरमिति यावद् गाथात्रयं गुणयति । एवं निद्राप्रमादो 'जढो' मुक्तो भवति ॥३०३॥

अतंरतो व णिवज्जे, असंथरंतो अ पाउणे एक्कं ।
गद्दभदिट्ठंतेणं, दो तिण्णि बहू जहसमाही ॥३०४॥

गाथात्रयं यदि गुणयितुं न शक्नोति, ततः 'णि०' स्वपिति, उत्सर्गतः प्रावरणरहितः स्वपिति, अथ न शक्नोति यापयितुमात्मानं ततोऽसंस्तरमाणः प्रावृणोति कल्पमेकं द्वौ त्रीन् वा, तथाऽपि यदि शीतेन बाध्यते तदा बाह्यतोऽप्रावृतः कायोत्सर्गं करोति, ततः शीतव्याप्तोऽभ्यन्तरं प्रविशति, तत्र निवातमिति मन्यते, तत्राऽपि स्थातुमशक्नुवन् कल्पं प्रावृणोति एकं द्वौ त्रीन्वा, ततः [1]समाधानं जातं । अत्र गर्दभदृष्टान्तो यथा समारोपिताऽनुरूपभारं यदा रासभो वोढुं नेच्छति तदाऽन्यगर्दभ[2]भारोऽप्यारोप्यते, स्वयं वा रोहति, यदा नातिदूरं गतस्ततः स्वयमुत्तरति, ततो गर्दभः शीघ्रतरं याति उत्तारितो मम भार इति मन्यमानः । ततोऽन्यस्मिन् भारेऽपनीते शीघ्रतरं याति एवं साधुरपि । 'संगार बीअ वसहि'त्ति व्याख्यातम् ॥३०४॥ सज्ञिद्वारमाह—

१ गाथास्थ'बहू जहसमाही'त्यंशस्य 'तावत्यावत्समाधानं जातमि'ति द्रोणीयवृत्तौ व्याख्या । तत्र च 'अववाएणं जहा वा समाही होति तहा कायव्वमि'ति चोद्धृतम । अपवादपदेनाधिकान्यपि कल्पन्त इति भावः ॥सं॥

२ ०गर्दभभारो दत्तः, सोऽप्यारूढः ॥k॥

दुविहो य विहरियाविहरिओ उ भयणाउ विहरिए होइ ।
संदिट्ठो जो विहरितो, अविहरिअविही इमो होइ ॥३०५॥

एवं ते व्रजन्तः किञ्चिद् ग्रामं प्राप्ताः, स च ग्रामो द्विविधो, विहृतः साधुभिर्यः क्षुण्णः—आसेवितः, तद्विपरीतोऽविहृतः । तुशब्दो विशेषणार्थः, किं विशिनष्टि ? योऽसौ विहृतः स सञ्ज्ञियुक्तो भवति, संज्ञिरहितो वा, योऽसौ सञ्ज्ञियुक्तस्तत्र भजना विकल्पना, यद्यसौ संज्ञि संविग्नभावितस्ततः प्रविशन्ति, यदि पार्श्वस्थादिभावितोऽतो न प्रविशन्ति, 'सं०' संविग्नविहृते संज्ञिगृहे संदिष्ट-उक्तो 'यथाऽऽचार्यप्रायोग्यं त्वया संज्ञिकुलादानयनीयमिति' अतः प्रविशति । अथाऽन्यथा व्याख्यायते-द्विधा संज्ञिविहृतोऽविहृतश्च, साधुभिः क्षुण्णोऽक्षुण्णश्च, [१]संविग्नविहृते श्रावके भजना तथैव, संदिष्टः संविग्नैः सांभोगिकैश्च विहृते प्रविशति । [२]अथ पार्श्वस्थादिविहृतस्ततो न प्रवेष्टव्यम् ॥३०५॥ अविहृते ग्रामे संज्ञिनि चायं विधिर्वक्ष्यमाणः, एतां गाथां व्याख्यानयन्नाह—

अविहरिअ विहरिओ वा, जइ सड्ढो णत्थि णत्थि उ णियागो ।
णाए जइ ओसण्णा, पविसंति तओ य पण्णरस ॥३०६॥

अविहृतो विहृतो वा ग्रामः, तत्र यदि विहृते ग्रामे श्रावको नास्ति, ततो नास्ति नियोगो न नियुज्यते साधुराचार्यप्रायोग्यानयनार्थं, अथाऽस्ति श्रावक इति ज्ञाते यद्यवसन्नाः प्रविशन्ति तथापि नाऽस्ति नियोगः, अथ

१ ०संविग्न इति पदं नास्ति ॥k॥ २ अथ न प्रवेष्टव्यमेतावानशो नास्ति।ऽ।संज्ञकप्रतौ ।

प्राघूर्णकसाधु-
गतेऽन्य-
साम्भोगिक-
तदितराणां
विधिः ।

प्रविशन्ति ततः पञ्चदशोद्गमदोषाः स्युराधाकर्माद्याः, अध्यवपूरकमिश्रजाताभ्याभेकः । एवं सञ्ज्ञिविषयेऽपि गाथेयं व्याख्येया ॥३०६॥

संविग्गमणुण्णाए, अइंति अहवा कुले विरंचंति ।
अण्णाउंछं व सहू, एमेव य संजईवग्गे ॥३०७॥

अथ सञ्ज्ञी संविग्नैर्विहृतो, [१]अमनोज्ञैर्वसद्भिर्भावितस्तैरेवानुज्ञाते सति श्रावकगृहे प्रविशन्ति, अथवा श्राद्धकुलानि वा विभजन्ति, एते एवान्यसाम्भोगिकाः संविग्नाः, श्रावकाऽभावेऽज्ञातोञ्छं वास्तव्याः समर्था हिण्डन्ति, प्राघूर्णका जाप्यशरीराः श्राद्धकुलानि हिण्डन्ति, यदि वास्तव्या [२]जाप्यशरीरास्ततः प्राघूर्णका अज्ञातोञ्छं हिण्डन्ति । एवमेव संयतीवर्गेऽपि विधिर्ज्ञेयः ॥३०७॥

एवं तु अण्णसंभोइयाण संभोइयाण ते चेव ।
जाणित्ता णिब्बंधं, वत्थव्वेणं स उ पमाणं ॥३०८॥

एवमन्यसाम्भोगिकविधिरुक्तः । यदि तत्र ग्रामे साम्भोगिकाः स्युः, ततस्त एव वास्तव्या भैक्षमानयन्ति, अथ साम्भोगिकान्ते प्राप्तमात्राणां कोऽपि श्रावक आयातः प्राघूर्णकवत्सल एवं भणति—मम गृहे भिक्षार्थं साधुः प्रहेतव्यः, तत्रोच्यते—वास्तव्या एवागमिष्यन्ति, अथैवमुक्ते निर्बन्धं करोत्यसौ तदा वास्तव्येनैकेन सहाऽऽगन्तुको

१ अन्यसाम्भोगिकसंविग्नैर्भाविते तु तैरनुज्ञाते सति श्रावककुले प्रवेष्टव्यमिति भावः ॥सं०॥ २ जीर्णशरीराः ॥S॥

याति, यतः स एव वास्तव्यः प्राघूर्णकानां प्रमाणमल्पाधिकवस्तुग्रहणे ॥३०८॥ तथाऽसौ साम्भोगिकवसतिः संकुला भवति ततः—

असइ वसहिएँ वीसुं, राइणिए वसहि भोयणागम्म ।
असहू अपरिणया वा, ताहे वीसुं सहू वियरे ॥३०९॥

विस्तीर्णवसत्यभावे पृथगन्यत्र वसतौ तिष्ठन्ति, तथापि रत्नाधिकस्य वसतौ भोजनमागम्य कर्त्तव्यम्, स रत्नाधिको वास्तव्यः स्यादागन्तुको वा, 'अस०' अन्यतरो रत्नाधिको भिक्षावेलां प्रतिपालयितुमशक्तः, तथाऽपरिणता वा साधवो मा राटिं कुर्वन्तु ततो 'वीसु' पृथग् वसतिर्भवति । अथ वास्तव्या यदि समर्थास्ततः प्राघूर्णकेभ्यो भिक्षां वितरन्ति ॥३०९॥

तिण्हं एक्केण समं, भत्तट्ठो अप्पणो अवड्ढं तु ।
पच्छा इयरेण समं, आगमणं विरेगु सो चेव ॥३१०॥

अत्र तत्र त्रय आचार्याः स्युः, द्वावागन्तुकावेको वास्तव्यः, तदैकेनागन्तुकाचार्यप्रव्रजितेन सह वास्तव्यो व्रजति, 'भत्त०' यावदागन्तुकाचार्यस्य स घोश्च पर्याप्तं भक्तार्थः स्यात् । 'अप्प'० आत्मार्थमाचार्यार्थं चासौ वास्तव्यो 'ऽव०' अर्द्धध्रुवमात्रं श्रावककुलेभ्यो गृह्णाति । पश्चादितरेण द्वितीयाऽऽगन्तुकाचार्यप्रव्रजितेन समं

कारणतः पृथग्वसतिस्थ प्राघूर्णक-साम्भोगिकयो कर्तव्यम् ।

पर्यटति । तत्राऽपि भक्तार्थो यावद्भवति प्राघूर्णकस्य तावत्पर्यटति । आत्मनश्चार्द्धं ध्रुवमात्रं गृह्णाति, एवं पूर्णो ध्रुवो भवति, एवं ते पर्यटित्वाऽऽत्मीयाऽऽत्मीयवसतावागच्छन्ति, 'विरे०' स एव 'विरेगो'–विभजनं यः श्राद्धकुलेषु भिक्षामटद्भिः कृतः, न पुनर्वसतिमागतानां भवति ॥३१०॥ एवं विहृतक्षेत्रे ससाधुनि विधिरुक्तः, अधुना विहृत-साधुरहितक्षेत्रविधिमाह—

चेइअवंद–णिमंतण, गुरूहिं संदिट्ठ जो वऽसंदिट्ठो ।
णिव्वंध–जोग–गहणं, णवेय णयणं गुरुसगासे ॥३११॥

एवं विहरन्तः क्वाऽपि ग्रामे प्राप्ताः । ततः सञ्ज्ञिगृहे चैत्यवन्दनार्थमाचार्यो याति, स श्राद्धो गुरून्निमन्त्रयति, प्रायोग्यं गृह्णीत, गुरुभिर्यः संघाटकः संदिष्टः स गृह्णाति, अथ स यावन्नागच्छति तावत्तेन श्राद्धेनान्यः संघाटको दृष्टः, स तन्निर्बन्धे सति प्रायोग्यं गृह्णाति, अन्येभ्यः संघाटकेभ्यो निवेदयति नाऽत्र गम्यमिति, तत्प्रायोग्यं गुरुसमीपं नयति ॥३११॥ प्राग् यदुक्तं [1]'अविहरिअविही इमो होति' तदाह—

अविहरिअमसंदिट्ठो, चेइय पाहुडिअमेत्त गेण्हंति ।
पाउग्गपउरलंभे, णऽम्हे किं वा न भुंजंति ॥३१२॥

अविहृते ग्रामादौ सर्वेऽप्यसंदिष्टा भिक्षार्थं प्रविशन्ति, भिक्षामटन्तः श्राद्धगृहे चैत्यानि वन्दन्ते, यदि तत्र

१ ३०५ मगाथायाम् ॥स०॥

प्राभृतिकामात्रं लभ्यते ततो गृह्णन्त्येव, अथाऽऽचार्यप्रायोग्यं लभते, प्रचुरं वा लभते, तत इदमुच्यते—'णम्हे'त्ति न वयमाचार्यप्रायोग्यग्रहणे नियुक्ताः किन्त्वन्ये, एवमुक्ते श्राद्ध आह—किं भवद्भिर्नीतं न भुञ्जते आचार्याः ? एवं निर्बन्धे सति गृह्णन्ति ॥३१२॥ कियदित्याह—

गच्छस्स परीमाणं, णाउं घेत्तुं तओ णिवेयंति ।
गुरुसंघाडग इयरे, लद्धं णेथं गुरु समीवं (प्र.मा वच्चह गिण्ह गुरुजोगं) ॥३१३॥
एवइअं वा गिण्हह, पज्जत्तं वा णियत्तह य भंते ।
अणिवेइए अ गुरुणो, हिंडंताणं इमे दोसा ॥३१४॥
दरहिंडिअ वुड्ढाई, आगंतु समुद्दिसंति जंकिंचि ।
दव्वविरुद्धं च कयं, गुरूहिं जंकिंचि वा भुत्तं ॥३१५॥

गच्छस्य परिमाणं ज्ञात्वा लान्ति, गृहीत्वा निवेदयन्ति गुरुसंघाटकाय, यदुत—आचार्यप्रायोग्यं अन्येषां च गुड-घृतादि लब्धं प्रचुरं, इतरसंघाटकेभ्यो वा शेषं निवेदयन्ति, लब्धमात्रं तद् गुरुसमीपं नेतव्यं ॥३१५॥ तथा चाह—

एगागिसमुद्दिसगा, भुत्ता उ पहेणएण दिट्ठंतो ।
हिंडणदव्वविणासो, णिद्धं महुरं च पुव्वं तु (प्र.सन्निवित्ति दारं) ॥३१६॥

ये मण्डल्युपजीविनः पृथग् भुञ्जते, व्याध्याद्याक्रान्तानां तेषां भुक्तानां पश्चादानीतं [1]नोपयुज्यते अत्र 'पहेणएण' दिट्ठंतो "काले दिण्णस्स पहेणयस्स, अग्घो ण तीरए काउं। तस्सेव अथक्कपणामियस्स गिण्हंतया णत्थि" [2]तथाऽनाऽऽनयनेऽयमपरो दोषः, हिण्डतां कथञ्चित्प्रमादात्पात्रभङ्गाद् द्रव्यस्य क्षीरादेर्विनाशः स्यात्। 'णिद्धमहुराइ' आगमे यदुक्तं तत्कृतं न भवति। 'सण्णि'त्ति द्वारं गतम् ॥३१६॥ साधर्मिकद्वारमाह—

भत्तट्ठिअ आवस्सग, सोहेउं तो अइंति अवरण्हे।
अब्भुट्ठाणं दंडाइयाण गहणेक्कवयणेणं ॥३१७॥

भुक्त्वाऽऽवश्यकं च कायिकोच्चारादि शोधयित्वा कृत्वाऽपराह्णे आगच्छन्ति, येन वास्तव्यानां भिक्षाटनाद्याकुलत्वं न स्यात्। वास्तव्या अपि किं कुर्वन्तीत्याह 'अब्भु०' तेषां प्रविशतां तेऽभ्युत्थानादि कुर्वन्ति, दण्डकादि गृह्णन्ति, मुञ्चस्वेत्येकवचननोक्ताः पात्रकादीन् समर्पयन्ति। अथ न मुञ्चस्वेत्येकवचनेन ततो न गृह्यन्ते, मा भूत्प्रमाद इति ॥३१७॥

खुड्डल–विगट्ठ–तेणा, उण्हं अवरण्हि तेण उ पएवि।
पक्खित्तं मोत्तूणं, णिक्खिवमुक्खित्तमोहेणं ॥३१८॥

आगन्तुकान् प्रति वास्तव्यानामभ्युत्थानादि।

1 ०नोपकुरुते ॥ k ॥ ।S।    2 '०तथा...... दोष'पर्यन्तोऽशः 'S'प्रतौ नास्ति।

यद्यभिप्रेतो ग्रामः क्षुल्लकस्तत्र भिक्षा न भवति तदा प्रत्यूषस्येवाऽऽगच्छन्ति, अथवा विप्रकृष्टः। अपराह्णे आगच्छतां स्तेनभयं, उष्णं वा तेन कारणेन प्रत्यूषस्येवाऽऽगच्छन्ति। तस्माद् ग्रामात् प्रवृत्ताः साधुभोजनकाले प्राप्ताः साधर्मिकसमीपं नैषेधिकीं कृत्वा प्रविशन्ति, वास्तव्यास्तच्छ्रवणानन्तरं प्रक्षिप्तमास्यगतं कवलं भुक्त्वा, उत्क्षिप्तं भाजनगतं कवलं निक्षिपन्ति–मुञ्चन्ति, तेऽपि [1]प्राघूर्णका 'ओघेणं'ति संक्षेपेणाऽऽलोचनां प्रयच्छन्ति ततो भुञ्जते मण्डल्याम् ॥३१८॥ सा चेयं—

अप्पा मूलगुणेसुं, विराहणा अप्प उत्तरगुणेसुं।
अप्पा पासत्थाइसु, दाणग्गह संपओगोहा ॥३१९॥

अल्पशब्दो नकारार्थः, अल्पा [2]पार्श्वस्थादिषु दाने ग्रहणे वा विराधना। तैरेव पार्श्वस्थादिभिः संप्रयोगे संपर्के, अयमर्थो न तैः [ पार्श्वस्थादिभिः ] सह संपर्क आसीत्[3]। ओघतः संक्षेपत आलोचना दीयते ॥३१९॥ (इयमालोचना) तां दत्त्वा यदि न भुक्तास्ततो भुञ्जते, अथ भुक्तास्तदैवमाहुः—

भुंजह भुत्ता अम्हे, जो वा इच्छे अभुत्त सह भोज्जं।
सव्वं च तेसि दाउं, अण्णं गेण्हंति वत्थव्वा ॥३२०॥

१ ०आगन्तुका० ॥ k ॥० ।ऽ।   २ ०पार्श्वस्थादिषु दानग्रहणाखेव विराधना, सत्रयोगे ॥ k ॥० ॥ ऽ ॥

३ मूलगुणविषया उत्तरगुणविषया पार्श्वस्थादिना सह दानग्रहणाविषयां च विराधना, एव तः सह सम्पर्कोऽपि नासीदितिभावः। सं०।

भुञ्जीत यूयं भुक्ता वयं, यो वा साधुर्मोक्तुमिच्छति ततोऽस्तेनाऽभुक्तेन सह भोज्यं कुर्वन्ति, यदि पूर्वाऽऽनीतं भक्तं तेषामाऽऽगमनश्च पर्याप्यते ततः साध्वेव, अथ न, [1]ततः सर्वं प्राघूर्णिकेभ्यो दत्त्वा वास्तव्याः पर्यटन्ति ॥३२०॥ कति दिनानि तेभ्यो दीयत इत्याह—

तिण्णि दिणे पाहुण्णं, सव्वेसिं असइ बालवुड्ढाणं ।
जे तरुणा सग्गामे, वत्थव्वा बाहिं हिंडंति ३२१॥

त्रीणि दिनानि प्राघूर्णकं, सर्वेषामसति बालवृद्धानां कर्त्तव्यं, ये प्राघूर्णकास्तरुणास्ते स्वग्राम एव भिक्षामटन्ति वास्तव्यास्तु बहिर्ग्रामे हिण्डन्ति ॥३२१॥ अथ ते प्राघूर्णकाः केवला हिण्डितुं न जानन्ति, ततः—

संघाडगसंजोगो, आगंतुगभद्दएयरे बाहिं ।
आगंतुगा व बाहिं, वत्थव्वगभद्दए हिंडे ॥३२२॥ (दारं)

संघाटकसंयोगः क्रियते, एको वास्तव्योऽन्यः प्राघूर्णक इति कृत्वा भिक्षामटन्ति। अथाऽसौ ग्राम आगन्तुकानामेव भद्रकस्ततस्तत्र प्राघूर्णका अटन्ति, वास्तव्या बहिः, एवं वास्तव्यभद्रके ग्रामे विपरीतम् ॥३२२॥ वसतिद्वारमाह—

१ ०ततोऽस्तेषां सर्वंदत्वान्यन्मार्गयन्ति वास्तव्याः ॥ k ॥ ॥ s ॥



वित्थिणा[1] खुड्डलिआ,[2] पमाणजुत्ता य तिविह वसहीओ ।
पढम-बिइयासु ठाणे, तत्थ य दोसा इमे होंति ॥३२३॥

विस्तीर्णा[1] क्षुल्लिका[2] प्रमाणयुक्ता[3], त्रिधा वसतिः, प्रथमद्वितीययोरेते दोषाः ॥३२३॥

खरकम्मिअ-वाणियगा, कप्पडिअ-सरक्खगा य वंठा य ।
संमीसावासेण, दोसा य (प्र.उ) हवंति णेगविहा ॥३२४॥

विस्तीर्णायां वसतौ 'खर'० दण्डपाशिका रात्रिं भ्रान्त्वा स्वपन्ति, तथा वाणिज्यकाः, कार्पटिकाः, सरजस्का-भौताः, वंठाश्चागत्य स्वपन्ति । एभिः सह संमिश्रावासेऽनेकविधा एते दोषाः ॥३२४॥

आवासग-अहिकरणे, तदुभय-उच्चार-काइय-णिरोहे ।
संजय-आय-विराहण, संका तेणे णपुंसित्थी ॥३२५॥

आवश्यके-प्रतिक्रमणे क्रियमाणे सागारिकाणामग्रतः, त एव उद्घट्टकान् कुर्वन्ति, ततश्च केचिदसहमाना राटिं कुर्वन्ति । ततोऽधिकरणदोषः ॥ "आवासग[1] अधिकरणे[2] तदुभय[3] उच्चारकाइ[4] संजम[5] संकातेणे[6] नपुंसि[7]त्थी[8] ॥३२५॥ इमा द्वारगाथां प्रतिपदं व्याख्यानयति—



आवासयं करिंते, पवंचए झाणजोगवाघाओ ।
असहण अपरिणया वा, भायणभेओ य छकाया ॥३२६॥

आवश्यकं कुर्वतां साधूनां ते सागारिकाः प्रपञ्चयन्ति—उद्घट्टकान् कुर्वन्ति, ध्यानयोगव्याघातश्च[१]। [आवासय] द्वारम् १। 'अस०' असहनः—कोपनोऽपरिणतो वा साधुः सागारिकैः सह राटिं करोति, ततश्च भाजनभेदः (विनाशः) स्यात् षट्कायाश्च विराध्यन्ते । द्वारम् (अहिगरणदारं)२ ॥३२६॥

सुत्तत्थऽकरण णासो, करणे उड्डंचगाइ अहिगरणं ।
पासवणिअरणिरोहे, गेलण्णं दिट्ठि उड्डाहो ॥३२७॥

सूत्रार्थपौरुष्यकरणे नाशो—विस्मरणा तयोरेव, करणे चोद्घट्टकान् कुर्वन्ति, ततोऽधिकरणदोषः । द्वारं ३ [तदुभयदारं]। 'पास०' प्रस्रवणेतर[२]योर्निरोधे ग्लानत्वं स्यात् , व्युत्सृजतो दृष्टे उड्डा(ड्डा)हः—उपघातः प्रवचनस्य स्यात् द्वारम् ४, [उच्चारकाइअनिरोहदारं] ॥३२७॥

मा दिच्छिहिंति तो, अप्पडिलिहिए (थंडिल्ले) दूर गंतु वोसिरति ।
संजमआयविराहण, गहणं आरक्खितेणेहिं ॥३२८॥

१ ०श्लथतामापद्यते चेतः० ॥k॥ २ इतरपदेन पुरीषपदग्रहणम् ॥सं०॥

सागारिका मां मा द्राक्षुः इत्यप्रतिलेखिते स्थण्डिले दूरे गत्वा व्युत्सृजति। ततो [1]द्विधा विराधना, ग्रहणमारक्षिकाः स्तेना वा कुर्वन्ति। द्वारम् ५ [संजमदारं] ॥३२८॥

ओणव पमज्जमाणं, दट्ठुं तेणेत्ति आहणे कोइ।
सागारिअ संघट्टण, अपुमेत्थी गेण्ह साहइ वा ॥३२९॥

[2]अवनतं प्रमार्जयन्तं दृष्ट्वा सागारिकः स्तेन इति मत्वा हन्ति, द्वारम् ६ ['संकातेणे' दारं] सागारिकः संस्पर्शे सति विबुद्धः सन्नपुंसकोऽयमिति, गृह्णाति, [नपुंसयदारं]७, अथ स्त्री स्पृष्टा ततः सा शङ्कतेऽयं मम समीपे आगच्छति, ततः 'सा' कथयति निजभर्तुः [इत्थीदारं]८ ॥३२९॥

ओरालसरीरं वा, इत्थिणपुंसा बलावि गेण्हंति।
संबाहाए ठाणे, णिंते आवडणपडणाई ॥३३०॥

औदारिकशरीरं वा तं साधुं दृष्ट्वा दिवा रात्रौ स्त्री नपुंसकं वा बलाद् गृह्णाति, औदारिकं चङ्गकं, एते विस्तीर्णवसतिदोषाः। अथ क्षुल्लिकावसतेर्दोषानाह—'संबा०' संकटायां वसतौ स्थाने [—अवस्थाने—वासे] सति साधौ निर्गच्छति प्रस्खलनपतनादयो दोषाः स्युः ॥३३०॥

१ संयमात्माभिधाना ॥सं०॥ २ ०स हि ता रात्रावुत्थितः सन्नवनतः प्रमार्जयन् निर्गच्छति ततोऽवनतं० ॥k॥

तेणोत्ति मण्णमाणो, इमो वि तेणोत्ति आवडइ जुद्धं ।
संजम-आय-विराहण-भायण-भेयाइणो दोसा ॥३३१॥

यस्योपरि प्रस्खलितः स तं स्तेनकमिति मन्यमानः सन् आपतति युद्धं, ततश्च संयमात्मविराधना, भाजनभेदादयश्च दोषाः स्यु ॥३३१॥ तस्माद् वसतिः प्रमाणयुक्ता ग्राह्या, एतदाह—

तम्हा पमाणजुत्ता, एक्केक्कस्स उ ति-हत्थसंथारो ।
भायणसंथारंतर जह, वीसं अंगुला हुंति ॥३३२॥

प्रमाणोपेतवसतावेकैकस्य साधोर्वाहल्यतस्त्रिहस्तप्रमाणः संस्तारकः कार्यः, तुशब्दस्य विशेषणार्थत्वात् संस्तारकोऽत्र भूमिरूप इति, तत्र हस्तत्रये ऊर्णामयः संस्तारकश्चतुरङ्गुलाधिकहस्तप्रमाणः भाजनसंस्तारकान्तराले यथा विंशतिरङ्गुलानि स्युस्तथा कर्त्तव्यम् ॥३३२॥ किं पुनः कारणम्—

मज्जारमूसगाई य, वारे णवि अ जाणुघट्टणया ।
दो हत्था य अबाहा, णियमा साहुस्स साहूओ ॥३३३॥

मार्जारमूषकादीन् पात्रकेषु लगतो वारयेत्, कस्मादासन्नतराणि न क्रियन्ते? इति चेद्—उच्यते, तावति प्रदेशे तिष्ठति पात्रे जानुकृता घट्टना न स्यात्, द्वौ हस्तावबाधान्तरालं साधोः साधोश्च स्यात्, त्रिहस्तप्रमाणः संस्तारको, यथा

प्रमाणयुक्त-
वसतौ
संस्तारक-
मानम् ।

ऊर्णामयः संस्तारकः २८ अङ्गुलप्रमाणः, संस्तारभाजनयोरन्तरालं २० अङ्गुलानि, भाजनानि हस्तप्रमाणे प्रोञ्छने स्थाप्यन्ते, साधोः साधोरन्तरं द्वौ हस्तौ, द्वयोरन्तरं शून्यं महद् दृष्ट्वा बलात् कश्चित् स्वपिति, अतोऽन्यथा व्याख्या, '१तम्हं'ति हस्तं साधू रुणद्धि, संस्तारकात् पात्रकाणि विंशत्यङ्गुलानि, पात्रकमष्टाङ्गुलानि रुणद्धि, पात्राद्विंशत्यङ्गुलानि मुक्त्वाऽन्यसाधुः स्वपिति, इत्थमपि द्वौ हस्तौ द्वयोरन्तराले जातौ, यथा स्थापना ॥२४॥२०।८।२०॥३३३॥

भुत्ताभुत्तसमुत्था, भंडणदोसा य वज्जिआ एवं ।
सीसंतेण व कुड्डं तु, हत्थं मोत्तूण ठायंति ॥३३४॥

द्विहस्तान्तरालेन मुच्यमानेन भुक्तभोगस्य आसन्नस्य स्वपतः, अन्यसाधुसंस्पर्शात् पूर्वक्रीडास्मृतिः, अभुक्तभोगस्याऽपि सुकुमारसंस्पर्शेन स्त्रियं प्रति कौतुकं स्यात्, 'भंडणं' कलहः परस्परं हस्तस्पर्शजनितः, अन्तराले द्विहस्तप्रमाणे मुच्यमाने एते दोषास्त्यक्ताः स्युः । 'सीस०' शिरो यत्र कुड्यां ततो हस्तमात्रं मुक्त्वा पादान्ते गमनमार्गे हस्तं च'ठा०' स्वपन्ति । 'तिहत्थ'पाठे तु कुड्यात् हस्तं मुक्त्वा, पात्रकाणि १ हस्तं, ततः १ हस्तं विमुच्य स्वपन्ति ॥३३४॥

पुव्वुद्दिट्ठो उ विही, इहवि वसंताण होइ सो चेव ।
आसज्ज तिण्णि वारे, णिसण्ण आउंटए सेसा ॥३३५॥

संस्तारकयोरन्तरं तेन दोषवर्जनश्च ।

॥१५२॥

१ ३३३तमा गाथा बोद्धव्या ॥सं०॥ २८अङ्गुलमिते उर्णामयसंस्तारके साधुशरीररुद्धो भागः २४अङ्गुलप्रमाणः ततः संस्तारकशेष–चतुरङ्गुलयुत२०अङ्गुलात्परतोऽष्टाङ्गुलप्रदेशे पात्रकाणि ततः २०अङ्गुलादन्यो साधुरेवं हस्तत्रयमिते संस्तारको बोध्यः ॥सं०॥

इहाऽपि वसतां स्वापकाले पूर्वोद्दिष्टः 'पोरिसि आपुच्छे'त्यादिकः। किन्त्वयं विशेषः 'आसज्ज'त्ति करोति संस्तारे निषण्णः सन्, शेषास्तु साधवः पादानाकुञ्चयन्ति ॥३३५॥ पुनरसौ कायिक्यर्थं व्रजन् किं करोतीत्याह—

आवास्सअमासज्जं, णीइ पमज्जंतु जाव उच्छण्णं ।
सागारिय तेणुब्भामए य संका तउ परेणं ॥३३६॥

आवश्यकीं आसज्जं च कुर्वन् पुनः २ प्रमार्जयन् यावच्छन्नमभ्यन्तरं तावन्निर्गच्छति, बहिर्न प्रमार्जयेत् । सागारिकाणां स्तेन—'उब्भा०' पारदारिकशङ्कोपजायते, अतस्तत्परेण आछन्नाद् बाह्यतो न प्रमार्जयति, प्रमाणयुक्तवसतिविधिरुक्तः ॥३३६॥

णत्थि उ पमाणजुत्ता, खुड्डलिया चेव वसतिजयणाए ।
पुर हत्थ पच्छ पाए, पमज्ज जयणाए निग्गमणं ॥३३७॥

प्रमाणयुक्तवसत्यभावे लघ्व्यां वसतौ वसतः यतनेयं, पुरतोऽग्रतो हस्तेन परामृश्य पश्चात् पादौ न्यस्य यतनया निर्गच्छति, कायिक्याद्यर्थं [1]गमनाऽऽगमनविधिरुक्तः ॥३३७॥ स्वपनविधिमाह—

उस्सीसभायणाइं, मज्झे विसमे अहाकडा उवरिं ।
ओवग्गहिओ दोरो, तेण य वेहासिलंबणया ॥३३८॥

१ ०गमनविधिरुक्तः ॥k॥

उपशीर्षकाणां मध्ये भाजनानि क्रियन्ते, विषमायां गर्तोपेतायां भुवि पात्रकाणि पुञ्जीक्रियन्ते, 'अहागडा उवरि"ति प्रासुकानि—अल्पकर्माणि यानि तान्यन्येषां पात्रकाणामुपरि क्रियन्ते मङ्गलार्थम्, [2]स्थापनाऽभावे भुवि औपग्रहिको यो दवरकस्तेन [3]विहायसि लम्ब्यन्ते ॥३३८॥

खुड्डलियाए असई, विच्छिण्णाए उ मालणा भूमी ।
बिलधम्मो चारभडा, साहरणेगंतकडपोत्ती ॥३३९॥

लघुवसत्यभावे विस्तीर्णायां वसतौ स्थातव्यम्, भूर्माल्यते—व्याप्यते पुष्पप्रकरसदृशैः स्वपद्भिः, अवलगकादय आगत्येदं भणन्ति—बिलधर्मो—बिले यावन्तो मान्ति तावन्तस्तिष्ठन्ति । ततः साधव उपकरणं संहृत्यैकान्ते तिष्ठन्ति, कटमन्तराले ददति, तदभावे 'पुत्ति" चिलिमिनीं' ददति ॥३३९॥

असई य चिलिमिलीए, भए व पच्छण्ण भूइए लक्खे ।
आहारा णीहारो, णिग्गमण-पवेस वज्जेह ॥३४०॥

चिलिमिन्यभावे हरणभये वा न ददति, प्रच्छन्नप्रदेशे तिष्ठन्ति स च प्रदेशो भूत्या लक्ष्यते [4]चिह्नयते, इदं तेऽभिधीयन्ते—आहारादवश्यं नीहारः स्यादतो निर्गमप्रवेशौ वर्ज्यौ' ॥३४०॥ साधुभिरिदं कर्तव्यम्—

१ ॰अल्पपरिकर्माणि॰ ॥D॥ २ ॰अथातिसंकटत्वाद् भूमौ स्थानाऽभावे॰ ॥k॥ ३ विहायसि कीलकादौ॰ ॥k॥
४ चिह्नयतेऽवौटोऽयं प्रदेश इति कथ्यते॰ ॥k॥

पिंडेण सुत्तकरणं, आसज्ज णिसीहियं च ण करिंति ।
कासण ण पमज्जणया, ण य हत्थो जयण वेरत्ति ॥३४१॥ (वसहित्ति दारं)

पिण्डेन—समुदायेन सूत्रपौरुषीकरणं, मा कश्चित्पदं वाक्यं श्रुत्वा हसति, आसज्जादि न करोति, काशनं—खाट्करणं करोति, न च प्रमार्जयति । न हस्तेन परामृश्य निर्गच्छति, येन वेरत्तियं कालं गृह्णाति । उक्तं वसतिद्वारम् ॥३४१॥ स्थानस्थितद्वारमुच्यते—

पत्ताण खेत्त जयणा, काऊणावस्सयं ततो ठवणा ।
पडणीय-पत्त-मामग—भद्दग-सद्धे य अचियत्ते ॥३४२॥

अभिमतं क्षेत्रं प्राप्तानां या यतना सा वाच्या, कृत्वाऽऽवश्यकं—प्रतिक्रमणं, स्थापना क्रियते केषाञ्चित् कुलानां, तान्याह—प्रत्यनीकः—शासनादेः, प्रान्तोऽदानशीलः, [1]मा मम गृहं श्रमणा आगच्छन्तु, भद्रकश्राद्धौ प्रसिद्धौ, 'अचियत्ते' साध्वागमेऽप्रीतिचिन्तकः, एतेषां कुलानां यो विभागः प्रतिषेधाऽप्रतिषेधरूपः स [2]स्थापना ॥३४२॥ अधुनेमां द्वारगाथां प्रतिपदमाह—



१ 'मा मे गृहं श्रमणा यान्तु' इत्यभिप्रायवान् मामकः ॥S॥ २ ०स्यात्स्थापनेत्युच्यते० ॥k॥

बाहिरगामे वुच्छा, उज्जाणे ठाण-वसहि-पडिलेहा ।
इहरा उ गहिअभंडा, वसहीवाघाय उड्डाहो ॥३४३॥

एवं ते बाह्यग्रामे पर्युषिताः सन्तोऽभिमतं क्षेत्रं प्राप्योद्याने तिष्ठन्ति, पुनर्वसतिप्रत्युपेक्षका प्रेष्यन्ते, इतरथा गृहीतभाण्डा गृहीतोपकरणा वसतिव्याघाते सति निवर्त्तन्ते [३]तदोड्डाहः ॥३४३॥ तत्र च प्रविशतां शकुनाऽपशकुनानाह—

मइल कुचेले अब्भंगिएल्लए साण खुज्ज वडभे या ।
एए उ अप्पसत्था, हवंति खित्ताउ (प्र.खेत्तं अयं) णिंताणं ॥३४४॥
णारी पीवरगब्भा, वड्डकुमारी य कट्ठभारो य ।
कासायवत्थ कुच्चंधरा य कज्जं ण साहेंति ॥३४५॥
चक्कयरंमि भमाडो, भुक्खा मारो य पंडुरंगंमि ।
तच्चणिरुहिरपडणं, बोडियमसिए धुवं मरणं ॥३४६॥
जंबू अ चास मऊरे, भारद्दाए तहेव णउले अ ।
दंसणमेव पसत्थं, पयाहिणे सव्वसंपत्ती ॥३४७॥

३ ०ड्डाह उपघातो भवति० ॥k॥

णंदीतूरं पुण्णस्स, दंसणं संख पडहसद्दो य ।
भिंगार-छत्त चामर-धयप्पडागा पसत्थाई ॥३४८॥
समणं संजयं दंतं, सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च, सिद्धमत्थं विआगरे ॥३४९॥
तम्हा पडिलेहिअ-दीवियंमि पुव्वगय असइ सारविए ।
फड्डयफड्डपवेसो, कहणा ण य उट्ठ इयरेसिं ॥३५०॥

तस्मात् प्रत्युपेक्ष्य प्रवेष्टव्यं, दीपिते—कथिते शय्यातरायाचार्या आगताः, पूर्वगतप्रत्युपेक्षिकप्रमार्जितायां[1] वसतौ प्रवेष्टव्यम्, फड्डकैः २ प्रवेशः कार्यः । धर्मकथालब्धिसंपन्नो मुनिर्वसतेर्बहिर्गत्वा शय्यातराय धर्मं कथयति । 'न य उट्ठ०' न—चाऽसौ धर्मकथी 'इय०' ज्येष्ठार्याणामभ्युत्थानं करोति ॥३५०॥ आह—आचार्याय करोति न वा ?—आचार्य आह—आचार्याय करोत्येव, अकरण एते दोषाः—

आयरिय-अणुट्ठाणे, ओहावण बाहिरा यऽदक्खिण्णा ।
साहणय वंदणिज्जा, अणालवंतेऽवि आलावो ॥३५१॥

१ तदभावेऽन्यसाधुभिः प्रमार्जितायाः ॥k॥

आचार्यायाऽनुत्थाने 'ओ०' मलना स्यात्, लोकाचारस्यापि बाह्या एते,[1] दाक्षिण्यमप्येषामाचार्यं प्रति नास्ति, इति चिन्तयति शय्यातरः, धर्मकथिनाऽऽचार्याय कथ्यं वसतिदाताऽयम्। शय्यातरं ब्रूते—वन्दनीया आचार्याः, तस्मिन्ननालपत्याचार्येणाऽऽलापकः कार्यः ॥३५१॥ नालापे एते दोषाः—

(थद्धा०) वुड्ढा णिरोवयारा, अग्गहणमलोगजत्तवोच्छेओ।
तम्हा खलु आलवणं, सयमेव उ तत्थ धम्मकहा ॥३५२॥

निरुपका[चा]रा एते मामपि न बहु मन्यन्ते, 'अग्गहण'त्ति नाऽऽदरोऽस्य मां प्रति, लोकयात्राबाह्याः, व्यवच्छेदो वसतेरन्यद्रव्यस्य वा। तस्मादालाप्यः, स्वयमेवाचार्येण धर्मः कथ्यः ॥३५२॥

वसहिफलं धम्मकहा, कहण अलद्धीउ सीस वावारे।
पच्छा अइंति वसहिं, तत्थ य भुज्जो इमा जयणा ॥३५३॥

धर्मं कथयन् वसतेः फलं कथयति आचार्यः, लब्ध्यभावे शिष्यं व्यापारयति धर्मकथायां, ततः प्रविशन्त्याचार्याः, तत्र भूय इमा यतना ॥३५३॥

पडिलेहण संथारग, आयरिए तिण्णि सेस उ (प्र.ग) कमेण।
विंटिअ उक्खेवणया, पविसइ ताहे य धम्मकही ॥३५४॥



१ ०एते, पञ्चाङ्गुलीनामप्येका ज्येष्ठा भवति, दाक्षि० ॥k॥

प्रविष्टाः सन्तः प्रतिलेखनां पात्रकादीनां कुर्वन्ति, संस्तारग्रहणं च क्रियते । आचार्यस्य त्रयः, शेषाणां रत्नाधिकक्रमेण । साधवो विण्टीनामुत्क्षेपणं कुर्वन्ति भूविभजनाय, अत्रान्तरे धर्मकथी तदर्थं प्रविशति ॥३५४॥

उच्चारे पासवणे, लाउय णिल्लेवणे य अच्छणए ।

पुव्वट्ठिय तेसि कहे,-ऽकहिए आयरण वोच्छेओ ॥३५५॥

क्षेत्रप्रत्युपेक्षकास्तत्रोच्चारभुवं ग्लानाद्यर्थं, कायिकाभूमिं, [1]तुम्बकत्रेपणभुवं, निर्लेपनस्थानं 'अच्छणए'त्ति स्वाध्यायस्थानं, तेषां साधूनां कथयन्ति । अकथिते स्थाने कायिकादेराचरणे व्यवच्छेदस्तद्द्रव्यान्यद्रव्ययोः ॥३५५॥

भत्तट्ठिआ व खवगा, अमंगलं चोयए जिणाहरणं ।

जइ खमगा वंदंता, दायंतियरे विहिं वोच्छं ॥४५६॥

ते क्षेत्रं प्रविशन्तः कदाचिद्भक्तार्थिन उपोषिता वा स्युः, '[2]चो॰'अमङ्गलमुपोषितानां क्षेत्रे प्रविशतां । तत्र जिनादाहरणं ॥ जिना अपि दीक्षायाः काले उपवसन्ति । यदि क्षपकाः श्रमणाः तदा श्रावकगृहे चैत्यानि वन्दमानाः स्थापनाकुलानि दर्शयन्ति आगन्तुकेभ्यः, 'इय॰' इतरेषु भक्तार्थिषु यो विधिस्तमाह ॥३'१६॥

सव्वे दट्ठुं उग्गाहिएण, ओयरिअ भयं समुप्पज्जे ।

तम्हा ति दु एगो वा, उग्गाहिअ चेइए वंदे ॥३५७॥

१ तुम्बकत्रेपणभुवं निर्लेपस्थाने = पात्रप्रक्षालनस्य अवस्थानमिति भावः ॥सं०॥ २ ०नोदक आह-आह॰ ॥S॥

ते भक्तार्थिनः श्राद्धकुले चैत्यवन्दनार्थं व्रजन्तः सर्वे तदुद्ग्राहितपात्रका यान्ति, ततस्तान् दृष्ट्वा औदरिका एते इति श्राद्धः चिन्तयति, भयं चोत्पद्यते, कथमेतावतां दास्यामीति, तस्मादेको द्वौ त्रयो वोद्ग्राहितपात्रका आचार्येण सह प्रविशन्ति चैत्यवन्दनार्थम्, ॥३५७॥

गृहचैत्ये गच्छताऽपात्रके श्रद्धाभङ्गादि दोषाः ।

सद्धाभंगोऽणुग्गाहियंमि, (प्र.ग्गाहियेण) ठवणाइया य दोसा उ ।
घरचेइअ आयरिए, कइवयगमणं च गहणं च ॥३५८॥

अथानुद्ग्राहितपात्रका एव प्रविशन्ति, दातव्ये मतिर्जाता श्राद्धस्य, ततः पात्रकाभावेऽग्रहणात् [श्रद्धाभङ्गाःस्याद् ।ऽ।] पात्रं गृहीत्वाऽऽगच्छामीति भणने स्थापनादिका दोषाः, आदिशब्दात्संस्कारमपि कुर्वन्ति । तस्मात् कतिभिः साधुभिः सह गन्तव्यं, ग्रहणं घृतादेः कार्यम् ॥३५८॥ 'पत्ताण खित्तजयणं'ति [गा. ३४३] व्याख्यातम् ॥ 'काऊणावस्सयं तओ ठवण'त्ति आह—



खेत्तंमि अपुव्वंमी, (प्र.मिय) तिट्ठाणट्ठा कहिंति दाणाइं ।
असई अ चेइयाणं, हिंडंता चेव दायंति ॥३५९॥

अपूर्वक्षेत्रे-त्रिस्थान-कथनम् ।

अपूर्वे क्षेत्रे त्रिषु स्थानेषु कथयन्ति, श्राद्धगृहचैत्यवन्दने [१] भिक्षाटने [२] आवश्यकान्ते [३] दानादिकुलानि कथयन्ति 'अस०' चैत्याभावे भिक्षामेव हिण्डन्तः कथयन्ति ॥३५९॥ तान्याह—

दाणे अभिगमसड्ढे, सम्मत्ते खलु तहेव मिच्छत्ते ।
मामाए अचियत्ते, कुलाइं दायंति गीयत्था ॥३६०॥

दानश्राद्धकान्, [१]अभिनवसम्यक्त्व–श्राद्ध–मिथ्यादृष्टिकुलानि कथयन्ति ॥३६०॥ चैत्यानि चेन्न सन्ति, उपोषितत्वाद् भिक्षां न पर्यटन्ति च [२]ततः–

काउस्सग्गामंतण, पुच्छणया अकहिएगयरदोसा ।
ठवणकुलाण य ठवणा, पविसइ गीयत्थसंघाडो ॥३६१॥

आवश्यककायोत्सर्गस्यान्ते आचार्य आमन्त्र्य क्षेत्रप्रत्युपेक्षकान् पृच्छति, कानि स्थापनाकुलानि ? कानि चेतराणि ? ते कथयन्ति, तैरकथितेषु कुलेषु एकतरो दोषः संयमात्मविराधनाजनितः, कथिते स्थापनादिकुलानां स्थापना क्रियते, तेषु गीतार्थसंघाटकः प्रविशति ॥३६१॥

गच्छंमि एस कप्पो, वासावासे तहेव उडुबद्धे ।
गामागरणिगमेसुं, अइसेसी ठावए सड्ढो ॥३६२॥

१ ०अभि० = प्रतिपन्नाणुव्रतानि श्रावककुलानि, 'सम्मत्ते' अविरतिसम्यग्दृष्टिकुलानि ॥सं०॥ २ ०ततः प्रतिक्रमणान्ते क्षेत्रप्रत्युपेक्षकाः कथयन्त्याचार्याय । एतदेवाह– ॥k॥

गच्छे 'एष कल्पः' एष विधिः, स्थापनाकुलानि स्थापयेद्वर्षाकाले शीतोष्णकालयोश्च, ग्रामः प्रसिद्धः, आकरः— सुवर्णादेः, निगमो वाणिजकप्रायः सन्निवेशः, एषु स्थापयेत् 'अइ०' स्फीतानि श्रद्धावन्ति कुलानि ॥३६२॥

किं कारणं चमढणा, दव्वखओ उग्गमोऽवि अ ण सुज्झे ।
गच्छंमि (प्र.च्छे य) णिययकज्जे, आयरियगिलाणपाहुणए ॥३६३॥

[1]अन्यान्यसाधुप्रवेशे 'चम०' कदर्थ्यन्ते, प्रायोग्यद्रव्याणां क्षयः स्यात्, उद्गमस्तत्र न शुद्ध्यति, 'गच्छे०' नियतं कार्यं योग्येन आचार्यग्लानप्राघूर्णकार्थं, द्वारगाथेयं ॥३६३॥ 'चमढण'त्ति व्याख्यायते—

'चमढण'त्ति पदस्य व्याख्या ।

पुव्विपि वीरसुणीआ, छिक्का छिक्का पहावए तुरिअं ।
सा चमढणाए सिण्णा, (प्र.ग्गा) संतंपि ण इच्छए घेत्तुं ॥३६४॥

पूर्वमपि वीरशुनी छीत्कृता २ [2]प्रधावति अलीकचमढणया 'सिन्न'त्ति श्रान्ता सदपि मयूरादि नेच्छति ग्रहीतुम् ॥३६४॥

एवं सड्ढकुलाइं, चमढिज्जंताइं ताइं (प्र.अण्णम)अण्णेहिं ।
णिच्छंति किंचि दाउं, संतंपि तयं गिलाणस्स ॥३६५॥

१ ०किं कारण तानि स्थाप्यन्ते ? यतोऽन्योन्यसाधुप्रवेशे चमढ्यन्ते-कदर्थ्यन्ते ततः प्रायोग्य० ॥k॥
२ ०प्रधावति मयूराद्यर्थं, यदा तु- मयूरादि विनाऽपि छीकृता मयूरादि न पश्यति प्रधाविता० तदालीक० ॥k॥

स्पष्टा, ॥३६५॥ 'दव्वक्खय'त्ति आह—

दव्वक्खएण पंतो, ईत्थिं घाएज्ज कीस ते दिण्णं ? ।
भद्दो हट्ठपहट्ठो, करेज्ज अण्णंपि समणट्ठा (प्र.साहूणं) ॥३६६॥

साधूनां दीयमानेन द्रव्येण प्रान्तो गृहपतिस्ततः स्त्रियं घातयेत्, कस्मात् त्वया दत्तं ? 'उग्गमो वि य न सुज्झे' त्ति (गा. ३६३) आह— 'भद्दो०' भद्रकोऽन्यदपि कारयेत् साध्वर्थम् ॥३६६॥ 'गच्छंमि'त्ति आह—

[1]आयरिअणुकंपयाए, गच्छो अणुकंपिओ महाभागो ।
गच्छाणुकंपयाए, अव्वोच्छित्ती कया तित्थे ॥३६७॥

स्पष्टा ॥३६७॥ 'गिलाणे'त्ति आह—

परिहीणं तं दव्वं, चमढिज्जंतं तु अण्णमण्णेहिं ।
परिहीणंमि य (प्र.तु) दव्वे, नत्थि गिलाणस्स णं जोग्गं ॥३६८॥

स्पष्टा ॥३६८॥ तथा दृष्टान्तः—

'दव्वक्खय'
'गच्छम्मि'
इति पदद्वयस्य
व्याख्या।



१ ३६७तमा गाथा नास्ति k संज्ञकप्रतौ ॥

[1]चत्ता होंति गिलाणा, आयरिया बालवुड्ढसेहा य ।
खमगा पाहुणगा विय, (प्र.ह) मज्जायमइक्कमंतेणं ॥३६९॥
सारक्खिया गिलाणा, आयरिया बालवुड्ढसेहा य ।
खमगा पाहुणगा विय, मज्जायं ठावयंतेण ॥३७०॥
जड्डे महिसे चारी, आसे गोणे अ तेसि जावसिआ ।
एएसिं पडिवक्खे, चत्तारि उ संजया हुंति ॥३७१॥

जड्डो—हस्ती तेषां 'जावसिया' घासवाहिका अनुरूपां चारीमानयन्ति । एतेषां जड्डादीनां प्रतिरूपः—अनुरूपः, पक्षः प्रतिपक्षः—तुल्यपक्ष इत्यर्थः । तत्र चत्वारः संयताः प्राघूर्णकाः स्युः ॥३७१॥ एतेषां भोजनमाह—

जड्डो जं वा तं वा, सुकुमारं महिसिओ, महुरमाऽऽसो ।
गोणो सुगंधदव्वं, इच्छइ एमेव साहूवि ॥३७२॥

स्पष्टा ॥ इच्छत्येवमेव साधुरपि यद्योग्यं तत् सर्वं स्थापनाकुलेभ्य आनीयते ॥३७२॥ एवमुक्ते सत्याह परः—यस्मात् प्राघूर्णकाभावे न प्रवेष्टव्यं ? आहाऽऽचार्यः—



१ ३६९ चत्ता० ।३७०। सार० इदं गाथायुगलं k सञ्ज्ञकप्रतौ नास्ति ॥सं०॥

एवं च पुणो ठविए, अप्पविसंते भवे इमे दोसा ।
वीसरण संजयाणं, विसुक्खगोणी अ आरामो ॥३७३॥

एवं च पुनः स्थापिते सर्वथा यदि न प्रवेशस्तदा श्राद्धानां साधूनां विस्मरणं स्यात् । तत्र विशुष्कगोण्या—गवा, आरामेण [च] दृष्टान्तः ॥३७३॥ योऽसौ आचार्यादीनां वैयावृत्त्यकरः श्राद्धकुलेषु प्रविशति [स] एभि-[1]र्दोषैर्विमुक्तो नेयः—

अलसं घसिरं सुविरं, खमगं कोहमाणमायलोहिल्लं ।
कोऊहलपडिबद्धं, वेयावच्चं ण कारिज्जा ॥३७४॥

'घसिर' बहुभक्षकं, 'सु०' स्वापशीलं । कौतूहलप्रतिबद्धं वैयावृत्त्यं न कारयेत् ॥३७४॥

एयद्दोसविमुक्कं, कडयोगिं णायसीलमायारं ।
गुरुभत्तिसंविणीयं (प्र.गुरुभत्तिमं विणीयं) वेयावच्चं तु कारेज्जा ॥३७५॥

[2]एतद्दोषविमुक्तं कृतयोगिनं—गीतार्थं, ज्ञातशीलाचारं गुरौ भक्तिः—भावप्रतिबन्धः, विनीतो बाह्योपचारेण, तं वैयावृत्त्यं कारयेत् ॥३७५॥

१ ०विमुक्तो नियोक्तव्यः ॥k॥
२ ०एतद्दोषविमुक्तं, कृतो योगो—घटना ज्ञानदर्शनचारित्रै सह येन स कृतयोगी—गीतार्थं तं ज्ञात० ॥k॥

साहंति अ पिअधम्मा, एसणदोसे अभिग्गहविसेसे ।
एवं तु विहिग्गहणे, दव्वं वड्ढंति गीयत्था ॥३७६॥

ते वैयावृत्त्यकराः श्राद्धकुलेषु प्रविष्टाः कथयन्त्येषणादोषान् शङ्कितादीन् अभिग्रहविशेषांश्च साधुसम्बन्धिनः, एवं विधिग्रहणे द्रव्यं-घृतादि [1]वर्द्धयन्ति गीतार्थाः ॥३७६॥ गीतार्थेन भिक्षामटतैतानि वस्तूनि ज्ञेयानि—

दव्वप्पमाणगणणा, खारिअफोडिअ तहेव अद्धा य ।
संविग्ग एगठाणे, अणेगसाहूसु पण्णरस ॥३७७॥ (दारं)

द्रव्यं गोधूमादि तद्विज्ञेयं, कियत्सूपकारशालायां प्रविशति, 'गण०' एतावद्-घृतादीनि प्रविशन्ति, 'खा०' सलवणानि कानि व्यञ्जनानि, 'फो०' राईघूमितानि कति, एतानि ज्ञात्वा यथानुरूपं गृह्णाति, 'अद्धा०' किमत्र प्रहरवेला, अथ प्रहरद्वये एतद्विज्ञेयं, संविग्नो मोक्षार्थी एकः संघाटकः प्रविशति, अनेकेषु प्रविशत्सु पञ्चदश दोषाः स्युराधाकर्मादिकाः ॥३७७॥

संघाडेगो ठवणा-कुलेसु सेसेसु बालवुड्ढाई ।
तरुणा बाहिरगामे, वुच्छा दिट्ठंतऽगारीए ॥३७८॥

१ एवं विधिना स्थापनाकुलेषु ग्रहणे श्रद्धा वर्धयन्तो गीतार्थाः द्रव्यमपि-घृतादिकमपि वस्तुतो वर्धयन्ति इति भावः ॥स०॥

संघाटक एकः स्थापनाकुलेषु, शेषेषु बालवृद्धाश्च [1]प्रविशन्ति तरुणा बहिर्ग्रामे हिण्डन्ति, नोदकः पृच्छति—गच्छयोग्यक्षेत्रे प्रतिलेखिते तरुणा बहिर्हिण्डन्ति नेदं युक्तं ? गुरुराह—दृष्टान्तोऽगार्यां अग्रतो वक्ष्यति ॥३७८॥ इयमपरा द्वारगाथा—

पुच्छा गिहिणो चिंता, दिट्ठंतो तत्थ खुज्जबोरीए ।
आपुच्छिऊण गमणं, दोसा य इमे अणापुच्छे ॥३७९॥

चो०—ननु तस्याऽगार्यां घृतादिसंग्रहः कर्तुं युक्तः प्राघूर्णिकोपचारार्थं, साधूनां पुनः स्थापनाकुलरक्षणे न किञ्चित्कार्यं, यावन्मात्राहारः पाकः क्रियते, तत्सर्वं प्रतिदिनमुपयुज्यते न तु तानि कुलानि संचयित्वा प्राघूर्णकाऽऽगमे एकमुखेन प्रयच्छन्ति ? एवमुक्ते सत्याह आचार्यः—गृहिणश्चिन्ता स्यादेते प्राघूर्णकागमे आगच्छन्ति, ततश्चैतेभ्यो यत्नेन देयं एवमादरपूर्विकां चिन्तां करोति, यच्चोक्तं—तरुणा बहिः किमिति हिण्डन्ते ? तत्र कुब्जबदर्यां दृष्टान्तो वक्ष्यमाणः[2] आचार्यानापृच्छ्य गम्यं बहिर्ग्रामादौ । अनापृच्छायामेते दोषाः वक्ष्यमाणाः ॥३७९॥ द्वारगाथेयं—इमां व्याख्यानयति ॥ यदुक्तं—'दृष्टान्तोऽगार्याः' स उच्यते—

परिसिअभत्तगदाणे, णेहादवहरइ थोव-थोवं तु ।
पाहुण-वियालआगम, विसण्ण आसासणा-दाणं ॥३८०॥

१ ० शन्ति, आदिशब्दात्क्षरकाश्च० ॥k॥ २ ३८०तमगाथायाम् ॥सं०॥

परिमितभक्तप्रदाने सागारी स्नेहादि स्तोकम् २ [1]अवहरति, प्राघूर्णकस्य विकालवेलाऽऽगमे भर्त्ता विषण्णः स्त्रियाऽऽश्वासितः, 'दाण'त्ति तया स्त्रिया भक्तदानं दत्तं प्राघूर्णकाय ॥३८०॥

एवं पीइविवुड्ढी, विवरीयण्णेण होइ दिट्ठंतो ।
लोउत्तरे विसेसो, असंचया जेण समणा उ ॥३८१॥

एवं प्रीतिवृद्धिर्द्वयोरपि जाता । विपरीतश्चान्यप्रकारेण दृष्टान्तः । एवं चेद् गृहस्थाः सञ्चयपराः [अनागतं चिन्तयन्ति तर्हि] लोकोत्तरेऽयं विशेषः, यदुत निःसञ्चया श्रमणास्तैर्विशेषतोऽनागतचिन्ता कार्या । 'पुच्छा दिट्ठंतऽगारी य'त्ति भणियं ॥३८१॥ 'पुच्छा गिहिणो चिंत'त्ति (गा. ३७९) अवयवमाह—

जणलावो परगामे, हिंडिताऽऽणे'ति वसइ इह गामे ।
दिज्जह बालाईणं, कारणजाए य सुलभं तु ॥३८२॥

नोदकोक्ते इदमुत्तरं, जनालापः—लोक एवं ब्रवीति, परग्रामे हिण्डयित्वाऽऽनयन्ति—अत्र भुञ्जते, वसतिरिह, 'ततो' दद्ध्वं बालादीनां, एवंविधा गृहिणश्चिन्ता स्यात्, ततः प्राघूर्णकादिकारण उत्पन्ने घृतादि सुलभं स्यात् ॥३८२॥

पाहुण विसेसदाणे, णिज्जर कित्ती अ इहर विवरीयं ।
पुव्वं चमढणसिग्गा, ण देंति संतंपि कज्जेसु ॥३८३॥

१ संग्रहं करोतीत्यर्थः ।सं०।

प्राघूर्णकाय विशेषदाने निर्जरा कीर्त्तिश्च स्यात्, अन्यथा विपरीतं स्यात्। पूर्वं चमढणे श्रान्ता न ददति सन्तमपि कार्ये उत्पन्ने गृहिणो, 'चिं'त'त्ति गयं ॥३८३॥ बदरीदृष्टान्तमाह—

गामब्भासे बयरी, नीसंदकडुफ्फला य खुज्जा य ।
पक्कामाऽलसडिंभा, घा(प्र.खा)यंति घरे (प्र.यरे) गया दूरं ॥३८४॥
सिग्घयरं आगमणं, तेसिण्णेसिं च देंति सयमेव ।
खायंती एमेव उ, आयपरहिआवहा तरुणा ॥३८५॥
खीरदहिमाइयाणं, लंभो सिग्घतरगं च आगमणं ।
पइरिक्कं उग्गमाई, विजढा अणुकंपिआ इयरे ॥३८६॥

ग्रामाभ्यासे बदरी सा च निष्पन्दकडुफला कुब्जा 'पक्कापक्कफला' तामलसा डिम्भा भक्षयन्ति, इतरे सोद्यमा[डिम्भाः]दूरे' गताः । [ततः] तेषां शीघ्रतराऽऽगमनं स्यात्, तत आगत्य तेषामलसडिम्भानां ददति, स्वयमेव च भक्षयन्ति। एवमात्म–परहितावहाः तरुणास्तेषां क्षीरादीनां लम्भः शीघ्रतराऽऽगमनञ्च । 'पइरिक्क''ति प्रचुरं लभन्ते, उद्गमादयो दोषाः त्यक्ताः स्युः, अनुकम्पिता इतरे बालादयः, उक्तो बदरीदृष्टान्तः ॥३८४–३८५–३८६॥ 'आपुच्छिऊण गमणं'ति—

आपुच्छिअ उग्गाहिअ, अण्णं गामं वयं तु वच्चामो ।
अण्णं च अपज्जत्ते, होंति अपुच्छे इमे दोसा ॥३८७॥

आपृच्छय गुरुं, उद्ग्राहितपात्रा एवं भणन्ति, अन्यं ग्रामं वयं व्रजामः, तस्मिन् ग्रामे भिक्षाद्यप्राप्तावन्य' [ग्रामं] यास्यामः ॥३८७॥ 'दोसा य इमे अणापुच्छ'त्ति आह—

तेणाऽऽएस-गिलाणे, सावय इत्थी णपुंसमुच्छा य ।
आयरिअ-बाल-वुड्ढा, सेहा खमगा य परिचत्ता ॥३८८॥

कदाचिदन्यग्रामे यातां स्तेना उपधि-शरीर-हराः स्युः, आचार्योऽप्यकथिते न जानाति कया दिशा गता इति, दुःखान्वेषणं करोति। अथवा 'आएस' प्राघूर्णक आयातस्तेऽनापृच्छय गताः, आचार्यैः प्राघूर्णकार्थो न तेषां गदितः, ग्लानार्थोऽपि, अथाऽन्तरा श्वापदैर्भक्षिताः, स्त्रीषण्डदोपा वा, मूर्च्छया क्वचित् पतिताः स्युः, ततश्चाऽनापृच्छय गच्छतामाचार्यबालवृद्धसेहक्षपकास्त्यक्ताः स्युः, यत आचार्यादीनां प्रायोग्यमन्नं (प्र० मात्रं) नाऽऽनयन्ति, अनुक्तत्वात् ॥३८८॥

आयरिए आपुच्छा, तस्संदिट्ठे व तंमि उ असंते ।
चेइयगिलाणकज्जा-इएसु गुरुणो अ णिग्गमणं ॥३८९॥

तस्मादाचार्यमापृच्छय गन्तव्यं, तदभावे आचार्यसन्दिष्टमापृच्छय यान्ति । तस्मिन्नाचार्येऽसति-क्वचिन्निर्गते,

अन्यग्रामे यातां अनापृच्छायां दोषाः ।

केन कारणेनेत्याह 'चे०' चैत्यवन्दनार्थं ग्लानार्थं वा गुरोर्निर्गमनं स्यात् ॥३८९॥ चेद् गच्छताऽऽचार्येण यदा न कश्चिन्नियुक्तस्ततः—

अभणिए पुव्वणिउत्तं, आपुच्छित्ता वयंति ते समणा ।
अणभोगे आसण्णे, काइयउच्चारभोमाई[1] ॥३९०॥

अभणिते—कस्मिंश्चिदनियुक्ते, प्रागेव यो नियुक्तस्तमापृच्छ्य गम्यम् । अनाभोगेन निर्गताः, आसन्ने भूप्रदेशे यदि स्मृतं तत आगत्य निवेद्य यान्ति, कायिकयर्थं यो निर्गतस्तस्मै कथयन्ति । संज्ञाभूमिं गतस्तस्मै कथयन्ति वा ॥३९०॥

दवमाइनिग्गयं वा, सेज्जायर पाहुणं च अप्पाहे ।
असइं दूरगओ त्ति अ, नियत्त इहरा उ ते दोसा ॥३९१॥

द्रवं—पानकं तदर्थं यो निर्गतस्तस्मै कथयन्ति, शय्यातरं प्राघूर्णकं वा दृष्ट्वा सन्दिशन्ति, यतः कथनीयं मम विस्मृतम्, एतेषामभावे दूरगतोऽपि निवर्त्तते, इतरथा वा ते दोषाः स्तेनादयः स्युः ॥३९१॥

अण्णं गामं च वए, इमाइं कज्जाइं तत्थ नाऊणं ।
तत्थ वि अप्पाहणया, नियत्तइ वा सई काले ॥३९२॥

१ आदिशब्देन प्रथमालिकार्थं गतस्य ग्रहणम् ॥सं०॥

निवेद्य गन्तव्य
अनाभोगेन ग॰
प्रत्यावृत्यापि
निवेद्यम् ।

अनुज्ञातग्रामादन्यग्रामगमनकारणानि।

अथ तस्माद् ग्रामादन्यं ग्रामं व्रजेत्, एतानि वक्ष्यमाणानि कार्याणि ज्ञात्वा, तत्रेति तस्मिन् ग्रामे योऽसावभिप्रेतः । [1]तत्राप्यन्यग्रामे व्रजता 'अप्पा०' सन्देशको दातव्यः । तदभावे सति प्रभूतकाले निवर्त्तते ॥३९२॥ कार्याण्याह—

दूरट्ठिअखुड्डलए, नव भड अगणी य पंत पडिणीए ।
पाओग्ग-कालइक्कम, एक्कगलंभो अप्पज्जत्तं ॥३९३॥

एतानि दूरस्थितादीनि कारणानि अर्धपथ एव जानाति, कदाचिद् गतः सन् जानाति, तत्र ग्रामे तथाऽऽचार्यप्रायोग्यं न लब्धं, कालातिक्रमो जातः, एकस्य साधोर्भोजनलाभो जातः, न वा पर्याप्त्या तत्र भक्तं जातं । एभिः कारणैरन्यं ग्रामं [2]यान्ति ॥३९३॥

पाउग्गाईणमसई, संविग्गं सण्णिमाइ अप्पाहे ।
जइ य चिरं तो इयरे, ठवित्तु साहारणं भुंजे ॥३९४॥

प्रायोग्यानामभावेऽन्यं ग्रामं व्रजन् साधुः संविग्नं साधुं यदि पश्यति ततस्तस्य हस्ते सञ्ज्ञिहस्ते वा सन्दिशति, 'आदिग्रहणात्' पूर्ववच्छेषम्, भिक्षामटतां विधिरुक्तः, वसतिस्थानामाह—यदि तेषां ग्रामगतानां चिरं, तत 'इ०' वसतिस्था गच्छसाधारणं विशिष्टं संस्थाप्य शेषं प्रान्तं भुञ्जते ॥३९४॥ अथ तथापि चिरयन्ति ततः—

१ ततश्च किं कार्यमित्यत आह-तत्रा० ॥k॥ २ याति ॥k॥

जाए दिसाए उ गया, भत्तं घेत्तुं तओ पडियरंति।
अणपुच्छनिग्गयाणं, चउद्दिसं होइ पडिलेहा (प्र. पड्डियरणं)।३९५॥

यया दिशा भिक्षाटनार्थं गतस्तया दिशा गृहीतभक्तपानकाः साधवः प्रतिजागरणा-निरूपणां कुर्वन्ति। अनापृच्छय निर्गतानां भिक्षाहिण्डकानां चतसृष्वपि दिक्षु [1]प्रतिजागरणा स्यात् ॥३९५॥ प्रतिजागरणविधिमाह—

पंथेणेगो दो उप्पहेण, सद्दं करेंति वच्चंता।
अक्खर पडिसाडणया, पडियरणिआरेसि मग्गेणं ॥३९६॥

[2]पथैको द्वावुत्पथेन व्रजन्तः [3]शब्दं कुर्वन्ति। ते स्तेनादिना नीयमाना वर्त्तन्यामक्षराणि लिखन्तः पदादिना व्रजन्ति। परिशाटनं वस्त्रादेः कुर्वन्तो यान्ति। यतस्तेन पथा कश्चिदन्वेषयति। इतरेषामन्वेषणार्थं निर्गतानां साधूनां मार्गेण-[4]तत्कृतचिह्नेन प्रति[5]जागरणं स्यात् ॥३९६॥

गामे व गंतु पुच्छे, घर परिवाडीएँ जत्थ उ ण दिट्ठा।
तत्थेव बोलकरणं, पिंडियजणसाहणं चेव ॥३९७॥

१ 'प्रतिजागरणा स्यादि'ति नास्ति ॥ k प्रतौ ॥ २ पथैकौ व्रजति ॥ k ॥ ३ त्रयोऽपि व्रजन्तः शब्दं कुर्वन्ति ते चान्यग्रामे व्रजन्तस्तेना० ॥ k ॥ ४ कृत० ॥ k ॥ ५ रण कार्यं स्यात् ॥ k ॥

अन्यग्रामे भिक्षाटनजलाभाः ।

यदा स्तेननीतानां न किञ्चिच्चिन्हं पश्यति(न्ति) तदा ग्रामे गत्वा पृच्छति(न्ति) गृहपरिपाट्या यदा न दृष्टस्तत्र ग्रामे, न च तद्ग्रामनिर्गतानां वार्ता, तत्रैव 'बोलकरणं' रोलं कुर्वन्ति । 'पिं०' पिण्डितस्याग्रे कथयन्ते । यदुताऽत्र ग्रामे [1]संयता आयाता, न पुनरतो ग्रामाद्वार्त्ता श्रुतेति ॥३९७॥ एवंतरुणैरन्यग्रामे भिक्षाटनेनेदं कृतम्—

एवं उग्गमदोसा, विजढा पइरिक्कया अणोमाणं ।
मोहातिगिच्छा अ कया, विरियायारो य अणुचिण्णो ॥३९८॥

अन्यग्रामे भिक्षाटनेनोद्गमदोपास्त्यक्ताः स्युः । 'पइ०' प्रचुरभक्तादेर्लाभः स्यात्, 'अणो०' न चापमानमनादरकृतं स्याल्लोके, 'मो०' श्रमातपवैयावृत्यारिभिर्मोहस्य कामस्य निग्रहः स्यात् । वीर्याचारोऽनुचीर्णः[2] ॥३९८॥ एवमुक्ते नोदकः आह—

अणुकंपायरियाई, दोसा पइरिक्कजयणऽसंसट्ठं ।
पुरिसे काले खमणे, पढमालिय तीसु ठाणेसु ॥३९९॥

आचार्यादयोऽनुकम्पिताः स्युः, आचार्योऽप्यनेनैव वाक्येन प्रत्युत्तरं ददाति काका–'अणु०' एवमाचार्यादीनामनुकम्पा एव यतः परलोके निर्जरेहलोके प्रशंसा, पुनराह परः–'दो०' भवतु परलोकानुकम्पा किन्तु [3]क्षुधादिपीडा

१ सयता भिक्षार्थं प्रविष्टाः च (न) तर्षा पुनः ॥ k ॥  २ ०चीर्णोऽनुष्ठितो भवति ।: k ॥  ३ क्षुधापिपासादि ॥ k ॥

तदवस्थैव ?, आचार्योऽप्याह, क्रियत एव प्रथमालिका किन्तु त्रिषु स्थानेषु, पुरुषोऽसहिष्णुः ततः करोति चेदुष्णकालस्ततः करोति, [1]क्षपकः-तपस्वी करोति । एषु स्थानेषु, करोति प्रथमालिकां, क्व कथं करोति ? इत्याह-'पइ०' एकान्ते यतनया करोतु(ति) । आह परः-तेनाचार्यादीनां तद्भक्तं संसृष्टं कृतं (भवति) ? आचार्योऽनेनैव वाक्येनाह 'पइरिक्कजयणसंसट्ठं' एकान्ते यतनयाऽसंसृष्टं यथा स्यात्तथा प्रथमालयन्ति । अकारः प्रश्लेष आचार्यवाक्ये दृष्टव्यः ॥३९९॥ द्वारगाथेयं प्रथमावयवमाह—

चोयगवयणं अप्पा-णुकंपिओ ते अ मे परिच्चत्ता ।
आयरियणुकंपाए, परलोए इह पसंसणया ॥४००॥

आत्मैव अनुकम्पित आचार्येण, [2]ते भवद्भिः परित्यक्ताः, आचार्य आह-आचार्यानुकम्पया [3]परलोकः, इह प्रशंसा ॥४००॥ 'अणुकम्पाआयरिया' इति गयं, 'दोस'त्ति आह—

एवंपि अपरिचत्ता, काले खवए अ असहुपुरिसे य ।
कालो गिम्हो उ भवे, खमगो वा पढमाबिइएहिं ॥४०१॥

एवमपि ते परित्यक्ताः, यतः क्षुधादिना बाध्यन्ते ? आहाऽऽचार्यः-काले ग्रीष्मे करोति, क्षपको स्यात्ततः

दि।



१ क्षपकस्तपस्वी करोतीत्ययशो नास्ति ॥ k ॥ २ ते च ते = प्रसिद्धाः वृषभा इत्यर्थः ॥ सं ॥ ३ परलोकस्स्यात् , ।k। परलोके इहलोके प्रशसा ।S।

करोति, प्रथमद्वितीयपरीषहाभ्यां क्षुत्तृड्भ्यां बाध्यमानः पुरुषः करोति ॥४०१॥ आह परः—

जइ एवं संसट्ठं, अप्पत्ते दोसिणाइणं गहणं।
लंबणभिक्खा दुविहा, जहणमुक्कोस तिअपणए ॥४०२॥

यद्येवं बहिः प्रथमालयति, तदा संसृष्टं स्यात्? आहाऽऽचार्यः—'अप्पत्ते'ति अप्राप्तायामेव भिक्षावेलायां पर्युषितान्नग्रहणं कृत्वा प्रथमालयति, कियद्? इत्याह—लम्बनैः कवलैर्भिक्षाभिश्च द्विविधा प्रथमालिका, जघन्यतस्त्रयः कवलास्तिस्रो वा भिक्षाः, उत्कृष्टतः पञ्च कवला पञ्च भिक्षा वा ॥४०२॥ तेन संघाटकेन किं वस्तु [1]केषु गृह्यते का वा यतना? तदाह—

एगत्थ होइ भत्तं, बिइअंमि पडिग्गहे दवं होइ।
पाउग्गायरियाई, मत्ते बिइए उ संसत्तं ॥४०३॥

एकस्मिन् पात्रे भक्तं गृह्णाति, द्वितीये पतद्ग्रहे द्रवं, एकस्मिन्मात्रके आचार्यादिप्रायोग्यं, द्वितीये मात्रके संसक्तं किञ्चित् पानकं च गृह्यते ॥४०३॥

जइ रित्तो तो दवमत्तगंमि, पढमालियाए करणं तु।
संसत्तगहण दवगु—ल्लहे य तत्थेव जं पत्तं ॥४०४॥

१ केषु पात्रकेषु गृह्यते का वा प्रथमालीकरणयतना० ॥ k ॥

प्रथमालिकायां
कवलादिमान
वस्तुग्रहण-
यतना च।

यदि रिक्तः संसक्तद्रवमात्रकस्ततस्तस्मिन् प्रथमालिकाकरणं, अथ तद्द्रवमात्रके संसक्तद्रवग्रहणं कृतं, ततस्तत्रैव पात्रे यत्प्रान्तं तद् भुङ्क्ते, तत्र क्षेत्रे दुर्लभे पानके सति ससक्तमात्रके पानकाक्षणिके सति तस्मिन्नेव भक्तपतद्ग्रहे यत्प्रान्तं तद् हस्तेनाऽऽकृष्याऽन्यस्मिन् हस्ते कृत्वा समुद्दिशति । एवं वाऽसौ संघाटकः प्रथमालयति ॥४०४॥

अंतरपल्लीगहिअं, पढमागहियं व सव्व भुंजेज्जा ।
धुवलंभसंखडीयं व, जं गहिअं दोसिणं वावि ॥४०५॥

अन्तरपल्ली—तस्माद् ग्रामादासन्नो यो ग्रामस्तत्र यद् गृहीतं तद् भुङ्क्ते पुनस्तत् क्षेत्रातिक्रान्तत्वादकल्प्यं स्यात् , प्रथमपौरुषीगृहीतं यत्तत् सर्वं भुङ्क्ते, तृतीयपौरुष्यामकल्प्यं यतस्तत् स्यात् । ध्रुवोऽवश्यंभावी संखड्यामत्र लाभ इति मत्वा यद् गृहीतं [1]दोषान्नं तत्सर्वं भुङ्क्ते ॥४०५॥

दरहिंडिए व भाणं, भरिअं भोच्चा पुणोवि हिंडिज्जा ।
कालो वाऽइक्कमई, भुंजेज्जा अंतरा सव्वं ॥४०६॥

अर्द्धहिण्डितेऽपि यद् भृतं भाजनं तद् भुक्त्वा पुनर्हिण्डते, भोजनकालो वाऽतिक्रामति साधूनां यावदसौ भक्तं गृहीत्वा व्रजति, ततोऽन्तरापि सर्वं भुक्त्वा प्रविशति ॥४०६॥



१ दोषितान्न ।k।

एसो उ विही भणिओ, तंमि वसंताण होइ खेत्तंमि ।
पडिलेहणंपि इत्तो, वोच्छं अप्पक्खरमहत्थं ॥४०७॥

एष विधिरुक्तस्तस्मिन् क्षेत्रे वसताम्, प्रतिलेखनामतो वक्ष्येऽल्पाक्षरां महार्थांश्च, उक्तं स्थानस्थितिद्वारम् । तद्व्याख्यानाच्च गतेयं गाथा—'सिंगार–विइय–वसही'त्यादिका, तत्प्रतिपादनाच्चोक्ता 'जयमाणा विहरंता, ओहेणाहिण्डका चउद्धा उ'त्ति, तत्प्रतिपादनादुक्ता अनेके प्रत्युपेक्षकाः, तद्व्याख्यानादुक्तं प्रत्युपेक्षिकद्वारम् ॥४०७॥ अतः प्रतिलेखनामाह—

दुविहा खलु पडिलेहा, छउमत्थाणं च केवलीणं च ।
अब्भिंतर-बाहिरिआ, दुविहा दव्वे य भावे य ॥४०८॥

द्विविधा प्रतिलेखना, छद्मस्थानां केवलिनां च संबन्धिनी, सा चैकैका [1]द्विधा बाह्याभ्यन्तरभेदात्, या बाह्या सा द्रव्यविषया अभ्यन्तरा भावविषयेति ॥४०८॥ केवलिनां प्रत्युपेक्षणामाह—

पाणेहि उ संसत्ता, पडिलेहा होइ केवलीणं तु ।
संसत्तमसंसत्ता, छउमत्थाणं तु पडिलेहा ॥४०९॥

१ द्विधा बाह्या सा द्रव्यविषया अभ्यन्तरा भावविषयेति ॥k॥

केवलिनो द्रव्यभाव-प्रतिलेखना तत्कारणञ्च ।

प्राणिभिः संसक्तं यद् द्रव्यं तत्प्रतिलेखना केवलिनाम्, [1]संसक्तासंसक्तप्रतिलेखना छद्मस्थानाम्, आह—यथोपन्यासस्तथा निर्देशः कस्मान्न कृतः ? उच्यते—केवलिनां प्राधान्यख्यापनार्थं पूर्वं व्याख्या, पश्चात् छद्मस्थानां कृता, आह—इत्थमेव पूर्वमुपन्यासः कस्मान्न कृतः? उच्यते—तत्पूर्वकाः केवलिन इत्यस्यार्थस्य ज्ञापनार्थम् ॥४०९॥ केवलिनां प्रतिलेखनाकरणे कारणमाह—

संसज्जइ धुवमेअं, अपेहिअं तेण पुव्व पडिलेहे ।
पडिलेहिअंपि संसज्ज-इत्ति संसत्तमेव जिणा ॥४१०॥

संसज्यते—प्राणिभिः सह संसर्गमुपयाति ध्रुवमेतद्वस्त्रादि अप्रत्युपेक्षितं सत् तेन पूर्वमेव केवलिनः प्रत्युपेक्षणां कुर्वन्ति, यदा पुनरेवं संविद्रते—इदं वस्त्रादि प्रत्युपेक्षितमपि उपभोगकाले संसज्यतेऽतः संसक्तमेव जिनाः प्रत्यु-:पेक्षन्ते न त्वनागतं पलिमन्थदोषात् ॥४१०॥ उक्ता केवलिद्रव्यप्रत्युपेक्षणा, भावत आह—

नाऊण वेयणिज्जं, अइबहुअं आउअं च थोवागं ।
कम्मं पडिलेहेउं, वच्चंति जिणा समुग्घायं ॥४११॥

ज्ञात्वा वेदनीयकर्मातिप्रभूतं, तथाऽऽयुष्कं च स्तोकं कर्म प्रत्युपेक्ष्य—ज्ञात्वेत्यर्थः, केवलिनः समुद्घातं व्रजन्ति अत्र च भावः कर्मणः उदयः औदयिको भाव इत्यर्थः ॥४११॥ छद्मस्थानां द्रव्यत आह—

१ ०संसक्तद्रव्यप्रति० ॥k॥

संसत्तमसंसत्ता, छउमत्थाणं तु होइ पडिलेहा ।
चोयग जह आरक्खी, हिंडिताहिंडिया (प्र. तह उ) चेव ॥४१२॥

संसक्तासंसक्तद्रव्यविषया प्रतिलेखना छद्मस्थानां, अत्र नोदक आह–युक्तं संसक्तस्य वस्त्रादेः प्रत्युपेक्षणम्, असंसक्तं कस्मात्प्रत्युपेक्ष्यते ? आहाऽऽचार्यः–यथा आरक्षकयोर्हिंण्डिताऽहिण्डितयोर्यथासंख्येन प्रसादविनाशौ संजातौ तथा अत्रापि द्रष्टव्यम् ॥४१२॥ अमुमेवार्थमाह—

तित्थयरा रायाणो, साहू आरक्खि भंडगं च पुरं ।
तेणसरिसा य पाणा, तिगं च रयणा भवो दंडो ॥४१३॥
किं कय किं वा सेसं, किंकरणिज्जं तवं च न करेमि ।
पुव्वावरत्तकाले, जागरओ भावपडिलेहा ॥४१४॥

स्पष्टा, नवरं 'पुव्व'त्ति पूर्वरात्रकालो रात्रिप्रहरद्वयस्याद्यः तस्यान्त–उपरिष्टादपररात्रकालस्तस्मिन् जाग्रतश्चिन्तयन्ति । एवमुक्ता छद्मस्थानां भावप्रत्युपेक्षणा, तद्भणनाचोक्ता प्रत्युपेक्षणा ॥४१४॥ प्रत्युपेक्षणीयमाह—

ठाणे उवगरणे वा, थंडिल-उवथंभ-मग्ग-पडिलेहा ।
किमाई पडिलेहा, पुव्वण्हे चेव अवरण्हे ॥४१५॥

स्थानं-कायोत्सर्गादि त्रिविधं वक्ष्यति, उपकरणं पात्रकादि, स्थण्डिलं कायिक्यादिभूमिः, †अवष्टम्भः, [1]मार्गः, एतत्पञ्चकविषया प्रतिलेखना [2]पूर्वाह्णे च किमादिका ? मुखवस्त्रिकेति, द्वारगाथेयम् ॥४१५॥ तत्र सामान्येन सर्वाण्येव द्वाराणि [3]व्याख्यानयति—

ठाण-निसीय-तुयट्टण—उवगरणाईण गहण-णिक्खेवे।
पुव्वं पडिलेहे चक्खु-णा उ पच्छा पमज्जेज्जा ॥४१६॥

स्थानं—कायोत्सर्गस्तं कुर्वन्, निषीदनम्—उपविशनं, [4]त्वग्वर्त्तनं, तथोपकरणादीनां ग्रहणे निक्षेपे च आदिग्रहणात् स्थण्डिलमवष्टम्भश्च गृह्यते, एतानि सर्वाण्येव पूर्वं चक्षुषा प्रत्युपेक्ष्य पश्चाद्रजोहरणेन प्रमृज्यन्ते ॥४१६॥ एतामेव द्वारगाथां विशेषेणाह—

उड्ढणिसीयतुयट्टण, ठाणं तिविहं तु होइ णायव्वं ।
उड्ढं उच्चाराई, गुरुमूल पडिक्कमागम्म ॥४१७॥

स्थानं त्रिविधं ज्ञातव्यम्—ऊर्ध्वस्थानं निषीदनस्थानं त्वग्वर्त्तनस्थानं च । ऊर्ध्वस्थानं—कायोत्सर्गः स [5]चोच्चारादि कृत्वा, ततश्च गुरुमूले आगत्य इर्यापथिकां प्रतिक्रामतो भवति ऊर्ध्वस्थानम् ॥४१७॥

† आधाररूपः स्तम्भादिः १ मार्ग॰ - पन्थाः ॥k॥ २ पूर्वाह्णेऽपराह्णे च किमादिका ॥k॥ ३ ॰नयति भाष्यकारः ॥k॥
४ त्वग्वर्तनं = स्वपनं ॥k॥ ५ आदिशब्दात् प्रस्रवणादिग्रहणम् ।सं०।

स्थानादि-
पञ्चक-
प्रतिलेखनायाः
व्याख्यानम् ।

पक्खे उस्सासाई, पुरतो अविणीय मग्गओ वाऊ ।
णिक्खम(प्र.णिग्गम)पवेसवज्जण, भावासण्णे गिलाणाई ॥४१८॥

कायोत्सर्गं कुर्वता गुरोः पक्षयोर्न स्थेयं, यतो गुरुरुच्छ्वासेनाभिहन्यते, पुरतस्तिष्ठतोऽविनीतत्वं स्यात्, नापि मार्गतः—पृष्ठतः (गुरोः) अपानवातनिरोधेन ग्लानता स्यात्। (कथं पुनः स्थातव्यं ?) तत्र निष्क्रम—प्रवेशस्थानं मुक्त्वा कायोत्सर्गं करोति । 'भावा०' य उच्चारादिना पीडितः स च निर्गमे रुद्धे सञ्ज्ञानिरोधं करोति, ततश्च ग्लानता स्यात्, अथ निर्गच्छति ततः कायोत्सर्गभङ्गः ॥४१८॥ मार्गे कायोत्सर्गकरणे एते दोषाः—

भारे वेयणखमगुण्ह—मुच्छपरियावछिंदणे कलहो ।
अव्वाबाहे ठाणे, सागारपमज्जणा जयणा ॥४१९॥

भिक्षामटित्वाऽऽगतस्य पात्रादिभाराक्रान्तस्य (प्रतिपालयतः) साधोर्वेदना स्यात् । विह्वत्याऽऽयातः क्षपकः [तथा] उष्णसंतप्तश्च, द्वयोरपि प्रतिपालयतोर्यथाक्रमं मूर्च्छापरितापौ भवतः । अथैते कायोत्सर्गं छित्त्वा प्रविशन्ति, ततः परस्परं कलहः स्यात्, तस्माद्व्याबाधे स्थाने कायोत्सर्गः कार्यः । 'सागा०' सागारिको यदि स्यात् कायोत्सर्गं कुर्वतस्तदाऽप्रमार्जनामेव करोति यतनया वा प्रमार्जयति, कथं ? रजोहरणबाह्यनिपद्यया, ततस्तां सागारिकपुरत एकान्ते मुञ्चति, गते च गृह्णाति ॥४१९॥ निषीदनस्थानमाह—

संडास पमज्जित्ता, पुणो वि भूमिं पमज्जिआ णिसिए ।
राओ य पुव्वभणिअं, तुयट्टणं कप्पई ण दिवा ॥४२०॥

जङ्घोर्वोरन्तरालं प्रमृज्य उत्कुट्टुकस्थः पुनर्भुवं प्रमृज्य निषीदेत् । त्वग्वर्त्तनस्थानमाह—रात्रौ पूर्वोक्तमेव त्वग्वर्त्तनं, दिवा पुनस्त्वग्वर्त्तनं न कल्पते ॥४२०॥ त्रयाणां कल्पते तानाह—

निषीदन-त्वग्वर्तनस्थान निरूपणा ।

अद्धाणपरिस्संतो, गिलाणवुड्ढा अणुण्णवेत्ताणं ।
संथारुत्तरपट्टो, अत्थरण णिवज्जणाऽऽलोगं ॥४२१॥

अध्वानपरिश्रान्तो ग्लानो वृद्धश्च एते त्रयोऽनुज्ञाप्याचार्यं संस्तारकोत्तरपट्टौ आस्तीर्य 'निव०' स्वपन्ति । सावकाशं मुक्त्वाऽभ्यन्तरे, [स्वपन्ति] मा भूत्सागारिकस्य 'नूनं रात्रौ सुरतप्रपञ्चे स्थितोऽयमन्यथा कुतोऽस्य निद्रेति शङ्का स्यात् इति' ॥४२१॥ उक्तं त्वग्वर्त्तनस्थानं, तेन गतं स्थानद्वारम्, उपकरणमाह—

उवगरणाईयाणं, गहणे णिक्खेवणे य संकमणे ।
ठाण णिरिक्खपमज्जण, काउं पडिलेहए उवहिं ॥४२२॥

उपकरणादीनां ग्रहणे, निक्षेपणे, संक्रमणं—स्थानात् स्थानान्तरे [नयनं] तस्मिन्, एषु यत् स्थानं तन्निरीक्ष्य प्रमार्जनं

कृत्वा च उपधिं प्रत्युपेक्षते, योऽयमादिशब्दः स उपधिप्रकारप्रतिपादनार्थः ॥४२२॥ [1]उपकरणप्रत्युपेक्षणामाह—

उवगरण वत्थपाए, वत्थे पडिलेहणं तु वोच्छामि ।
पुव्वण्हे अवरण्हे, मुहणंतगमाइ पडिलेहा ॥४२३॥

उपकरणप्रतिलेखना द्विधा—वस्त्रविषया पात्रविषया च, पूर्वं वस्त्रप्रतिलेखनां वक्ष्ये, यतः प्रव्रजतः पूर्वं वस्त्रोपकरणमेव दीयते सा च पूर्वाह्णे, अपराह्णे च मुखवस्त्रिकादिका स्यात् ॥४२३॥ तत्राऽयं विधिः—

उड्ढं थिरं अतुरिअं, सव्वं ता वत्थ पुव्व पडिलेहे ।
तो विइअं पप्फोडे, तइयं च पुणो पमज्जेज्जा ॥४२४॥

वस्त्रोर्ध्वं कायोर्ध्वं चाचार्यमतेन भविष्यति, नोदकमतेन वक्ष्यमाणं, तथा स्थिरं—सुगृहीतं कृत्वा प्रत्युपेक्षेत, अत्वरितं-स्तिमितं [2]प्रत्युपेक्षेत=निरीक्षेत । [3]सर्ववस्त्रं पूर्वं चक्षुषा निरीक्षेत एवं तावदर्वाग्भागः । परभागोऽपि परावृत्यैवमेव चक्षुषा निरीक्षेत, ततो द्वितीयवारायां प्रस्फोटयेत्, वस्त्रे षट् पुरिमाः कार्याः । तृतीयवेलायां हस्तगतान् प्राणिनः प्रमार्जयति ॥४२४॥ इमां गाथां व्याख्यानयन्नाह भाष्यकारः—

सभेदा उपकरण-प्रत्युपेक्षणा ।

१ ०क्षणमाह ॥k॥ २ प्र०' चक्षुषा निरीक्षेत ॥k॥ ३ 'सव्वं'ति सर्ववस्त्र० ॥k॥

वत्थे काउड्ढंमि अ, परवयण ठिओ गहाय दसियंते।
तं ण भवति उक्कुडुओ, तिरिअं पेहे जह विलित्तो ॥४२५॥

ऊर्ध्वं द्विधा वस्त्रोर्ध्वं कायोर्ध्वं च, इत्युक्ते नोदक आह–'ठिओ' स्थितस्योर्ध्वस्य गृहीत्वा दशान्ते वस्त्रं प्रस्फोटयतः कायोर्ध्वं वस्त्रोर्ध्वं च यथा स्याद्, एवमुक्ते आहाचार्यः–तन्न भवति, यस्मादुत्कुटुकस्थितस्तिर्यक् प्रसार्य वस्त्रं प्रत्युपेक्षेत। एतदेव नः कायोर्ध्वं वस्त्रोर्ध्वं च [नान्यत्[k]], यथा चन्दनादिना विलिप्ताङ्गः परस्परमङ्गानि न लगयति एवं [1]सोऽपि ॥४२५॥ स्थिरादीनि पदान्याह—

घेत्तुं थिरं अतुरिअं, तिभागबुद्धीय चक्खुणा पेहे।
तो बिइयं पप्फोडे, तइयं च पुणो पमज्जेज्जा ॥४२६॥

गृहीत्वा स्थिरं–निबिडं, अत्वरितं–स्तिमितं, त्रिभागबुद्ध्या चक्षुषा प्रत्युपेक्षेत, द्वितीयवारायां प्रस्फोटयेत्, तृतीयवारायां प्रमार्जयेत् ॥४२६॥ प्रत्युपेक्षणां कुर्वतेदं कर्त्तव्यम्—

अणच्चाविअं अवलिअं, अणाणुबंधिं अमोसलिं चेव।
छप्पुरिमा णव खोडा, पाणी पाणपमज्जणं ॥४२७॥

1 ०सोऽपि प्रत्युपेक्षेत ॥ k ॥

प्रतिलेखनां कुर्वता वस्त्रमात्मा च न नर्तयितव्यः, अवलितं वस्त्रं शरीरं च कार्यं, नानुबन्धि प्रत्युपेक्षणं–नाऽनवरतमाखोडा[टका]दि कार्यं, सान्तरं [1]कर्त्तव्यं, अमोसलि प्रत्युपेक्षणं कार्यं, यथा मुसलं ऊर्ध्वमधस्तिर्यग् लगति नैवं प्रतिलेखना कार्या किन्तु यथा प्रतिलेखयत ऊर्ध्वं पीठिषु, तिर्यक् कुड्यामधो भूमौ न लगति तथा कार्यं, 'छप्पुरिमा' तत्र वस्त्रं चक्षुषा निरूप्यार्वाग्भागे त्रयः पुरिमाः कर्तव्याः, तथा परावृत्य परभागं निरूप्य पुनरपरे त्रयः पुरिमाः एवमेते, षट् पुरिमाः षड्वारामित्यर्थः। नव खोटकाः कार्याः पाणेरुपरि, तथा प्राणिनां प्रमार्जनं पाणौ नवैव वाराः कार्यम् ॥४२७॥ इमानि द्वाराण्याह—

वत्थे अप्पाणंमि अ, चउहा अणच्चाविअं च ।
अणुबंधि णिरंतरया, तिरिउड्ढह य घट्टणा मुसली ॥४२८॥

अनर्त्तायितं चतुर्धा, अवलितं चतुर्धा, शरीरवस्त्रभेदात्–अत्र प्रथमो भङ्गः शुद्धः, अनुबन्धः–निरन्तरतोच्यते, नानुबन्धेन प्रतिलेखयति। त्रिधा मुशली–ऊर्ध्वघट्टनाऽधोघट्टना तिर्यग्घट्टना, एवं न किञ्चिद्वस्त्रेण घट्टयति ॥४२८॥ पूर्वोक्तमनर्त्तायितादि कार्यं, नेदं वक्ष्यमाणम्—

आरभडा सम्मद्दा, वज्जेयव्वा य मोसली तइया ।
पप्फोडणा चउत्थी, विक्खित्ता वेइया छट्ठा ॥४२९॥

1 सान्तरं = २ विच्छेदम् ॥ स० ॥

[1]एते षड् दोषाः ॥४२९॥ इमां द्वारगाथां व्याख्यानयति—

वितहकरणे च (प्र.व) तुरिअं, अण्णं अण्णं व गेण्हणाऽऽभडा।
(प्र. वितहकरणंमि तुरिअं अण्णं वण्णं व गिहण आरभडा)।
अंतो व होज्ज कोणा, निसियण तत्थेव संमद्दा ॥४३०॥

वितथं–विपरीतकरणं तदारभडाशब्देनोच्यते, वा–विकल्पेनेयं च आरभडोच्यते–त्वरितम्–आकुलं यदन्यान्यवस्त्रग्रहणं तदारभडा, सा च प्रतिलेखना न कार्या। सम्मर्दा व्याख्याते–अन्तः मध्ये वस्त्रस्य संवलिताः कोणा यत्र स्युः, सा सम्मर्दा, तत्रैवोपधौ उपविश्य यत्प्रतिलेखनाकरणं वा सम्मर्दा, सा च न कार्या ॥४३०॥

मोसली पुव्वुद्दिट्ठा, पप्फोडण रेणुगुंडिए चेव।
विक्खेवं तुक्खेवो, वेइयपणगं च छद्दोसा ॥४३१॥

मोसली पूर्वमेवोद्दिष्टा[2], प्रस्फोटनामाह–यथा कश्चिद् गृही रेणुगुण्डितवस्त्रं प्रस्फोटयति एवमसावपि, इयं च न कर्त्तव्या, विक्षिप्तमाह–प्रतिलेखयित्वा वस्त्रमन्यत्र जवनिकादौ क्षिपति, अथवा विक्षेपो–वस्त्राञ्चलानामूर्ध्वं यत्क्षेपणं स उच्यते, स च न कार्यः। वेदिका पञ्चप्रकारा जानुनोरुपरि हस्तौ कृत्वा प्रतिलेखयति यत् सा ऊर्ध्ववेदिका [१]

१ आरभडा (१) सम्मर्दा (२) मोसली (३) प्रस्फोटना (४) विक्षिप्ता (५) वेदिका (६) प्रत्युपेक्षणा न कार्या। k।
२ उद्दिष्टा भणितेत्यर्थः।

जानुनोरधो हस्तौ कृत्वा यत् प्रतिले०[खयति] सा [अधो वेदिका] (२), संदंशयोर्मध्ये हस्तौ कृत्वा यत् प्रतिलेखयति [सा k] तिर्यग्वेदिका (३) बाह्वोरन्तरा द्वे जानुनी कृत्वा यत् प्रतिले०[खयति] सा–उभयवेदिका[1]। बाह्वोरन्तरैकं जानु कृत्वा यत् प्रतिले० [खयति] सा एकतोवेदिका, इदं न कर्त्तव्यम्। एते आरभडादयः–षड् दोषाः प्रतिलेखनायां न कार्याः ॥४३१॥ तथैते च न [2]कार्याः—

पसिढिल–पलंब–लोला, ए(णे. पा.)गा मोसा अणेगरूवधुणा।
कुणइ पमाणपमायं, संकियगणणोवगं कुज्जा ॥४३२॥

प्रशिथिलं दृढं न गृहीतं प्रलम्बमानाञ्चलं एकान्ते गृहीतं प्रलम्बते, भूमौ लोलते हस्ते वा, 'एगामोस'त्ति मध्ये गृहीत्वा वस्त्रं वसन् हस्ताभ्यां त्रिभागावशेषं करोति, अथवा त्र्यंगुलीभिर्वस्त्रं गृहीतव्यं तदेकाङ्गुल्या गृह्णाति, 'णेगामोस'त्ति पाठेऽनेकामर्शाः अनेकस्पर्शाः, अनेकप्रकारं कम्पयन्ति, अथवाऽनेकानि वस्त्राण्येकत्र कृत्वा धुनाति, प्रमाणे प्रमादं करोति, पुरिमादीनूनाधिकान् करोति शङ्किते सति गणनामुपगच्छन्तीति गणनोपगा तां करोति पुरीमादीन् गणयन्नित्यर्थः ॥४३२॥ इमां द्वारगाथां प्रतिपदमाह—

पसिढिलमघणं अतिराइयं च विसमगहणं व कोणं वा।
भूमीकरलोलणया, कड्ढणगहणेक्कआमोसा ॥४३३॥

१ द्विधा वेदिकाः। S।  २ प्रत्युपेक्षणायामेते दोषा न कार्या इति भावः। सं०।

प्रशिथिलम्—'अघणं'—अदढं गृह्णाति अतिरायितं वा अतटितं [1]वा (अताडितं वा) प्रशिथिलं, विषमग्रहणे सति लम्बकोणं वस्त्रं स्यात्। भूमौ करे वा लोलयति प्रतिलेखयन्, मध्ये वस्त्रं गृहीत्वा तावदाकर्षयति यावत् त्रिभागं शेषं ग्रहणं जातं, इयमेगामोसा एकाघर्षणमित्यर्थः, अथवाऽऽकर्षणे ग्रहणे वा [2]अनेकानामर्शान् करोति ॥४३३॥

धुणणा तिण्ह परेणं, बहूणि वा घेत्तु एक्कई धुणइ ।
खोडणपमज्जणासु य, संकियगणणं करि पमाई ॥४३४॥

धुनना—कम्पना त्रयाणामुपरि करोति बहूनि वस्त्राण्येकीकृत्य यौगपद्येन धुनाति वा, खोटकप्रमार्जनासु नवस्थनाधिकं करोति । शङ्कितगणनां करोति, प्रमादी, इत्थं न कर्त्तव्या ॥४३४॥ विशिष्टा तु कर्त्तव्येत्याह—

अणूणाइरित्त पडिलेहा, अविवच्चासा तहेव य ।
पढमं पयं पसत्थं, सेसाणि अ अप्पसत्थाणि ॥४३५॥

(१) अन्यूना (२) नातिरिक्ता (३) विपर्यासेन कर्त्तव्या, एभिस्त्रिभिः पदैरष्टौ भङ्गाः सूचिताः । एतेषु प्रथमं पदं प्रशस्तम् ॥४३५॥

णवि ऊणा णवि रित्ता, अविवच्चासा उ पढमओ सुद्धो ।
सेसा होइ असुद्धा, उवरिल्ला सत्त जे भंगा ॥४३६॥

१ अनटितं क ॥k॥ २ ०अनेके आमोसाः— अनेकानि स्पर्शनानि ॥k॥

अन्यूनाऽनतिरिक्ताऽविपर्यासरूपः प्रथमो भङ्गः शुद्धः । शेषं स्पष्टम्। येऽशुद्धाः सप्त भङ्गास्ते एवं [1]भवन्ति ॥४३६॥

खोडपमज्जण वेलाउ (प्र.सु), चेव ऊणाहिआ मुणेयव्वा ।
अरुणावासग [1] पुव्वं [2], परोप्परं [3] पाणिपडिलेहा [4] ॥४३७॥

खोटकेषु प्रमार्जनासु [2]ऊनाधिकाः क्रियन्ते ततोऽशुद्धाः। [3]न्यूनाधिकवेलायामशुद्धा भवन्ति वा, आह— न्यूनाधिकवेलायां प्रतिलेखयतो दोष उक्तस्ततः कदा कर्त्तव्या ? तत्र केचनाऽऽहुः— अरुणादावश्यकं पूर्वमेव कृत्वा ततोऽरुणोद्गमसमये प्रभास्फुटनवेलायां प्रतिलेखयति, अपरे आहुः— प्रभायां स्फुटितायामावश्यकं पूर्वं कृत्वा प्रतिलेखयति, अन्ये त्वाऽऽहुः— 'परो'० परस्परं यथा[दा] मुखानि विभाव्यन्ते तदा प्रतिलेखयति, अन्ये यदा पाणौ रेखा दृश्यन्ते [4]तदा ॥४३७॥ सिद्धान्तवाद्याह—

एते उ अणाएसा, अंधारे उग्गएविहु ण दीसे ।
मुहरयणिसिज्जचोले; कप्पतिगदुपट्टथुई सूरो ॥४३८॥

एते सर्वेप्यनादेशाः असत्पक्षाः, यतोऽन्धकारे प्रतिश्रये उद्गतेऽपि सूर्ये रेखा न दृश्यन्ते तस्मादसत्पक्षोऽयं, शेषं पदत्रयं सान्धकारत्वादेव दूषितं, तर्हि कदा प्रतिलेखयति ? मुखवस्त्रिका—रजोहरण—निषद्या—चोलपट्ट—कल्पत्रिक—

प्रातः प्रतिलेखन-समयनिर्णयः।

१ न्यूनानतिरिक्ताविपर्यासादयः ।सं०।
२ ०धिका वा पुरिमाः क्रि० ।k। ३ ०यां प्रत्युपेक्षणायां क्रियमाणायामशु० ।k। ४ ०तदा प्रत्युपेक्षणा क्रियते ।k।

संस्तारोत्तरपट्ट–प्रतिलेखनासमाप्त्यनन्तरं यथा सूर उद्गच्छति, प्रतिक्रमणसमाप्तौ ज्ञानदर्शनचरित्रार्थं स्तुतित्रये दत्ते सति प्रतिलेखना क्रियते ॥४३८॥ प्रागुक्तमुपधेर्विपर्यासो न [1]प्रतिलेखनायां कार्यस्तस्यापवादमाह—

पुरिसुवहिविवच्चासो, सागरिए करिज्ज उवहिवच्चासं ।
आपुच्छित्ताण गुरुं, पहुव्वमाणेयरे वितहं ॥४३९॥

विपर्यासो द्विविधः–पुरुषोपधिविपर्यासभेदात्, सागारिके स्तेनादिके सत्यागते विपर्यासः क्रियते प्रत्युपेक्षणायाः, पूर्वं पात्रकाणि पश्चाद्वस्त्राणि एवमयं प्रगे विपर्यास एवं विकालेऽपि, सागारिकानागन्तुकान् ज्ञात्वा पुरुषविपर्यासमाह– 'आपुच्छित्ता' आपृच्छ्य गुरुमात्मीयामुपधिं ग्लानसत्कां वा प्रत्युपेक्षते, यदाऽऽभिग्रहिका उपधिप्रत्युपेक्षकाः पर्याप्यन्ते तदैवं करोति, आभिग्रहिका यदा न सन्ति तदा प्रथममात्मीयोपधिं प्रतिलेखयनो वितथमनाचारः स्यात् ॥४३९॥ [2]एवमपि वितथं स्यात्—

पडिलेहणं करेंतो, मिहो कहं कुणइ जणवयकहं वा ।
देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥४४०॥

प्रतिलेखयन् मिथः कथां–मैथुनसंसक्तां, जनपदकथां वा करोति, प्रत्याख्यानं श्रावकादेर्ददाति, वाचयति–

१ प्रतिलेखयत कार्यं इत्युत्सर्गतः ॥k॥ २ एव ××× स्यादित्यंशः कसंज्ञकप्रतौ नास्ति ।सं०।

प्रतिलेखनायां प्रमादी षट्-कायानां विराधकः ।

कश्चित् साधुं पाठयतीत्यर्थः, स्वयं प्रतीच्छतीति वा आलापं दीयमानं, एतच्च [1]कुर्वन् विराधको भवति ॥४४०॥ अत आह—

पुढवी आउक्काए, तेऊ-वाऊ-वणस्सइ-तसाणं ।
पडिलेहणापमत्तो, छण्हंपि विराहओ होइ ॥४४१॥

कथं पुनः षण्णां विराधकः ? ॥ ४४१॥ अत आह—

घडगाइपलोट्टणया, मट्टिअ अगणी य बीय कुंथाई ।
उदगगया व तसेयर, ओमुय संघट्ट झावणया ॥४४२॥

कुम्भकारशालादिवसतौ प्रतिलेखयन्ननु[2]पयुक्तस्तोयघटादि प्रलोठयेत्, स च घटो मृत्तिकाग्निबीजकुंथ्वादीनामुपरि प्रलुठितः, तत एतान् व्यापादयेत् । यत्राग्निस्तत्र वायुरप्यवश्यंभावी, अथवेत्थं षण्णां व्यापादकः—योऽसावुदकघटः प्रलोठितस्तद्गता एव त्रसाः पूतरकादयः स्युः । इतरे वनस्पतिकायाश्च तथा वस्त्रान्तेनोल्मुकं संघट्टयेत्ततश्च 'झा०' प्रदीपनकं तेन संजातं ततः संयमात्मविराधनेति ॥४४२॥

१ ० ०कुर्वन् षण्णामपि कायाना विरा० ॥k॥ २ अनभियुक्तः ॥k॥

[1]इय दव्वओ उ छण्हंपि, विराहओ भावओ इहरहा वि ।
उवउत्तो पुण साहू, संपत्तीए उवहओ अ ॥४४३॥

सुगमा ॥४४३॥ अथोपयुक्तः करोति ततः—

पुढवी आउक्काए, तेउवाउवणस्सइतसाणं ।
पडिलेहणमाउत्तो, छण्हंऽपाराहओ होइ ॥४४४॥

सुगमा ॥४४४॥ न केवलं प्रतिलेखना, अन्योऽपि यः कश्चिद् व्यापारोऽर्हन्मते स सर्वोऽपि कर्मक्षयाय स्यादेतदाह—

जोगे जोगे जिणसासणंमि, दुक्खक्खया पउंजंते ।
अण्णोण्णमबाहाए, असवत्तो होइ कायव्वो ॥४४५॥

दुःखक्षयाय प्रयुज्यमानः क्रियमाणोऽन्योऽन्याऽबाधयाऽसपत्नः—अविरुद्धो भवति कार्यः [कर्तव्य इत्यर्थः] । ॥४४५॥ अधुना फलमाह—

जोगे जोगे जिणसासणंमि, दुक्खक्खया पउंजंते ।
एक्केक्कंमि अणंता, वट्टंता केवली जाया ॥४४६॥ स्पष्टा ।

१ इयं गाथा मुद्रितद्रोणीयवृत्तौ नास्ति ।सं०।

एवं पडिलेहंता, अईयकाले अणंतगा सिद्धा ।
चोयगवयणं सययं, पडिलेहेमो जओ सिद्धी ॥४४७॥

एवं प्रतिलेखयन्तोऽतीतकालेऽनन्ताः सिद्धाः । एवमुक्ते नोदक आह—यद्येवं प्रतिलेखनायाः प्रभावस्तदा सदा प्रत्युपेक्षणां कुर्मः, किमन्येन योगेनानुष्ठितेन, [यतः ततः सिद्धिः] ॥४४७॥ आचार्य आह—

सेसेसु अवट्टंतो, पडिलेहंतो वि देसमाराहे ।
जइ पुण सव्वाराहण-मिच्छसि तो णं णिसामेहि ॥४४८॥

शेषयोगेष्ववर्त्तमानः प्रतिलेखनां कुर्वन्नपि देशत आराधकः । यदि पुनः सम्पूर्णाराधनमिच्छसि इति, सुगमम् ॥४४८॥

पंचिंदिएहिं जुत्तो गुत्तो, मणमाईतिविहकरणमाउत्तो ।
तवणियमसंजमंमि (प्र.मी), जुत्तो आराधओ होइ ॥४४९॥

'जुत्तो' यत्नवान् ॥४४९॥ इमां द्वारगाथां व्याख्यानयति—

इंदियविसयणिरोहो, पत्तेसु वि रागदोसणिग्गहणं ।
अकुसलजोगणिरोहो, कुसलोदय एगभावो वा ॥४५०॥

इन्द्रियविषयाः शब्दादयस्तेषां निरोधो गुप्तिः । अयम्, अप्राप्तानां निरोधः, तथा प्राप्तेष्वपि शब्दादिषु रागद्वेषनिग्रहः,

भणिता पञ्चेन्द्रियगुप्तता, '[1]मणमाई'त्याह – अकुशलानां मनोवाक्कायानां निरोधः कुशलानां मनोवाक्कायानामुदयः सा त्रिविधकरणगुप्तता, 'एग०' कुशलाकुशलयोगेषु समवृत्तिर्मध्यस्थता सा त्रिविधकरणगुप्तता ॥४५०॥ तप आह—

अब्भिंतर-बाहिरगं, तवोवहाणं दुवालसविहं तु ।
इंदियतो पुव्वुत्तो, णियमो कोहाइओ बिइओ ॥४५१॥

तपउपधानमु[2]पदधातीत्युपधानं तच्च द्वादशविधमपि तप उच्यते । नियममाह–स च द्विधा इन्द्रियनियमः पूर्वोक्तः । द्वितीयो नोइन्द्रियनियमो-क्रोधादीनां निग्रहः ॥४५१॥ संयमः सप्तदशप्रकारस्तथाह—

पुढविदगअगणिमारुअ-वणस्सईबितिचउक्पंचिंदी ।
अज्जीवपोत्थगाइसु, गहिएसु असंजमो जेणं ॥४५२॥

अजीवेषु पुस्तकादिषु पनकसंसक्तेषु गृहीतेष्वसंयमः– स्याद् अतस्तन्न ग्राह्यम् ॥४५२॥तथा—

पेहित्ता संजमो वुत्तो, उपेहित्ता वि संजमो ।
पमज्जेत्ता संजमो वुत्तो, परिट्ठावेत्ता वि संजमो ॥४५३॥

१ ४४९ तमगाथाद्दस्थ 'मण' इत्यादि० । २ उपदधाति = उपकरोतीतिभावः ।सं०।

प्रेक्षासंयमः—चक्षुषा निरूप्य यत्कार्यकरणं, उपेक्षा द्विधा तां वक्ष्यति, प्रमार्जयतः संयम उक्तः [1]परिष्ठापयितुश्च पानकाद्यतिरिक्तम् एवमेते चतुर्दश, मनोवाक्कायसंयमस्त्रिधोक्त एव द्रष्टव्यः, प्रथमगाथार्थः । एकाकिकारणिकगमन-यतनायामुक्तः, वनस्पतिगमनयतनायामजीवपुस्तकादिसंयम उक्तः ॥४५३॥ अधुना 'पेहित्ता संयम'त्ति आह—

ठाणाइ जत्थ चेए, पुव्वं पडिलेहिऊण चेएज्जा ।
संजयगिहि चोयणऽचोय-णे य वावारओवेहा ॥४५४॥

स्थानं—कायोत्सर्गादि यत्र चेतयते कर्तुमभिलषति, तत्र पूर्वं चक्षुषा निरीक्ष्य ततश्चेतयते—करोति, उपेक्षासंयमो द्विधा— साधु[१]गृहि[२]विषयः, नोदनाऽनोदनरूपः, यथाक्रमं साध्वपेक्षया—उपेक्षाशब्द 'ईक्षि'दर्शने 'उप' सामीप्येनेक्षा—उपेक्षा, गृह्यऽपेक्षयाऽवधीरणायां वर्त्तते[2] ॥४५४॥

[3]उवगरणं अइरेगं, पाणाई वाऽवहट्टु संजमणं ।
सागारिएऽपमज्जण, संजम सेसे पमज्जणया ॥४५५॥

उपकरणमतिरिक्तं पानकं वा, 'अवहट्टु'त्ति परित्यज्य किं?—संयमः स्यात्, आदिशब्दात् भक्तं परित्यज्य संयमः । सागारिकाणामग्रतो यत् पादाऽप्रमार्जनम् । शेषेषु प्रमार्जनं संयमः ॥४५५॥ योगत्रयमाह—

१ परिष्ठापयतश्च० ॥k॥ २ उपेक्षाशब्दोऽवधीरणायामिति भावः ॥सं०॥ ३ 'परिट्ठावेत्तावि संजमो' ४५४ गाथास्थं पदं व्याख्यायते ४५६तमगाथया ।सं०।

जोगतिग पुव्वभणिअं, समत्त पडिलेहणाए सज्झाओ ।
चरिमाए पोरिसीए, पडिलेह तओ उ (प्र.ताहिं) पायदुगं ॥४५६॥

योगत्रयं पूर्वमेव व्याख्यातं, 'मणमाईतिविह करणमाउत्त'इत्यत्र (४५० गाथायाम्) उक्तः सप्तदशधा संयमः, तद्व्याख्यानादुक्ता प्रतिलेखना, तत्समाप्तौ स्वाध्यायः कार्यः, सूत्रपौरुषीत्यर्थः, चरिमायां पादोनपौरुष्यां'तओ'त्ति तदा स्वाध्यायानन्तरं पात्रद्वयं प्रत्युपेक्षेत ॥४५६॥ तत्र पौरुषीप्रमाणमाह—

पोरिसिपमाणकालो, णिच्छयववहारिओ जिणक्खाओ ।
णिच्छयओ करणजुओ, ववहारमतो परं वोच्छं ॥४५७॥

पौरुष्याः प्रमाणकालो द्विधा निश्चयव्यवहाराभ्यां, निश्चयनयाभिप्रायेण करणयुक्तो गणितन्यायात् ।' ततः परं व्यावहारिको व्यवहारनयमतेन ॥४५७॥॥ तत्र निश्चयनयपौरुषीप्रमाणमाह—

[1]अयणाईय-दिणगणे, अट्ठगुणेगट्ठिभाइए लद्धं ।
उत्तरदाहिणमाई, पोरिसि पयसुज्झपक्खेवा ॥४५८॥



१ (प्र०) अट्ठठेगसट्ठिभागा, खयवुड्ढि होइ जं अहोरत्ते ।
तेणट्ठगुणकारो, एगट्ठी सूरतेएणं ॥प्रत्यन्तरगाथेयम् ॥

दक्षिणायने उत्तरायणदिनानि, उत्तरायणे दक्षिणायनदिनानि मीलयित्वा गण्यन्ते, स राशिरष्टभिर्गुण्यते, एकषष्ट्या भागो ह्रियते, लब्धेऽङ्गुलानि, द्वादशाङ्गुलैः पादः । यावत् पुनरपि मकरदिने चत्वारः [१]पादाः ॥४५८॥

व्यवहारपौरुषीप्रमाणमाह—

आसाढे मासे दोपया, पोसे मासे चउप्पया ।
चित्तासोएसु मासेसु, तिपया हवइ पोरिसी ॥४५९॥

आषाढमासे पौर्णमास्यां द्विपदा पौरुषी स्यात्, पोषे मासे पौर्णमास्यां चतुष्पदा, [२]चैत्राश्विनपौर्णमास्यां त्रिपदा पौरुषी स्यात् ॥४५९॥

अंगुलं सत्त-रत्तेणं, पक्खेणं तु दुअंगुलं ।
वड्ढए हायए वावि, मासेणं चउरंगुलं ॥४६०॥

१ अयनं-उत्तरायणं दक्षिणायनं च तस्य अतीतदिनानि-अतीतदिवसाः तेषा गणः सर्वोत्कृष्टतः त्र्यशीतिशतं तच्चाष्टगुणं जातं चतुर्दशशतानि चतुःषष्ट्यधिकानि, तत्र चैकषष्ट्या भागे हृते लब्धानि चतुर्विंशत्यङ्गुलानि, तत्रापि ·द्वादशभिरङ्गुलैः पादमिति द्वे पादे जाते, एतयोश्चोत्तरायणादौ च 'पय'त्ति पदोः शुद्धिः प्रक्षेपश्च, तत्र उत्तरायणप्रथमदिने चत्वारि पदानि आसन् ततस्तन्मध्यात् पदद्वयोत्सारणे कर्कसंक्रान्तिदिने पदद्वयं संजातं, दक्षिणायने द्वे पदे अभूता तन्मध्ये च द्वयोः प्रक्षिप्तयोर्मकरसंक्रान्तौ जातानि चत्वारि पदानि, इदमुत्कृष्टदिनयोः पौरुषीमानं, मध्यमदिनेष्वपि स्वधिया भावनीयम् । द्रोणीयवृत्तितः टिप्पणमिदं समुद्धृतं सुगमरीत्या बोधनाय । ॥सं०॥ २ ०चैत्राश्वयुजपौर्णमास्या ॥k॥

आषाढपौर्णमास्या आरभ्य सप्तरात्रेणाङ्गुलं वर्द्धते, मासेनाङ्गुलचतुष्टयं वृद्धिः, उत्तरोत्तरं तावद्यावत्पौषपौर्णमास्यां पदचतुष्टयम् । हानिरपि पौषपौर्णमास्याः परतस्तथैव तावद्यावदाषाढपौर्णमास्यां द्विपदा पौरुषी । आह ?— यदुक्तं-सप्तभिर्दिवसैरङ्गुलं वर्द्धते, तथा पक्षेणाङ्गुलद्वयं वर्धते, तदयं [1]विरोधः ?, आहाचार्यः— सत्यमेतत्किन्त्वनेनैतत् प्रख्याप्यते—वरं किञ्चिद् वृद्धायां पौरुष्यां पारितं, मा भून्न्यूनतायां प्रत्याख्यानभङ्गः ॥४६०॥

आसाढवहुलपक्खे, भद्दवए कत्तिए य पोसे य ।
फग्गुणवइसाहेसु य, बोद्धवा ओमरत्ताओ ॥४६१॥

एषां मासां कृष्णपक्षेष्वहोरात्राणि पतन्ति, 'ऊमरत्तं' अहोरात्रं, न तैः पतद्भिः पौरुष्यां न्यूनता ज्ञेया, अस्यार्थस्य ज्ञापनार्थम्, इदमुक्तं पौरुष्याः प्रमाणमुपगतम् ॥४६१॥ चरमपौरुषीप्रमाणमाह—

जेट्ठामूले आसाढ-सावणे छहिं अंगुलेहिं पडिलेहा ।
[2]अट्ठहिं बीअतियंमि अ, तइए दस अट्ठहि चउत्थे ॥४६२॥

ज्येष्ठामूले [मासे] आषाढे श्रावणे षड्भिरङ्गुलैर्यावद्यापि पौरुषी न पूर्यते तावच्चरमपौरुषी स्यात्, तदा पात्र-काणि प्रतिलेख्यन्ते ॥४६२॥ पूर्वं किं करोतीत्याह—

१ यदि पक्षेणाङ्गुलद्वयं वर्धते, तदा सार्द्धैः सप्तभिर्दिनैरङ्गुलवृद्धिः स्याद् कथं नु सप्तभिर्दिनैरिति विरोधमूलम् ॥सं०॥

२ भाद्रपदाश्वयुक्कार्तिकरूपे द्वितीयत्रिकेऽष्टभिरङ्गुलैर्मार्गशिरपौषमाघरूपे तृतीये त्रिके दशभिरङ्गुलैः फाल्गुनचैत्रवैशाखरूपे चतुर्थे त्रिकेऽष्टभि-रङ्गुलैर्यावन्न पूर्यते पौरुषी तावच्चरमपौरुषी स्यादित्युत्तरार्धगाथायाः भावः ॥सं०॥

उवऊंजिऊण पुव्वं, तल्लेसा जइ करेइ उवओगं ।
सोएण चक्खुणा घाण-ओ य जीहाऍ फासेणं ॥४६३॥

उपयुज्योपयोगं दत्त्वा यदुत मयाऽस्यां वेलायां पात्राणि प्रत्युपेक्ष्याणि, इत्युपयुज्य तल्लेश्य एव यतिः पात्रसमीपे उपयोगं करोति—मतिं व्यापारयति, श्रोत्रेण पात्रकोपयागं करोति, कदाचिद्भ्रमरादिगुञ्जनं शृणोति, चक्षुषोपयोगं च मुषिकोत्किरादिरजः कदाचित् स्यात्, घ्राणेन्द्रियेणोपयोगं करोति, सुरभकादिमर्दितः स्यात्, जिह्वया रसं ज्ञात्वा, यत्र गन्धस्तत्र रसोऽपि गन्धपुद्गलैरोष्ठो यदा व्याप्तः स्यात्, स्पर्शनेन्द्रियेणोपयोगं करोति, तत्र प्रविष्टमूषि(ष)कादिनिःश्वासवायुः काये लगति, एवमुपयुज्य पात्रकाणि प्रतिलेखयति ॥४६३॥ इमां गाथां किञ्चिदाह [भाष्यकारः]

पडिलेहणियाकाले, फिडिए कल्लाणगं तु पच्छित्तं ।
पायस्स पासु बेट्ठो, सोयादुवउत्त तल्लेसो ॥४६४॥

प्रतिलेखनाकाले 'फि०' अतिक्रान्ते एककल्याणकं प्रायश्चित्तं स्यात् । पात्रकपार्श्वे उपविष्टः श्रोत्रादिभिरुपयुक्तस्सन् तल्लेश्यो भवतीति ॥४६४॥ कथं करोतीत्याह—

मुहणंतएण गोच्छं, गोच्छगगहिअंगुलीहिं पडलाइं ।
उक्कुडुय भाणवत्थे, पलिमंथाईसु तं ण भवे ॥४६५॥

पूर्वं पात्रप्रतिलेखनात् पञ्चेन्द्रियोपयोगः

रजोहरणेन [णमु०] मुखवस्त्रिकया गुच्छकं प्रमार्जयति तदेव गुच्छकमङ्गुलीभिः कृत्वा पडलकानि प्रमा० अत्राह परः— उत्कुडुकः सन् भाजनस्य वस्त्राणि प्रमार्जयतु, यतो वस्त्रप्रतिलेखनोत्कुडुकेनैव कार्या, आहाचार्यः— तन्न, भवति, यतः पलिमन्थः सूत्रार्थयोः स्यात् । वस्त्रम् उत्कुडुकः सन्, पात्राणि प्रत्युपेक्षयन् पुञ्छने निषीदति, एवं चिरयतः सूत्रार्थयोः पलिमन्थोऽतो निषण्ण एव प्रति० ॥४६५॥ ततः किम्—

चउकोण भाणकण्णं, पमज्ज पाएसरीय तिगुणं तु ।
भाणस्स पुप्फगं तो, इमेहिं कज्जेहिं पडिलेहे ॥४६६॥

पडलप्रतिलेखनाऽनन्तरं पात्रकेसरिकया चतुरः कोणान् पात्रबन्धस्य प्रमार्जयति, पुनर्भाजनकर्णं प्रमा०, पुनस्तयैव 'तिगुणं'ति तिस्रो वारा बाह्यतोऽभ्यन्तरतश्च पात्रकं प्रत्यु०, ततः पात्रकस्य 'पुप्फगं'—बुध्नं प्रमा०, यद्येतानि वक्ष्यमाणलक्षणानि कारणानि न स्युः ॥४६६॥ तानाह—

मूसय-रय-उक्केरे, घणसंताणए इय ।
उदए मट्टिआ चेव, एमेया पडिवत्तिओ ॥४६७॥

कदाचित्तत्र मूषिकोत्केररजो लग्नं स्यात्ततस्तद्यनया अपनीयते, घनसंतानकः—कोलिकपुटं लग्नं स्यात्तद्यतनया अपनीयते । उदकं लग्नं, सार्द्रभूमेः मृत्तिका वा, एवमेताः प्रतिपत्तयः प्रकारा भेदा यदि न स्युस्ततो बुध्नं प्रत्युपेक्षेत ॥४६७॥ कुत उत्केरादिसम्भवः, अत आह—

णवगणिवेसे दूराउ, उक्केरो मूसएहिं उक्किण्णो ।
णिद्धमहि हरतणू वा, ठाणं भेत्तूण पविसेज्जा ॥४६८॥

नूतनग्रामादौ मूषिकैरुत्कीर्णरजसा पात्रकं गुण्डयते, स्निग्धायां सार्द्रायां भुवि, 'हर'० सलिलबिन्दव उन्मज्ज्य लगन्ति 'ठाणं'—पात्रकस्थापनकं भित्त्वा प्रविशेत्, तद्यतनां वक्ष्यति । कस्मादुदकस्थानमेवोक्तम् ? उच्यते—पृथ्वीकायघनसंतानयोस्तुल्ययतनाप्रतिपादनार्थः ॥४६८॥

कोत्थलगारिअघरगं, घणसंताणाइया व लग्गेज्जा ।
उक्केरं सट्ठाणे, हरतणु संचिट्ठ जा सुक्को ॥४६९॥

भ्रमरी गृहं मृण्मयं करोति, घनसन्तानिका वा लगति, एतेषां यतनामाह—मूषिकोत्केरः स्वस्थाने मुच्यते, अथ हरतनुर्लग्नस्तावत्प्रतिपालयति यावच्छुष्यति ॥४६९॥

इयरेसु पोरिसितिगं, संचिक्खावेत्तु तत्तिअं छिंदे ।
सव्वं वावि विगिंचइ, पोराणं मट्टिअं ताहे ॥४७०॥

इतरेषु भ्रमर्यादिषु प्रहरत्रयं यावत्तत्पात्रकं 'संचि'० प्रतिपालयति, यदि तावत्या वेलया नापैति ततः पात्रस्थापनादेस्तावन्मात्रं छित्त्वा परित्यज्यते, अन्येषां सद्भावे सर्वं त्यजति, यदि 'पोरा०' भ्रमरीगृहं सचेतनमृदा न कृतं

किन्तु पुराणमृदा ततः 'ताहे' तत्र प्रतिलेखनाकालेऽपनयति यदि तत्र कृमिकास्तया न प्रवेशिताः ॥४७०॥

पत्तं पमज्जिऊणं, अंतो बाहिं सइं तु पप्फोडे ।
केइ पुण तिण्णि वारा, चउरंगुल भूमिपडणभया ॥४७१॥

पात्रकमन्तर्बहिस्तिस्रो वारास्तिस्रो वाराः प्रमृज्यते, सकृत् प्रस्फोटयेत् पात्रमधोमुखं[कृत्वा], केचिदेवं त्रीन् वारान् प्रस्फोटयेत् भुव उपरि चतुर्भिरङ्गुलैर्धारयित्वा मा भूत्पतनभङ्गभयम् ॥४७१॥ किमुपधेः कर्त्तव्यं, क्व वा पात्रकं स्थाप्यमित्यत आह—

विंटिअ-बंधण-धरणे, अगणी तेणे य दंडियक्खोभे ।
उउबद्धधरणबंधण—वासासु अबंधणा ठवणा ॥४७२॥

उपधेर्विण्टिकाकरणेन बन्धना कार्या, पात्रस्यात्मपार्श्वे धरणं कार्यं, अनिक्षिप्तमित्यर्थः । अग्निस्तेनदण्डिकक्षोभभयादेवं क्रियते, कदा ? ऋतुबद्धे काले उपधेर्बन्धनं पात्रस्य धरणं, वर्षाकाले उपधेरबन्धनं कार्यं, पात्रकं निक्षिप्यते एकदेशे स्थाप्यते, प्रयोजनं वक्ष्यति ॥४७२॥ एतां गाथां व्याख्यानयति—

रयताण भाण धरणा, उउबद्धे णिक्खिवेज्ज वासासु ।
अगणीतेणभएण व, रायक्खोभे विराहणया ॥४७३॥

रजस्त्राणस्य भाजनस्य धरणमनिक्षेपणं ऋतुबद्धे, वर्षासु निक्षिपेत्, धरणादौ कारणमग्न्यादिभयम् ॥४७३॥

परिगलमाणा हीरेज्ज, डहणा भेया तहेव छक्काया ।
गुत्तो व सयं डज्झे, हीरेज्ज व जं च तेण विणा ॥४७४॥

अग्न्यादिक्षोभे निर्गच्छत उपधिरबद्धः परिगलन्नपह्रियते दह्यते वा । यावत् पात्रकं गृह्यते, गृह्णतो भेदो वा स्यात्, ततः षट्कायविराधना, 'गुत्तो०' मूढो वा उपधिग्रहणे स्वयं दह्यते म्लेच्छैरपह्रियते वा यत् तेन पात्रोपधिना विनाऽऽत्मादिविराधना ॥४७४॥ वर्षासु उपधेरबन्धनकारणमाह—

वासासु णत्थि अगणी, णेव य तेणा उ दंडिया सत्था।
तेण अबंधण ठवणा, एवं पडिलेहणा पाए ॥४७५॥

वर्षासु नास्त्यग्निस्तेनभयं दण्डिका राजानः स्वस्थास्तिष्ठन्ति । तेन कारणेनाऽबन्धनमनिक्षेपणं चोपधिपात्रयोः । उक्ता पात्रविषया प्रत्युपेक्षणा, ततश्चोक्तमुपकरणप्रतिलेखनाद्वारम् ॥४७५॥

  

वर्षास्वपधे-
रबन्धन-
कारणम् ।

स्थण्डिलद्वारमाह—

अणावायमसंलोए, अणवाए चेव होइ संलोए ।
आवायमसंलोए, आवाए चेव संलोए ॥४७६॥

अनापातोऽनभ्यागमः स्वपक्षपरपक्षयोर्यत्र तदनापातम्, न संलोको दर्शनं यत्र तदनालोकम्, अनापातासंलोकम् भेदः १ अनापातसंलोकं २ आपातासंलोकं ३ आपातसंलोकं ४ चतुर्भेदं, चतुर्थभेदं व्याख्यानयति, ततोऽन्ये विधिप्रतिषेधरूपाः सुज्ञाताः स्युः ॥४७६॥

तत्थावायं दुविहं, सपक्खपरपक्खओ य णायव्वं ।
दुविहं होइ सपक्खे, संजय तह संजईणं च ॥४७७॥

आपातं [स्थण्डिलं] द्विधा स्वपक्षपरपक्षभेदेन, स्वपक्षो द्विधा संयतसंयतीभेदात् ॥४७७॥

संविग्गमसंविग्गा, संविग्गमणुण्णएयरा चेव ।
असंविग्गावि दुविहा, तप्पक्खियएयरा चेव ॥४७८॥

संयताः—संविग्नाः असंविग्नरूपाश्च । संविग्ना—मनोज्ञाऽमनोज्ञाश्च, असंविग्नाः संविग्नपाक्षिका इतरे-असंविग्नपाक्षिकाः निर्द्धर्मा नैव श्लाघन्ते तपस्विनस्तु ये निन्दन्ति ॥४७८॥ उक्तः स्वपक्षः परपक्षमाह—

परपक्खेवि अ दुविहं, माणुसतेरिच्छअं च णायव्वं ।
एक्केक्कं पि अ तिविहं, पुरिसित्थिणपुंसगे चेव ॥४७९॥

परपक्षोऽपि द्विधा मानुषतिर्यग्भेदात्, एकैकं त्रिविधं पुरुषस्त्रीनपुंसकभेदात् ॥४७९॥

पुरिसावायं तिविहं, दंडिअ कोडुंबिए य पागइए ।
ते सोयऽसोयवाई, एमेवित्थी नपुंसा य ॥४८०॥

पुरुषापातं त्रिधा–(१) दण्डिको–राजा (२) कौटुम्बिकः–श्रेष्ठ्यादिः (३) प्राकृतिकः । त्रयाणां तेषामेकैकः शौचवादी अशौचवादी चेति एवं स्त्रीनपुंसकयोरपि दण्डिकादिभेदा ज्ञातव्याः॥४८०॥ मनुष्यमध्ये द्वितीयपरपक्षभेदमाह–

एए चेव विभागा, परतित्थीणंपि होइ मणुयाणं ।
तिरियाणंपि विभागा, अओ परं कित्तइस्सामि ॥४८१॥

एत एव विभागभेदा दण्डिकादयः परतीर्थिकानामपि भवन्ति, तिरश्चामपि विभागान् कीर्त्तयिष्यामि ॥४८१॥

दित्ताऽदित्ता तिरिआ, जहण्णमुक्कोसमज्झिमा तिविहा ।
एमेवित्थीनपुंसा, दुगंछिअदुगुंछिआ णेया ॥४८२॥

द्विधा तिर्यञ्चः, दृप्ताऽदृप्ताश्च–मारणकाऽमारणकाश्चेति, पुनरेकैकः त्रिधा–मूल्यमङ्गीकृत्य जघन्योत्कृष्टमध्यमाः

क्रमेण मेण्ढकादि-हस्त्यश्वादि-गवादयश्च, एवमेते स्त्रीनपुंसकभेदात् त्रिधा, सर्व एव जुगुप्सिताऽजुगुप्सिताश्च ज्ञेयाः॥४८२॥ एतेषां मध्ये केषामापाते गम्यमित्यत आह—

गमण मणुण्णे इयरे, वितहायरणंमि होइ अहिगरणं ।
पउरदवकरण दट्ठुं, कुसील सेहऽण्णहाभावो ॥४८३॥

मनोज्ञानामापाते गम्यम्, इतरेषाममनोज्ञानामापाते न गम्यं, यतो वितथाचरणे—अन्यसामाचार्याचरणे शिष्यकाणां स्वसामाचारीपक्षपातजा रतिः स्यात्, ततोऽधिकरणम् । कुशीलापातेऽपि न गम्यं, तेषां प्रचुरद्रवेण शौचकरणं दृष्ट्वा शैष्यकाणामन्यथाभावः स्यात् । यदुतैते शुचयः, न त्वस्मत्साधवः, शोभना एते, तन्मध्ये यान्ति, संयतीनां त्वापात एकान्तेनैव वर्जनीयः ॥४८३॥ परपक्षमानुषापातदोषानाह—

जत्थऽम्हे वच्चामो, जत्थ य आयरइ णाइवग्गो णे ।
परिभव कामेमाणा, संकेयगदिण्णया वावि ॥४८४॥

तत्पुरुषा एवमाहुः—यत्र वयं यामः, आचरति यत्र नः—अस्मदीयो ज्ञातिवर्गः पुरीषोत्सर्गं, तयैव दिशैते व्रजन्ति, ततश्चैते परिभवमस्माकं कुर्वन्ति नूनमेते कामयन्ति स्त्रियं, दत्तसंकेता वा तत्र यान्ति ॥४८४॥

दव-अप्प-कलुस-असई, अवण्ण-पडिसेह-विप्परीणामो ।
संकाईया दोसा, पंडित्थि गहे य जं चऽण्णं ॥४८५॥

कदाचिद् द्रवमल्पं स्यात् कलुषं वा, अभावो [वा] द्रवस्य स्यात् । ततोऽवर्णोऽश्लाघा प्रवचने स्यात् । प्रधानो वा कश्चिद् दृष्ट्वा भिक्षादि प्रतिषेधयति, विपरिणामोऽभिनवश्राद्धस्य, शङ्कादयो दोषाः पण्ढस्त्रीविषयाः स्युः । 'ग०' पण्डकस्त्रीभ्यां बलाद् गृहीतस्य यच्चान्यदाकर्पणोड्डाहादिर्भवति ॥४८५॥ तिर्यगापातदोषमाह—

आहणणाई दित्ते, गरहिअतिरिएसु संकमाईया ।
एमेव य संलोए, तिरिए वज्जेत्तु मणुयाणं ॥४८६॥

दृप्ततिर्यगापाते आहननादिदोषाः । गर्हितेषु गर्दभा-[भ्या]दिषु मैथुनाशङ्काद्याः, एवमेते आपातदोषाः, एवमेव संलोके मनुष्याणां दोषाः । तिर्यग्संलोके न दोषाः ॥४८६॥ संलोके दोषानाह—

कलुसदवे असई य व, पुरिसालोए हवंति दोसा उ ।
पंडित्थीसुवि एए, खद्धे वेउव्वि मुच्छा य ॥४८७॥

कलुषद्रवे द्रवाभावे वा पुरुषालोके त एव दोषाः स्युः । पण्डकस्त्रीसंलोकेऽपि शङ्कादयो दोषाः, खद्धे बृहत्प्रमाणे शेफे 'वे०' विक्रियामापन्ने पण्ढस्त्रियो मूर्च्छानुरागः स्यात् । उक्तं चतुर्थं स्थण्डिलम् ॥४८७॥

आवायदोस तइए, बिइए संलोयओ भवे दोसा ।
ते दोवि णत्थि पढमे, तर्हि गमणं तत्थिमा मेरा ॥४८८॥

आपातदोषास्तृतीये, संलोकदोषा द्वितीये, प्रथमे स्थण्डिले आलोकसंलोकजनिता दोषा न सन्ति, ततस्तत्रैव-गम्यम् ॥४८८॥ तत्रेयं मेरा—

कालमकाले सण्णा, कालो तइयांइ सेसयमकालो ।
पढमा पोरिसि आपुच्छ, पाणगमपुप्फियऽण्णदिसिं ॥४८९॥

एका काले संज्ञा, अन्याऽकाले संज्ञा स्यात् । कालसंज्ञा या तृतीयपौरुष्यां स्यात्, शेषकाले या संज्ञा स्यात् साऽकालसंज्ञा, अकालसंज्ञा यदि प्रथमपौरुष्यां स्यात् तत आपृच्छ्य साधून्—'बहिर्भुवं कश्चिदेष्यति नवे'ति तदनुरूपं पानकं काञ्जिकमानयति अ[1]पुष्पितं, येन स्वच्छतया उदकभ्रान्तिः स्यात् । अन्यथा दिशोदकं गृह्यते, अन्यथा बहिर्भुवं याति, येनैते काञ्जिकेन शौचं कुर्वन्तीति शङ्का न स्यात् ॥४८९॥

अइरेगगहण उग्गाहिएण आलोअ पुच्छिउं गच्छे ।
एसा उ अकालंमी, अणहिंडिअ हिंडिआ कालो ॥४९०॥

अतिरिक्तं तत्पानकं गृह्यते, अन्यसाधोः कार्यं स्यात्, सागारिकाग्रे उच्छोलना वा क्रियते, उद्ग्राहितेन—पात्रबन्धबद्धेन पात्रकेणाऽऽनीय गुप्तं सत् आचार्याग्रे आलोच्य तमापृच्छ्य गच्छन्ति । इयमकालसंज्ञाऽहिण्डितानां सतां

१ अपुष्पितं = तस्कारहितमित्यर्थः ॥स०॥

स्यात्, कालसंज्ञा पुनः हिण्डितानां भिक्षाटनोत्तरकालं भुक्त्वा या, सा कालसंज्ञा, अन्ये त्वाहुः—अहिण्डितानामर्धपौरुषीकरणोत्तरकाले या सा कालसंज्ञा, हिण्डितानां भिक्षोत्तरकालं या सा का० ॥४९०॥ भुक्त्वोत्तरकालसंज्ञायाम् अयं विधिः—

कप्पेऊणं पाए, एक्केक्कस्स उ दुवे पडिग्गहए ।
दाउं दो दो गच्छे, तिण्हऽट्ठ दवं तु घेत्तूणं ॥४९१॥

पात्रकाणि कल्पयित्वा, एकैकस्य साधोः पतद्ग्रहद्वयं दत्त्वा, एकस्तस्यैवाऽन्यो यियासोः, द्वौ द्वौ गच्छतः । नैकैको याति, साधुत्रयार्थे[र्थं] यावदुदकं स्यात्तावन्मात्रं गृहीत्वा व्रजतः ॥४९१॥

अजुगलिआ अतुरंता, विकहारहिआ वयंति पढमं तु ।
णिसिइत्तु डगलगहणं, आवडणं वच्चमासज्ज ॥४९२॥

न युगलितौ—समश्रेणिस्थौ यातः । किन्त्वयुगलितौ अत्वरमाणास्ततश्चङ्क्रमणभुवं प्राप्य निषीदयित्वा ? [निषद्य] डगलकानामपानप्रोञ्छनार्थं ग्रहणं करोति । 'आ०' प्रस्फोटनां डगलकानां कीटकादिपातनार्थं करोति । 'वच्च०' श्लथं कठिनं वा विज्ञाय वर्चस्तदनुरूपाणि गृह्णाति ॥४९२॥ कीदृशे स्थण्डिले उपविशतीत्याह—

अणावायमसंलोए, परस्सऽणुवघाइए ।
समे अज्झुसिरे यावि, अचिरकालकयंमि अ ॥४९३॥

स्थण्डिलं यियासोः विधिः ।

विथिण्णे दूरमोगाढे; णासण्णे बिलवज्जिए ।
तसपाणबीयरहिए, उच्चाराईणि वोसिरे ॥४९४॥ दारगाहा।

अनापातासंलोके [१]ऽनुपघातिके [२] समे [३] अज्झुसिरे [४] अचिरकाले कृते [५] विस्तीर्णे [६], दूरमोगाढे [७] नासन्ने [८] बिलवर्जिते [९] त्रसप्राणबीजरहिते [१०] इत्येतस्मिन् दशदोषरहिते स्थण्डिले उच्चारादि व्युत्सृजति । अधुना एकादिसंयोगेन यावन्ति स्थण्डिलानि स्युस्तावन्त्याह ॥४९३॥ ॥४९४॥

एग दुग तिग चउक्कग-पंचग छसत्तट्ठणवगदसगेहिं ।
संजोगा कायव्वा, भंगसहस्सं चउव्वीसं ॥४९५॥

उभयमुहं रासिदुगं, हेट्ठिलाणंतरेण भय पढमं ।
लद्धहरासिविभत्ते, तस्सुवरि गुणंतु संजोगा[1] ॥

एक–द्वि–त्रि–चतुः–पञ्च–षट्–सप्ताष्टनवदशैः संयोगाः कार्याः, ततः सर्वैर्निष्पन्नं भङ्गकसहस्रं चतुर्विंशत्युत्तरं स्यात् । तथाहि– एकसंयोगादिषु क्रमेण ।१०।४५।१२०।२१०।१२०।४५।१०।१, तत्रैकः शुद्धः ॥४९५॥ अनापातासंलोकं व्याख्यातमेवानुपघातिकादि व्याख्यानयति—

१ एकद्व्यादिसांयोगिकभेदानयमपद्धतिदर्शिकेयं गाथा ॥सं०॥

आयापवयणसंजम-तिविहमुग्घाइमं(यं) तु णायव्वं ।
आराम वच्च अगणी, पिट्टण असुई य अण्णत्थ ॥४९६॥

उपघातिकं त्रिविधं, आत्मोपघातिकं (१) प्रवचनोप० (२) संयमोप० (३) कथमात्मोपघातिकादि स्यादित्याह— यथासंख्येन आरामादौ व्युत्सृजतः पिट्टनं-ताडनं स्यात्, वर्चोमये स्थाने व्युत्सृजता अशुचिरिति लोके प्रवचनोपघातः स्यात् । अङ्गारादौ भुवि व्युत्सृजतः सोऽङ्गारदाहकः अन्यत्र अङ्गारार्थं प्रज्वालयति, ततः संयमोपघातः, अतोऽनुपघातिके व्युत्सृजनीयम्, अनुपघातिकं गतम् ॥४९६॥ सममाह—

विसम पलोट्टण आया, इयरस्स पलोट्टणंमि छक्काया ।
झुसिरंमि विच्छुगाई, उभयक्कमणे तसाईया ॥४९७॥

विषमे व्युत्सृजतः साधोरेव लुण्ठनं स्यादत आत्मोप०, इतरयोः कायिकीपुरीषयोर्लुठने षट्काया विराध्यन्ते, अतः समे व्युत्सृजनीयम् । झुसिरे—तृणादिच्छन्ने वृश्चिकादिभिरात्मविराधना, 'उभ०' मूत्रपुरीषाऽऽक्रमणेन त्रसादयो विराध्यन्तेऽतः संयमोप०, अतो अझुसिरे व्युत्सृजनीयम् ॥४९७॥ अचिरकालकृतमाह—

जे जंमि उउंमि य कया, पयावणाईहि थंडिला ते उ ।
होंतियरंमि चिरकया, वासा वुच्छे य बारसगं ॥४९८॥

स्थण्डिलेऽनुपघातिक-समदोपादि-वर्णनम् ।

यानि यत्र ऋतौ प्रतापनादिभिरचित्तीकृतानि तस्मिन्नेव ऋतौ योग्यानि, इतरस्मिन् ऋतौ चिरकृतानि मिश्रीभूतान्ययोग्यानि स्युः। यत्र प्रदेशे वर्षाकालं ग्रामो वा स्थितः स द्वादशवर्षाणि स्थण्डिलं भवति ॥४९८॥ विस्तीर्णमाह—

हत्थायामं चउरस्स जहण्णं जोयणे बिछक्कियरं।
चउरंगुलप्पमाणं, जहण्णयं दूरमोगाढं ॥४९९॥

विस्तीर्णं द्विधा-जघन्यमुत्कृष्टञ्च, जघन्यं हस्तायामं चतुरस्रं च, इतरदुत्कृष्टं-योजनानां द्विषट् १२ योजनानि विस्तीर्णमित्यर्थः। दूरमोगाढमाह-चतुरङ्गुलप्रमाणम् अधो यदवगाढं जघन्यं तत्। मध्यममुत्कृष्टं चतुर गुलानामधस्ताद्विज्ञेयं ॥४९९॥ आसन्नमाह—

दव्वासण्णं भवणाइयाण, तहियं तु संजमायाए।
आयापवयणसंजम-दोसा पुण भावआसण्णे ॥५००॥

आसन्नं द्विधा द्रव्यभावभेदेन, तत्र भवनाद्यासन्ने व्युत्सृजतो द्रव्यासन्नं, तत्र संयमात्मोपघातश्च गृहपतिना-साधुकृतपुरोपत्याजने, रुष्टः सन् कदाचित्ताडयति यथाक्रमम्, अतो द्रव्यासन्ने न व्युत्सृजनीयम्, भावासन्ने तीव्रपुरिषादिवेगे आत्मप्रवचनसंयमोपघातदोषाः स्युः, कथं? स हि साधुरन्ययोगव्यापृतस्तावदास्ते, यावदतीव भावासन्नो जातस्ततस्त्वरितं यानि केनचिद् धूर्तेनोपलक्ष्य भावासन्नतां धर्म(प्र)पृच्छनव्याजेनार्द्धपथ एव धृतः, ततस्तस्य पुरीषवेगं

धारयत आत्मोप०, तत्रैव व्युत्सृजतः प्रवचनोपघातः, तत्रैवाप्रत्युपेक्षितेऽप्युत्सृजतः संयमोपघातोऽपि, अतोऽनागतमेव गम्यम् ॥५००॥ बिलवर्जितमाह—

हौंति बिले दो दोसा, तसेसु बीएसु वावि त चेव ।
संजोगओ अ दोसा, मूलगमा हौंति सविसेसा ॥५०१॥

बिलप्रदेशे व्युत्सृजतो दोषद्वयं संयमात्मोपघातरूपं स्यात्, त्रसेषु जीवेषु च व्युत्सृजतस्तावेव दोषौ, संयोगतो द्व्यादिदोषसंबन्धेन मूलगमात् मूलभेददोषात् सविशेषतरा–द्विगुणा(दयो)दोषा भवन्ति, मूलभेदे तावदापातसंलोकदोषदुष्टता, ततो द्विदोषसंयोगतः सविशेषा दोषाः स्युः ॥५०१॥ निर्दोषस्थण्डिले प्राप्तस्य विधिमाह—

दिसिपवणगामसूरिय–छायाए पमज्जिऊण तिक्खुत्तो ।
जस्साग्गहोत्ति काऊण, वोसिरे आयमेज्जा वा ॥५०२॥

पूर्वोत्तरदिशोः पवनग्रामसूर्याणां पृष्ठं न देयं व्युत्सृजतो लोकविरोधात्, छायायां त्रिर्वारान् प्रमृज्य व्युत्सृज्य [व्युत्सृजनीयं], यस्यायमवग्रहस्तेनानुज्ञातव्यम् इत्येवं कृत्वा, आचमन्य निर्लेपनं कुर्वन्नेवमेव कुर्यात् ॥५०२॥ एतां गाथां व्याख्यानयति—

उत्तरपुव्वा पुज्जा, जम्माए निसियरा अहिवडंति ।
धाणाऽरिसा य पवणे, सूरियगामे अवण्णो उ ॥५०३॥

निर्दोषे स्थण्डिले प्राप्तस्य विधिः ।

उत्तरपूर्वे पूज्ये, याम्या दक्षिणा तस्यां न पृष्ठं देयं, यतो निशिः निशाचरा 'अहि०' अभिमुखमागच्छन्ति, 'रात्रौ दक्षिणाया उत्तरस्यां दिशि देवा यान्ती'ति लोकश्रुतिः। पवनपृष्ठे घ्राणार्शः स्यात्, सूर्यग्रामयोः पृष्ठे दत्तेऽयशः ॥५०३॥ छायामाह—

संसत्तग्गहणी पुण, छायाए निग्गयाए वोसिरइ।
छायाऽसइ उण्हंमिवि, वोसिरिअ मुहुत्तयं चिट्ठे ॥५०४॥

संसक्तग्रहणिः [1]संसक्तोदर इत्यर्थः। निर्गतच्छायायां, तदभावे व्युत्सृज्य मुहूर्त्तं तिष्ठति, येन ते स्वयं परिणमन्ति ॥५०४॥

उवगरणं वामे ऊरुगंमि, मत्तं च (प्र. त्तो य) दाहिणे हत्थे।
तत्थऽण्णत्थ व पुंछे, तिहि आयमणं अदूरंमि ॥५०५॥

रजोहरणादि वामे ऊरुणि स्थापयति, मात्रं दक्षिणे हस्ते, प्रोञ्छनं चाऽपानस्य वा करोति, यदि कठिनं पुरीषं ततस्तत्रैव प्रोञ्छयति, अथ श्लथं ततोऽन्यत्र, त्रिभिश्चुलुकैराचामेदासन्नप्रदेशे ॥५०५॥ स्थण्डिलयतमाह—

१ कृमिससक्तोदरः इति भावः ॥ स० ॥

निर्दोषे स्थण्डिले प्राप्तस्य विधिः।

पढमासाइ अमणुण्णेयराण, गिहियाण वावि आलोए ।
पत्तेयमत्त कुरुकुय, दवं च पउरं गिहत्थेसु ॥५०६॥

प्रथमस्याऽनापातऽसंलोकस्थण्डिलस्य समनोज्ञसंविग्नापातस्थण्डिलस्याभावेऽमनोज्ञापातस्थण्डिले गम्यं, तदभावे-इतरेषां कुशीलानां संविग्नपाक्षिकाणां गम्यं, तदभावेऽसंविग्नपा० तदभावे गृहस्थालोके स्थण्डिले गम्यं प्रत्येकं २ तानि मात्रकाणि गृहीतानि तैः प्रचुरद्रवेण कुरुकुचां-(अपान)पादप्रक्षालनादिकां कुर्वन्ति गृहस्थाऽऽलोके ॥५०६॥

तेण परं पुरिसाणं, असोयवाईण वच्च आवायं ।
इत्थिणंपुसालोए परंमुहा कुरुकुया सा उ ॥५०७॥

तदभावे पुरुषापाते-तत्राप्यशौचवादिनां व्रज आपाते, तदभावे स्त्रीनपुंसकालोके, पराङ्मुखो व्युत्सृजति, कुरुकुचा सैव कार्या ॥५०७॥

तेण पर आवायं, पुरिसेअर इत्थियाण तिरियाण ।
तत्थ वि अ परिहरेज्जा, दुगुंछिए दित्तचित्ते य ॥५०८॥

ततः परं तिरश्चां पुरुषाणां 'इत०'-नपुंसका[नां] स्त्रीणामापाते व्युत्सृजन्ति, तत्रापि जुगुप्सितदीप्तान् परिहरेत् ॥५०८॥

तत्तो इत्थिणपुंसा, तिविहा तत्थवि असोयवाईसु ।
तहिअं तु सद्दकरणं, आउलगमणं कुरुकुया य ॥५०९॥ दारं ।

तदभावे स्त्रीनपुंसकापातस्थण्डिले [1]गम्यं, तत्र स्त्रीनपुंसकं त्रिधा—दण्डिक-कौटुम्बिक-प्राकृतभेदात् । तत्राप्यशौचवादिनाम् आपाते गच्छन् अन्येषामाशङ्कानिवृत्त्यर्थं काशितादि करोति परस्परं वा जल्पन्तो यान्ति, [2]आकुलगमनं प्रसभं कार्यं, कुरुकुचा पूर्ववत् कार्या ॥५०९॥ अवष्टम्भद्वारमाह—

अव्वोच्छिण्णा तसा पाणा, पडिलेहा ण सुज्झई ।
तम्हा हट्ठ(प्र.समट्ठस्स)पहट्ठस्स, अवट्ठंभो ण कप्पई ॥५१०॥

अवष्टम्भः स्तम्भादौ न कार्यः, यतः प्रत्युपेक्षितेऽपि पश्चादपि 'अव्यवच्छिन्नाः' अनवरतं त्रसाः प्राणिनः स्युस्ततः प्रत्युपेक्षणा न शुद्धयति । हृष्टो—नीरोगः प्रहृष्टः समर्थस्तस्यावष्टम्भो न कल्पते ॥५१०॥ के ते त्रसा इत्याह—

संचर कुंथुद्देहिअ-लूयावेहे तहेव दाली अ ।
घरकोइलिआ सप्पे, विस्संभरउंदुरे सरडे ॥५११॥

तत्रावष्टम्भे कुंथ्वादयः संचरन्ति । लूता कोलियकस्तत्कृतो वेधो—भक्षणं स्यात् । [3]दाला—राजिस्तस्यां वृश्चिकादे-



१ गन्तव्यमित्यर्थः ।सं०। २ एकत्र मिलित्वा गमनमिति भावः ।सं०। ३ दाली—'फाट' इति भाषायाम् ।सं०।

राश्रयः स्यात् । 'गृहकोकिलिका' उपरिष्टान् मूत्रयति, तन्मूत्रेण चक्षुप उपघातः स्यात्, सर्पो वाऽऽश्रितः स्यात्, विश्वम्भरो जीवविशेषः, उन्दुरः सरडो वा ॥५११॥ इमां गाथां व्याख्यानयति—

संचारगा चउद्दिसि, पुव्विं पडिलेहिएवि अण्णंति ।
उद्देहि मूल पडणे, विराहणा तदुभए भेओ ॥५१२॥

संचारकाः कुंथ्वादयः परिभ्रमन्ति चतुर्दिक्षु, तत्रावष्टम्भे प्रत्युपेक्षितेऽपि अन्ये आगच्छन्ति । उद्देहिकादिभक्षितस्तम्भादौ अवष्टब्धवतः पतनं स्यात्, द्विधा विराधना—संयमात्मविषया, भेदश्च पात्रकस्य ॥५१२॥

लूयाइचमढणा संजमंमि, आयाए विच्छुगाईया ।
एवं घरकोइलिआ, अहिउंदुरसरडमाईसु ॥५१३॥

'लूतादिच०' मर्दने संयमवि० वृश्चिकादिभिरात्मवि० गृहकोकिलाऽहिउन्दुरसरडविषया संयमात्मवि० ॥५१३॥

अपवादमाह—

अतरंतस्स उ पासा, गाढं दुक्खंति तेणऽवट्ठंभे ।
संजयपट्ठी थंभे, सेल छुहाकुड्डविट्ठीए ॥५१४॥ दारं ।

अशक्नुवतो ग्लानादेः पार्श्वानि गाढं दुष्यन्ति, ततोऽवष्टभ्नाति, संयतपृष्ठे स्तम्भे पाषाणमये सुधालिप्ते कुड्ये,

उपधिविण्टलिकां वा कुड्यादौ कृत्वा, अवष्टम्भं करोति ॥५१४॥ मार्गद्वारमाह—

मार्गद्वारम्

पंथं तु वच्चमाणा, जुगंतरं चक्खुणा व पडिलेहा ।
अइदूरचक्खुपाए, सुहुमतिरिच्छिग्गय ण पेहे ॥५१५॥

'युगान्तरं' युगं—चतुर्हस्तप्रमाणं चक्षुषा प्रत्युपेक्षेत यतोऽतिदूरचक्षुः सूक्ष्मप्राणिनस्तिर्यगागतान्न पश्यति ॥५१५॥

मार्गे षट्क विराधना ।

अच्चासण्णणिरोहे, दुक्खं दट्ठुंपि पायसंहरणं ।
छक्कायविओरमणं, सरीर तह भत्तपाणे य ॥५१६॥

अत्यासन्ने निरोधे चक्षुषः दृष्ट्वाऽपि प्राणिनां दुःखेन पादसंहरणं स्यात् । षट्कायविराधना, शरीरवि०, भक्तपानयोश्च वि० ॥५१६॥ एतद्गाथार्द्धं व्याख्यानयति—

उड्ढमुहो कहरत्तो, अवयक्खंतो वियक्खमाणो य ।
वातरकाए वहए, तसेतरे संजमे दोसा ॥५१७॥

ऊर्ध्वमुखो यान् कथारक्तो 'अव०' पृष्ठतो निरूपयन् विविधं सर्वासु दिक्षु पश्यन्, 'बा०' पृथिव्यादीनि व्यापादयति, त्रसेतरांश्च पृथिव्यादीन् स्थावरकायान्, ततः संयमे दोषाः ॥५१७॥ शरीरविराधनामाह—

णिरवेक्खो वच्चंतो, आवडिओ खाणुकंटविसमेसु ।
पंचण्ह इंदियाणं, अण्णतरं सो विराहेज्जा ॥५१८॥

निरपेक्षो व्रजन्नापतितः स्थाणुकण्टकविषमेषून्नतेषु पञ्चानामिन्द्रियाणामन्यतरत् स विराधयेत् ॥५१८॥ भक्तपानविराधनामाह—

भत्ते वा पाणे वा, आवडियपडियस्स भिण्णपाए वा ।
छक्कायविओरमणं, उड्डाहो अप्पणो हाणी ॥५१९॥

आपतितश्चासौ पतितश्च [आपतितपतितः] तस्य साधोर्भग्नपात्रके भक्ते वा – प्रोज्झिते पानके वा षट्कायव्युपरमणं स्यात् उड्डाहश्च। आत्महानिः– क्षुधादिबाधनम् ॥५१९॥

दहि-घय-तक्कं पयमंबिलं व, सत्थं तसेतराण भवे ।
खद्धंमि य जणवाओ, वहुफोडो जं च परिहाणी ॥५२०॥

दधिघृततक्रपयःकाञ्जिकानि गृहीतानि यदि स्युस्ततस्तानि शस्त्रं त्रसानाम्, इतरेषां–पृथिव्यादीनां च भवेत्, 'ख०' प्रचुरे भक्ते लोकेन दृष्टे जनापवादः, उड्डाहश्च '(व)०' एते बहुभक्षका इति। आत्मपरितापनादिहानिः ॥५२०॥ पात्रविराधनादोषानाह—

पत्तं च मग्गमाणे, हवेज्ज पंथे विराहणा दुविहा ।
दुविहा य भवे तेणा, परिकम्मे सुत्तपरिहाणी ॥५२१॥

पात्रं चाऽन्विषति सति ग्रामादौ भवेत्पथि संयमात्मवि०, स्तेना द्विधा— (१) शरीरो(२)[1]पधिहारिणः । लब्धेऽपि पात्रे तत्परिकर्मयतः तद्व्यापारे लग्नस्य सूत्रार्थपरिहाणिः ॥५२१॥

एसा पडिलेहणविही, कहिआ भे धीरपुरिसपण्णत्ता ।
संजमगुण(प्र.तव)ड्ढगाणं, णिग्गंथाणं महरिसीणं ॥५२२॥
एयं पडिलेहणविहिं, जुंजंता चरणकरणमाउत्ता ।
साहू खवंति कम्मं, अणेगभवसंचिअमणंतं ॥५२३॥ (दारं)

'भे'—भवतां ॥५२२॥ अनन्तकर्मपुद्गलनिर्वृत्तत्वादनन्तं, अनन्तानां वा भवानां हेतुर्यत्तदनन्तम्, उक्तं मार्गप्रत्युपेक्षणाद्वारम्, तत्प्रतिपादनादुक्तं[2] प्रत्युपेक्षणाद्वारम् ॥५२३॥ पिण्डद्वारमाह—

१ ०अपहारिणः० ॥k॥ २ ०दुक्तं मौलप्रत्युपेक्षणाद्वारम् ।ऽ।

पिंडं व एसणं वा, एत्तो वोच्छं गुरूवएसेणं ।
गवेसणगहणघासेसणाए तिविहाए विसुद्धं ॥५२४॥

पिण्डं वक्ष्ये, एषणा च—गवेषणा (१) ग्रहणैषणा (२) ग्रासैषणा (३) । अनया त्रिधैषणया विशुद्धो यः पिण्डस्तं वक्ष्ये इति योगः ॥५२४॥ पूर्वं पिण्डमाह—

पिंडस्स उ णिक्खेवो, चउक्कओ छक्कओ य कायव्वो ।
णिक्खेवं काऊणं, परूवणा तस्स कायव्वा ॥५२५॥

पिण्डनं पिण्डः 'पिण्डि[1] संघाते' पिण्डः इत्यस्य निक्षेपश्चतुष्कः षट्को वा, निक्षेपं कृत्वा प्ररूपणा पिण्डस्य कर्त्तव्या ॥५२५॥ चतुष्कनिक्षेपमाह—

णामं ठवणापिंडो, दव्वपिंडो य भावपिंडो य ।
एसो खलु पिंडस्स उ, णिक्खेवो चउव्विहो होइ ॥५२६॥

नामस्थापनाद्रव्यभावैश्चतुर्द्धा पिण्डः । एष चतुर्विधोऽपि क्षेत्रकालपिण्डक्षेपे [2]षट्कः ॥५२६॥ नामपिण्डमाह—

१ पिडुङ् संघाते ।S। २ ०षट्कानामपि पिण्डमाह ।।k।।

गोण्णं समयकयं वा, जं वावि हवेज्ज तदुभएण कयं ।
तं बिंति णामपिण्डं, ठवणापिंडं अओ वोच्छं ॥५२७॥

तच्च नाम '[1]गोण्णं' स्याद्, यथा 'गुडपिण्ड' इति, तथा अन्यत्समयेन-सिद्धान्तेन कृतं—'समयकृत" 'यथा से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिण्डवायपडियाए पविट्ठे समाणे जं जाणिज्जा अंन्न—पाण—गन्धेत्यादि । यद्यप्यसौ पानार्थं प्रविष्टस्तथापि पिण्डार्थं प्रविष्ट इत्युच्यते । एष समयसिद्धः पिण्डः । यद्वा नाम 'तदुभयकृत" स्यात् लोकलोकोत्तरकृतं यथा—'गाहावइकुलं पिण्डवायपडियाए पविट्ठेण पिण्डो चेव सत्तुगाणं कीरउ लद्धउ गुडपिण्डो वा' तत्र लोके गुडः 'पिण्डक' उच्यते एप समयेऽप्येवमेव 'पिण्डक' उच्यते, एवं गुणविशिष्टं नामपिण्डं ब्रुवते ॥५२७॥ अतः स्थापनापिण्डं वक्ष्ये—

अक्खे वराडए वा, कट्ठे पोत्थे व चित्तकम्मे वा ।
सब्भावमसब्भावा, ठवणापिंडं वियाणाहि ॥५२८॥

स्थापना द्विधा—यदैकोऽक्षः पिण्डबुद्ध्या कल्प्यते—तदाऽसद्भावस्थापना यदा पुनस्तेऽक्षास्त्रिप्रभृतय एकत्र स्थाप्यन्ते पिण्डबुद्ध्या तदा सद्भावस्थापना । एवं वराटकेषु काष्ठकर्मणि पुस्तके चित्रकर्मणि ज्ञेयम् ॥५२८॥ ज्ञशरीर—भव्यशरीरव्यतिरिक्तद्रव्यपिण्डमाह—



१ गोण्णं = गुणविशिष्टं = गुणनिष्पन्नं नाम ॥सं०॥

तिविहो य दव्वपिंडो, सच्चित्तो मीसओ य अच्चित्तो ।
अच्चित्तो य दसविहो, सच्चित्तो मीसओ णवहा ॥५२९॥

द्रव्यपिण्डस्त्रिधा सचित्तमिश्राचित्तभेदात्तत्राऽचित्तो दशविधः, सचित्तो मिश्रश्च नवप्रकारः ॥५२९॥ अचित्तपिण्डमाह—

पुढवी आउकाए, तेउवाऊवणस्सई चेव ।
विअ-तिअ-चउरो पंचिंदिया य लेवो य दसमो उ ॥५३०॥

पृथ्वीकायपिण्डः । [1]एवमप्कायादिषु योज्यं, पात्रार्थं लेपपिण्डश्च दशमः । एवमयं दशधा अचित्तपिण्डः ॥५३०॥ योऽयमचित्तः स सचित्तपूर्वकः स्यादतः सचित्तमाह—

पुढविकाओ तिविहो, सच्चित्तो मीसओ य अचित्तो ।
सच्चित्तो पुण दुविहो, णिच्छयववहारिओ चेव ॥५३१॥

पृथिवीकायस्त्रिधा—सचित्तादिभेदेन, तत्र सचित्तो द्विधा निश्चयव्यवहाराभ्याम् ॥५३१॥

१ अप्कायपिण्डो यावत् पञ्चेन्द्रियपिण्डो ज्ञेयः ।सं०।

णिच्छयओ सच्चित्तो, पुढविमहापव्वयाण बहुमज्झे ।
अच्चित्तमीसवज्जो, सेसो ववहारसच्चित्तो ॥५३२॥

निश्चयतः सचित्तः पृथिवीनां—रत्नशर्कराप्रभृतीनां सत्कः । महापर्वतानां हिमवदादीनां बहुमध्ये—मध्यदेशभागे । 'अचि०' अचित्तमिश्राभ्यां वर्जितोऽरण्यादौ पृथ्वीकायः स व्यवहारसचित्तः ॥५३२॥ मिश्रमाह—

खीरदुमहेट्ठ पंथे, कट्ठोल्ला इंधणे य मीसो य ।
पोरिसी एगदुगतिगं, बहुइंधणमज्झथोवे अ ॥५३३॥

क्षीरद्रुमाः – उदुम्बरादयः तेषामधो यः पृथ्वीकायः स मिश्रः, ते हि मधुरस्वभावाः स्युः । पथि यः पृ० [स मिश्रः] 'क०' हलकृष्टो यः पृथ्वीकायस्तत्क्षणादेव आर्द्रो शुष्कः क्वचिन्मिश्रः पृथिवीकायः, '०इंधण'त्ति गोमयो भण्यते, कुम्भकृता स सद्रवो आणिओ, तेण मिलिओ संतो पृथ्वीकायो मिश्रः स्यात् । [1]पोरिसिएगदुगतिगं यथाक्रमं बह्विन्धनं स्वल्पः पृ०, मध्ये तु इन्धनेऽर्द्धमिन्धनस्यार्द्धं पृ०, स्वल्पेन्धनः पृ० ॥५३३॥ अचित्तमाह—

१ पोरिसीत्यादिग्रन्थस्यायं भावः- बह्विन्धनं स्वल्पः पृथ्वीकायः पौरुषीमात्रं मिश्रः अर्ध्दमिन्धनमर्ध्दं पृथ्वीकायः पौरुषीद्वितयं यावन्मिश्रः, अल्पेन्धनं बहुः पृथ्वीकायः पौरुषीत्रयं यावन्मिश्रो भवतीति बोध्यम् ।सं०।

सीउण्हखारखत्ते, अग्गीलोणूस अंबिले णेहे ।
व(वि.पा०)क्कंतजोणिएणं, (वि.पा०) पओयणं तेणिमं होति ॥५३४॥

शीत–उष्ण–क्षार–[1]क्षत्राग्नि–लवण–ऊष–काञ्जिक–स्नेहशस्त्रैरभिहतो व्युत्क्रान्तयोनिकः । तेनैवं प्रयोजनं वक्ष्यमाणं स्यात् ॥५३४॥

अवरद्धिग, विसबंधे, लवणेण व सुरभिउवलएणं च ।
अच्चित्तस्स उ गहणं, पओयणं होइ जं चऽण्णं ॥५३५॥

अवरद्धिगा–लूता फोडिया तस्यामुत्थितायां दाहोपशमार्थं अचित्तपृथ्वीकायेन परिषेकः क्रि०, अथवा अवरद्धिगा सर्पदंशस्तस्मिन् परिषेकादिः क्रि०, दंशे विषे वा पातिते तया अचेतनमृत्तिकया बन्धो दीयते, लवणेन कार्यं स्यात् । 'सु०' गन्धारोहकेन पामादौ कार्यं स्यात्, इदमन्यत् प्रयोजनम् ॥५३५॥

ठाणणिसीयतुयट्टण–उच्चाराईणि चेव उस्सग्गो ।
घट्टग-डगलग-लेवो, एमाइ पओयणं बहुहा ॥५३६॥

अचेतने पृथ्वीकाये स्थानं कायोत्सर्गः, घट्टकः–पाषाणो येन पात्रकं लेपितं सद् घृष्यते, डगलका अपानप्रो–

1 क्षत्रं करीषविशेषः ।

ञ्छनार्थं, लेपकः पात्रकाणां, [एवमादिप्रयोजनमचित्तेन] पृथ्वीकायेन ॥५३६॥ अप्कायमाह, अयमपि त्रिधा, सचित्तमाह—

घणउदहीघणवलया, करगसमुद्दद्दहाण बहुमज्झे ।
अह णिच्छयसच्चित्तो, ववहारणयस्स अगडाई ॥५३७॥

घनोदधयो-रत्नप्रभापृथिव्यादीनां, घनवलयानि च करकाश्च समुद्रबहुमध्ये, द्रहमध्ये निश्चयतः सच्चित्तोऽप्कायः, [1]व्यवहारताऽगडादीनां [अगडाद।] कूपादावप्कायः सचित्तः ॥५३७॥ मिश्रमाह—

उसिणोदगमणुवत्ते, दंडे वासे य पडिअमेत्ते य ।
मोत्तूणाएसतिगं, चाउलउदगं बहुपसण्णं ॥५३८॥

उष्णोदकमनुद्वृत्ते दण्डे मिश्रं स्यात्, वर्षे पतितमात्रे च मिश्रं । मुक्त्वाऽऽदेशत्रिकं चाउलोदकं बहुप्रसन्नमचेतनं स्यात् ॥५३८॥ के च ते आदेशा इत्याह—

आएसतिगं बुब्बुय-विन्दू तह चाउला ण सिज्झंति ।
मोत्तूण तिण्णि वेए, चाउलउदगं बहु पसण्णं ॥५३९॥

यावद् बु[2]द्बुदा न निवर्त्तन्ते तावन्मिश्रं, यावद् बिन्दवो भाण्डलग्ना न शुष्यन्त्यन्ये । एके यावत्तण्डुलानि सिध्यन्ति,

१ 'अगडाई'ति कूपादौ ।Z। २ ०बुद्बुदा निवर्तन्ते तावन्मिश्रम् ।k।

अचित्ताप्काय-पिण्डस्तदुपयोगश्च ।

एतेऽनादेशाः, यत आधारवशाच्चिरेण शीघ्रं वा भवति । तस्माद् बहु प्रसन्नमचित्तमेव अथवा मुक्त्वा बहुप्रसन्नं चाउलोदकम् आदेशत्रितयेऽपि मिश्रं स्यात् ॥५३९॥ अचित्तमाह—

सीउण्ह खारखत्ते, अग्गीलोणूस अंबिले णेहे ।
वक्कंतजोणिएणं, पओयणं तेणिमं होति ॥५४०॥

पूर्ववत् ॥५४०॥ अचित्ताप्कायेनेदं प्रयोजनम्—

परिसेयपियणहत्थाइ-धोयणा चीरधोयणा चेव ।
आयमण भाणधुवणे, एमाइ पओयणं बहुहा ॥५४१॥

परिषेकः सेचनं दुष्टव्रणाद्युत्थिते सति क्रियते, तथा पानं, हस्तादिधावनं चीरधावनं च क्रि० [1]आचमनं भाजनप्रक्षालनं क्रियते । एवमादीनि प्रयोजनानि ॥५४१॥ ऋतुबद्धे चीरधावने एते दोषाः—

उउबद्धधुवण बाउस, बंभविणासो अठाणठवणं च ।
संपाइमवाउवहो, पावण आतोपघातो य ॥५४२॥

१ जेमन भाजन० ।ऽ।

ऋतुबद्धे यदि वस्त्रधावनं क्रि०, तदा वाकुसिकः स्याद्, भूषणशील इत्यर्थः, यदा च विभूषणशीलस्तदा ब्रह्मविनाशः, तथाऽस्थानस्थापनं स्याद्, नूनमयं कामी, तेनाऽऽत्मानं मण्डयति, अयोग्यतास्थापनमित्यर्थः । संपातिमसत्त्वानां वायोश्च वधो भवति प्लवनेन च सत्त्ववधो भ०, हस्तकण्डकनिपतनादात्मोपघातश्च ॥५४२॥ आह—यद्येवं न धावितव्यान्येव चीवराणि? उच्यते—वर्षाकाले प्रक्षालयति, अप्रक्षालन एते दोषाः—

अइभारचुडणपणए, सीयलपावरण अजीरगेलण्णे ।
ओभावणकायवहो, वासासु अधोवणे दोसा ॥५४३॥

[1]मलिनानि गुरूणि भवन्ति, 'चुड०' जीर्यते, पनकश्च लगति, शीतलप्रावरणेऽजीर्णं स्यात्ततो ग्लानता भ०, 'ओहा०' परिभवो भ०, कायवधश्च भ०, तान्यार्द्राणि श्च्योतन्ति सन्ति अप्कायादि [2]विनाशयन्ति, एते वर्षास्वधावने दोषाः ॥५४३॥ कदा प्रक्षालयन्ते इत्याह—

अप्पत्ते चिय वासे, सव्वं उवहिं धुवंति जयणाए ।
असइए व दवस्स उ, जहण्णओ पायणिज्जोगो ॥५४४॥

अप्राप्ते वर्षाकाले अर्द्धमासमात्रेण सर्वामुपधिं प्रक्षालयन्ति । प्रचुरप्रासुकोदकाऽभावे जघन्येन पात्रनिर्योगं—

१ मलेनातिभवन्ति० ।k। ।    २ विनाशंति ।k।

पात्रोपकरणं प्रक्षालनीयं, येन गृहस्था भिक्षां प्रयच्छन्तो न जुगुप्सन्ते ॥५४४॥ आह–किं सर्वेषां वर्षपर्यन्त एवोपधिः प्रक्षाल्यते ? न इत्याह—

आयरियगिलाणाणं, मइला मइला पुणोवि धोवंति ।
मा हु गुरूण अवण्णो, लोगंमि अजीरणं इयरे ॥५४५॥

इतरेषां ग्लानानां चीवराऽप्रक्षालने ग्लानता ॥५४५॥ प्रक्षालनाकाले एतानि न विश्राम्यानि—

पायस्स पडोयारं, दुणिसज्जे तिपट्टपोत्तियहरणं ।
एते ण उ विस्सामे, जयणा संकामणा धुवणा ॥५४६॥

पात्रस्य पडोयारं–परिकरं पात्रबन्धादिकं तथा रजोहरणनिषद्या एकोर्णिकी द्वितीया मध्यवर्त्तिनी क्षौमा, 'तिपट्ट' संस्तारोत्तरचोलपट्टाः, मुखवस्त्रिका, रजोहरणं च एतानि न विश्रामयेत्, अनुदिनमुपभोग्यत्वात् । यतनया वस्त्रान्तरितेन हस्तेनान्यस्मिन् वस्त्रे षट्पदाः[दीः] सङ्क्रामयति, ततो धावति ॥५४६॥ शेषोपधिं विश्रामयतो विधिमाह—

अब्भितरपरिभोगं, उवरिं पाउणइ णातिदूरे य ।
तिण्णि य तिण्णि एक्कं, णिसिं तु काउं परिच्छेज्जा ॥५४७॥

अभ्यन्तरपरिभोग्यं क्षौमकल्पं शेषकल्पयोरुपरि प्रावृणोति, तिस्रो रात्रीर्यावत्, आत्मासन्ने तमेव कल्पं रात्रित्रयं स्थापयति, एकरात्रिमात्मोपरि कीलकादौ स्था०, एवं सप्तदिनानि परीक्षा कार्या, अथवैवं सप्तवाराः कृत्वा पुनः काये वस्त्रं प्रावृत्य परीक्षणं, यदि षट्पदा[द्यो] न लगन्ति ततः प्रक्षालनीयम् ॥५४७॥

केई एक्केक्कणिसिं, संवासेउं तिहा परिच्छंतिं ।

पाउणिय जइ ण लग्गंति, छप्पया ताहे धोवेज्जा ॥५४८॥

केचनाचार्या एवमाहुः—तं कल्पं शेषकल्पयोरुपरि एकां रात्रिं, द्वितीयामात्माऽऽसन्ने, तृतीयामात्मोपरि कीलकादौ करोति, एवं त्रिरात्रं यावत्परीक्ष्य पुनः प्रावृत्य षट्पदा[द्य]भावे प्रक्षालयति ॥५४८॥

णिव्वोदग्गस्स गहणं, केई भाणेसु असुइ पडिसेहो ।

गिहिभायणेसु गहणं, ठियवासे मीसिअं छारो ॥५४९॥

ते साधवो वस्त्रप्रक्षालनार्थं नीव्रोदकग्रहणं कुर्वन्ति । केचिदेवमाहुः—स्वभाजनेषु नीव्रोदकग्रहणं कार्यम् ?, तन्न, यतो लोका एवं भणन्ति—अशुचय एते, ततश्च प्रतिषेधं कुर्वन्त्यतो गृहिभाजनेषु ग्रहणं कार्यं स्थिते प्रवर्षणे, यतो वर्षति मिश्रं स्यादन्तरिक्षोदकपातात्, गृहीते च क्षारः क्षेपणीयो येन सच्चित्तं न स्यात् ॥५४९॥

गुरुपच्चक्खाणगिलाण-सेहमाईण धोवणं पुव्वं ।

तो अप्पणा पुव्वमहा-कडे य इतरे दुवे पच्छा ॥५५०॥

पूर्वं गुरोः, ततः प्रत्याख्यानिनः—अनशनिनः समाध्यर्थम्, ततो ग्लानस्य, पश्चात्सेहस्य, तत आत्मनः क्षालयत्युपधिम्। पूर्वमेकखण्डानि अतूर्णितानि च तानि यथाकृतानि प्रक्षालयति । 'इ०' इतरौ द्वौ वस्त्रभेदौ पश्चात्, एकान्यल्पपरिकर्माणि—मनाक् तूर्णितानि। अन्यानि बहुपरिकर्माणि द्विधा सीवितानि [तूर्णितानि च] अल्पपरिकर्माणि क्षालयित्वा बहुपरिकर्माणि क्षा० ॥५५०॥

अच्छोडपिट्टणासु य, ण धुवे धावे पतावणं ण करे ।
परिभोगमपरिभोगे, छायातव पेह कल्लाणं ॥५५१॥

स साधुः प्रक्षालयन्नाच्छोटयति रजकवत्। नाऽपि पिट्टयति स्त्रीवत् । किन्तु हस्तेन मनाग् यतनया धावति, धौतानि च वस्त्राणि नाऽऽतपे प्रतापयति, किन्तु परिभोग्यान्यन्यानि च यथासंख्यं छायातपयोर्दत्ते, तानि च शुष्यन्ति सन्ति प्रेक्षतेऽपहरणभयात्, पश्चात्तस्य कल्याणं प्रायश्चित्तं दीयते ॥५५१॥ अग्निकायमाह—

इट्टगपागाईणं, बहुमज्झे विज्जुयाइ णिच्छइओ ।
इंगालाई इयरो, मुम्मुरमाई य मिस्सो उ ॥५५२॥

अयमपि त्रिधा, तत्र सचित्त इष्टकापाकादिमध्ये विद्युदादिको नैश्चयिकः स्यात्, अङ्गारादिश्चेतरो व्यावहारिकः, मुर्मुरादिको मिश्रः ॥५५२॥ अचित्ताऽग्निकायशरीरोपयोगं दर्शयन्नाह—

ओदण वंजणपाणग-आयामुसिणोदगं च कुम्मासा ।
डगलगसरक्खसूई, पिप्पलमाई य परिभो(प्र.उवओ)गो ॥५५३॥

ओदनं-कूरादि, व्यञ्जनं-तिम्मणं, पानकं-आचाम्लं, आयामम् अन्नश्रावणं, उष्णोदकं, कुल्माषाश्चैतान्यग्निनिर्वृत्त्यानि, [1]ततश्चभिरुपयोगः क्रियते । अग्निनिर्वर्त्तितशरीरोपयोगमाह-डगलका-इष्टकाखण्डा अतीव पक्वाः, सरक्खो-भस्म, सूच्यः, पिप्पलकः-क्षुरकः एवमादिभिरुपयोगः क्रि०, अग्निशरीराणि द्विधा-बद्धेल्लियाणि मुक्केल्लियाणि, तत्राऽत्र [2]मुक्केल्लियाणि द्रष्टव्यानि ॥५५३॥ वायुकायमाह-

सवलयघणतणुवाया, अतिहिमअतिदुद्दिणे य णिच्छइओ ।
ववहार पायमाई, अक्कंतादी य अच्चित्ता ॥५५४॥

सवलया घनतनुवाता निश्चयतः सचित्ताः अतिहिमपाते यो वायुः, अतिदुर्दिने च स च नैश्चयिकः [सचित्तः] प्राच्यादीनां दिशां यो वायुः स व्यावहारिकः सचित्तः । कर्दमादौ क्रान्ते सति यो भवति सोऽचित्तः, स च पञ्चधा अक्कंते (१) धंते (२) पीलिए (३) सरीराणुगए (४) समुच्छिमे । (५) तत्थ 'अक्कंते' चिक्खल्लाइसु, 'धंते'-दतियाईसु, 'पीलिओ'-पुत्तचम्माइसु, 'सरीराणुगओ'-ऊसासनीसासवाऊ-'समुच्छिमो'-तालियंटाईहिं जणिओ ॥५५४॥



१ ततश्चैतान्यग्निनिवृत्त्याग्नितनुभिरुप० ।k। २ प्रष्टव्यानि ।k।

मिश्रमाह । आह–किं पुनः कारणं मिश्रः पश्चाद् व्याख्यायते ? उच्यते–अचित्तेनैव साधुव्यवहारः स च गृहीतः सन्नेव मिश्रीभवत्यस्यार्थस्य ज्ञापनार्थम्—

हत्थसयमेग गंता, दइउ अचित्तो विइय सुमीसो ।
तइयंमि उ सच्चित्तो, वत्थी पुण पोरिसिदिणेहिं ॥५५५॥

अच्चित्तवायुभृतो दतिस्तरणार्थं गृह्यते, स चैकहस्तशते गत्वाऽप्यचित्तः । द्वितीयहस्तशतारम्भे मिश्रः, तृतीय–हस्तशतप्रारम्भे सच्चित्तः स्यात् क्षेत्रतः । कालमङ्गीकृत्याह– 'वत्थी'त्यादि, कालो द्विधा–स्निग्धो रूक्षश्च, एकैकस्त्रिधा–उत्कृष्टमध्यमजघन्यभेदात्, तत्र वस्तिर्वायुपूरितः, स्निग्धे त्रिविधेऽपि काले एकद्वित्रिपौरुषीभिर्द्वित्रिचतुः–पौरुषीभिस्त्रिचतुःपञ्चपौरुषीभिर्यथाक्रमं अचित्तमिश्रसच्चित्तः स्यात् । रूक्षे त्रिविधेऽपि काले एकद्वित्रिभिः द्वित्रिचतुर्भिस्त्रिचतुःपञ्चभिर्दिनैर्यथाक्रममचित्तो मिश्रः सचित्तः स्यात् ॥५५५॥ अचित्तेन वायुना यत् प्रयोजनं तदाह—

दइएण वत्थिणा वा, पओयणं होज्ज वाउणा मुणिणो ।
गेलण्णंमि व होज्जा, सचित्तमीसे परिहरेज्जा ॥५५६॥

दतिना तीर्यते, वस्तिना ग्लानत्वे कार्यं स्यात् ॥५५६॥ वनस्पतिकायमाह—

सव्वो वऽणंतकायो, सच्चित्तो होइ णिच्छयणयस्स ।
ववहाराउ अ सेसो, मीसो पव्वायरोट्टाई ॥५५७॥

सर्वं एवानन्तवनस्पतिकायो निश्चयतः सच्चित्तः, शेषप्रत्येकवनस्पतिर्व्यवहारतः सचित्तः, मिश्रः प्रम्लानानि फल-कुसुमपर्णानि, रुट्टो-लोट्टः तन्दुलमुखानि सन्ति तत्र अतो मिश्रः ॥५५७॥ अचित्तवनस्पतिकायप्रयोजनमाह—

संथारपायदंडग-खोमिअकप्पाइ पीढफलगाई ।
ओसहभेसज्जाणि य, एमाइ पओयणं तरुसु ॥५५८॥

संस्तारकः शुष्कशुषिरतृणैः क्रियते, कल्पद्वयं कार्पासिकं स्याद्, औषधमन्तरुपयोगि, भेषजं बहिः ॥५५८॥ द्वीन्द्रियाद्याह—

बियतियचउरो पंचिंदिया य, तिप्पभिइं जत्थ उ समेंति ।
सट्ठाणे सट्ठाणे, सो पिंडो तेण कज्जमिणं ॥५५९॥

द्वित्रिचतुःपञ्चेन्द्रिया एकैके त्रिभृतयो यत्र समवायं गच्छन्ति स द्वीन्द्रियादिपिण्डः, ते स्वस्थाने २ समवायं गच्छन्ति, द्वीन्द्रियाद्वीन्द्रियैरेव मिलितैर्द्वीन्द्रियपिण्डः, तथा त्रीन्द्रियास्त्रीन्द्रियैरेव त्रिप्रभृतिभिर्मिलितैस्त्रीन्द्रियपिण्डः । एवं यावत्पञ्चेन्द्रिया इति स्वस्थाने २ स पिण्डोऽयं सच्चित्तः । यश्चाऽचित्तपिण्डो द्वीन्द्रियादिसत्कस्तेनेदं कार्यम् ॥५५९॥

बेइंदियपरिभोगो, अक्खाण ससंखसिप्पमाईणं ।
तेइंदियाण उद्देहि-गाइ जं वा वए विज्जो ॥५६०॥

द्वीन्द्रियाणां परिभोगः—अक्षाणां चन्दनकानां सशङ्खा याः शुक्तयः तदादीनां, [1]शङ्खेषु शुक्तिषु चौषधानि क्रियन्ते, त्रीन्द्रियाणां उद्देहिकादीनां मध्ये यथा वदति वैद्यः, उद्देहिका मृदा कार्यम् स त्रीन्द्रियपरिभोगः ॥५६०॥ चतुरिन्द्रियपरिभोगमाह—

चउरिंदियाण मक्खिय-परिहारा आसमक्खिया चेव ।
पंचिंदिअपिंडंमि उ, अव्ववहारी उ णेरइया ॥५६१॥

मक्षिकापरिहारेण—मक्षिकापुरीषेणोर्ध्वविरेकः क्रियते, अश्वमक्षिकयाऽक्ष्णोः पतितान्यक्षराण्युद्ध्रियन्ते, पञ्चेन्द्रियाणां मध्ये अव्यवहारिणो नैरयिकाः, शेषैस्तु कार्यम् ॥५६१॥ तत्र तिर्यक्पञ्चेन्द्रियोपयोगमाह—

चम्मट्ठिदंतणहरोम-सिंगअमिलाइछगणगोमुत्ते ।
खीरदहिमाइयाणं, पंचिंदिअतिरिअपरिभोगो ॥५६२॥

चर्मणा कुष्ठिनो भवति कार्यम्, अस्थ्ना [2]गृध्रनलकेन, दन्तेन सूकरादिसत्केन नखेन वा, उरभ्रादिसत्कैः रोमभिः कम्बलिका स्यात्, उरभ्रा तत्पुरीषं पामादौ उपयुज्यते ॥५६२॥ मनुष्योपयोगमाह—

---

[1] शङ्खेषु चौपधानि ।k।    [2] वाय्वादिव्याध्यपनयनार्थं पादे बध्यते ।सं०।

सच्चित्तो पव्वावण, पंथुवदेसे य (प्र.साइ) भिक्खुदाणाई ।
सीसट्ठिय अच्चित्ते, मीट्ठिसट्ठि सरक्खपहपुच्छा ॥५६३॥

अचित्तमनुष्योपयोगमाह—'सी०' अचित्तेन शिरःकपालेन [१]पित्तारुएसेण घसिऊण दिज्जइ, वेषपरावर्त्तादि क्रियते । मिश्रोपयोगमाह—मिश्रः—अस्थियुतो यः सरजस्कः कापालिकस्तस्य पथि पृच्छोपयोगः ॥५६३॥

खमगाइकालकज्जा—तिएसु पुच्छेज्ज देवयं किंचि ।
पंथे सुभासुभे वा, पुच्छेज्ज व दिव्वमुवओगो ॥५६४॥

क्षपकादिकश्चिद्, आदिशब्दादाचार्याः, कालकार्यादौ सङ्घादिकार्ये वोत्पन्ने पृच्छेत्, पथि वा गच्छतः शुभाशुभं दुर्भिक्षादि पृच्छेत् काश्चिद्देवताम्, अयं दिव्यपिण्डोपयोगः ॥५६४॥ अचित्तं दशमं लेपपिण्डमाह—

अह होइ लेवपिंडो, संजोगेणं णवण्ह पिंडाणं ।
णायव्वो णिप्फण्णो, परूवणा तस्स कायव्वा ॥५६५॥

अथ भवति लेपपिण्डो नवानां पिण्डानां संयोगेन निष्पन्नो ज्ञेयः, कथं ?, दुचक्का गड्डिया, तत्थ अक्खे मक्खिए पुढविकायस्स रजो लग्गइ, आउक्काओ नदीए उत्तरणे लग्गइ, तेउकाओ तत्थ लोहं घसइ, वाऊ तत्थेव, 'यत्राग्निस्तत्र वायुना भाव्यं, वणस्सई अक्खो, बि ति चउ संपातिमा पाणा पडन्ति । पंचिंदियाणवि वरत्ता घस्सई । एवं



१ पित्तारुएसे० ॥ पित्तारुए' इति मुद्रितबृहट्टीकायाम् ।सं०।

संजोगेण निष्पन्नो [लेपः] ॥५६५॥ अधुना तस्य प्ररूपणां—व्याख्यामाह—

अव्वकालिअ-लेवं, भणंति लेवेसणा णवि अ दिट्ठा ।
ते वत्तव्वा लेवो, दिट्ठो तेलुक्कदंसीहिं ॥५६६॥

अर्वाकालिकं केचिल्लेपं प्रतिपादयन्ति, सदोषत्वाल्लेपस्य, यतः समये वस्त्रपात्रैषणे उक्ते, लेपैषणा नोक्ता, आहाचार्यः—'ते इदं वक्तव्याः'—यतो लेपो दृष्टस्त्रैलोक्यदर्शिभिः । पात्रैषणां प्रतिपादयता जिनेन लेपैषणोक्तैव, अन्यथा तद्व्यतिरेकेण पात्रग्रहणाऽनुपपत्तेः, पात्रं हि लेपादिसंस्कृतमेवोपयोगभाग् भवति ॥५६६॥ एतद्गाथाया एव व्याख्यामाह—

आया-पवयण-संजम-उवघाओ दीसई जओ तिविहो ।
तम्हा वदंति केई, ण लेवगहणं जिणा विंति ॥५६७॥

पर आह—आत्म—प्रवचन—संयमोपघातस्त्रिविधो दृश्यतेऽतो वदन्ति केचित्, न लेपग्रहणं जिना ब्रुवते ॥५६७॥ पर एव तत् त्रैविध्यमाह—

रहपडणउत्तिमंगाइ-भंजणं घट्टणे य करघाओ ।
अह आयविराहणया, जक्खुल्लिहणे पवयणंमि ॥५६८॥

साधोर्लेपं गृह्णतो दुःस्थितस्य पतनेनोत्तमाङ्गादिभञ्जनं, घट्टने—चलने रथस्य हस्तपीडा, आत्मविराधनेयं, यक्षः—श्वा स हि यक्षोऽक्षप्रदेशमुल्लिहति सति प्रवचनोपघातः ॥५६८॥

गमणागमणे गहणा, तिट्ठाणे संयमे विराहणया ।
महि-सरि-उम्मुग-हरिआ, कुंथू वासं रओ व सिया ॥५६९॥

लेपार्थं गमने ग्रहणे च आगमने संयमवि०, कथं ?,-गच्छतो मही सचित्ता भ०, सरिदुत्तरणेऽप्कायवि०, गृह्णन् कदाचिद् उल्मुकं चालयति [ततश्चाग्निविराधना] । गन्त्री हरितकुंथ्वादिमध्यव्यवस्थिता स्यात्, [1]कदाचिद् गतस्य वर्षं स्यात् रजःसंपातो वा ततस्तद्विराधना ॥५६९॥ एवमुक्ते सूरिराह—

दोसाणं परिहारो, चोयग ! जयणाइ कीरई तेसिं ।
पाए उ अलिप्पंते, ते दोसा हुंति णेगगुणा ॥५७०॥

यतनया लेपस्य ग्रहणं कुर्वतस्तेषां दोषाणां परिहारः, पात्रेऽलिप्यमाने त एव [2]दोषास्तदुक्ता अनेकगुणाः—अनेकप्रकाराः स्युः ॥५७०॥ [दोषान् दर्शयन्नाह—]

1 भङ्ग्यन्तरेण संयमविराधना दर्शयन्नाह—'कदाचिदि'त्यादि० ।सं०। 2 आत्मोपघातादयः सं०।

उड्ढाई विरसंमी, भुजमाणस्स हुंति आयाए ।
दुग्गंधिभायणंमि य, गरहइ लोगा पवयणंमि ॥५७१॥

तत्र विरसे पात्रे भुञ्जानस्योद्ध्र्वादि–छर्दनादिदोषो भ०, ततश्चात्मविराधना, दुर्गन्धभाजने भिक्षां गृह्णतो लोको गर्हति, ततश्च प्रवचनवि०, यन्नोदकेनोक्तं 'जक्खुल्लिहणे पवयणंमि' [५६८] तत्रेदमुत्तरम् ॥५७१॥

पवयणघाया अण्णेवि, होंति (प्र.अत्थि) जयणा उ कीरई तेसिं ।
आयमणभोयणाई, लेवे तव मच्छरो को णु ? ॥५७२॥

प्रवचनोपघाताद् अन्येऽप्याचमनभोजनादयः सन्ति, किन्तु तेषां यतना क्रियते,] ततश्च लेपे तव को मत्सरः ? ॥५७२॥ पात्रस्यालेपने संयमविराधनामाह—

खंडंमि मग्गिअंमि अ, लोणे दिण्णंमि अवयवविणासो ।
अणुकंपाई पाणंमि, होइ उदगस्स उ विणासो ॥५७३॥

एकेन साधुना ग्लानार्थं खण्डो मार्गितः, तस्मिन् विषये लवणमपि खण्ड' भण्यते, तेन श्राद्धेन लवणं मार्गितमिति कृत्वा दत्तं, पश्चात्तेन साधुना प्रतिश्रयगतेन लवणं दृष्ट्वा पृथ्वीकाय इति कृत्वा परिष्ठापितं खरपुरुषपात्रराजीषु

लवणावयवाः प्रविष्टाः, ततो यदि तत्र पात्रे पानकादि लाति ततो, लवणविनाशः, अग्रहणे आत्मादिविराधना, [1]काञ्जिकेऽर्थितेऽनुपयोगेन [प्रत्यनीकेन वाऽ]प्कायो दत्तः, ततः कटुकपात्रे तद्विनाशः ॥५७३॥

पूयणिअ–लग्ग–अगणी–पलीवणं गाममाइणो होज्जा ।
रोट्टपणगा तरुंमी, भिगुकुंथादी व(प्र.य) छट्ठंमि ॥५७४॥

एकेन साधुना पूपलिका लब्धा, तल्लग्नसूक्ष्माङ्गारेण प्रदीप्तं पात्रं दट्ठूण घत्तियं, तंपि वाडीए पडियं, गामपलीवणं जायं, यत्राग्निस्तत्र वायुः । अथवा लुट्टोऽपरिणतः स्यात्, पणगो उल्लीराइसु होइ [ततः] तव्विणासे तरुविणासो, वणस्सइविणासो, भृगू-राजिस्तत्र कुंथ्वादयः स्युः । तत एवं षष्ठस्त्रसकायो विनाशितो भवति, अलिप्तपात्रे षट्कायविराधनैवम् ॥५७४॥ [2]यन्नोदकेनोक्तं समये लेपैषणा जिनैर्नोक्ता तत्रेदमुत्तरम्—

पायग्गहणंमि देसिअंमि, लेवेसणावि खलु वुत्ता ।
तम्हा आणयणा लिंप-णा य पायस्स जयणाए ॥५७५॥

पात्रग्रहणे उक्ते लेपैषणोक्तैव द्रष्टव्या. तस्मादानयनं लेपस्य लिम्पनं यतनया कार्यम् ॥५७५॥ अत्राह परः—



१ ०अर्थितेऽनुकम्पयाऽऽगार्या अप्कायो० ।ऽ। ।k। २ 'आया पवयणे'त्यादि ५६७ गाथायाम् ।सं०।

हत्थोवघाय गंतूण, लिंपणा सोसणा य हत्थंमि ।
सागारिए पभुजिघ-णा य छक्कायजयणा य ॥५७६॥

लेपानयने हस्तोपघातो—हस्तबाधा भवति, ततः शकटसमीपं गत्वा लिप्यतां, अथवा हस्ते लेपमानयतः संपातिमसत्त्वोपघातः, तस्माद् गत्वा पात्रं लेप्यं, तथा तत् पात्रकं लेपयित्वा पुनस्तस्य शोपणा हस्तव्यवस्थितस्य कार्या, येन सार्द्रे निक्षेपणदोषः परिहृतः स्यात्। आचार्य आह—हस्ते एवं शोष्यमाणे पात्रके आत्मोपघातादयो दोषा भवन्ति । लेपश्चानयनीयः, तत्र स साधुर्लेपार्थं गच्छन् यदि शय्यातरशकटानि पश्यति ततस्तेपु गृह्णतो लेपे शय्यातरपिण्डो न लगति, लेपं गृह्णता शकटप्रभुः पृच्छयः, अप्रच्छने दोषाः, लेपस्याघ्राणं कार्यं, कटुरकटुर्वा, पट्कायेयतना कार्या, इत्येतत्सर्वं वक्ष्यति ॥५७६॥ आद्यावयवमाह—

चोदगवयणं गंतूण, लिंपणा आणणे वहू दोसा ।
संपाइमाइघाओ, अतिउव्वरिए य उस्सग्गो ॥५७७॥

नोदकवचनं—गत्वा लेपनीयम् । यत आनयने हस्तोपघातः, तथा संपातिमसत्त्वोपघातः, अत्युद्धरिते लेपे उत्सर्गः—परिष्ठापनं स्यात्, ततोऽसंयमः ॥५७७॥ एवमुक्ते गुरुराह—

एवंपि भाणभेओ, विआवडे अत्तणो य उवघाओ ।
णीसंकियं च पायंमि, गिण्हणे इहरहा संका ॥५७८॥

लेपविधौ समाधानम् ।

एवमपि गत्वा लिम्पतो भाजनभेदो भ०, व्यापृतस्याऽऽकुलस्य पात्रकलेपनं[ने] गन्त्र्याश्चलने आत्मोपघातो भ०, प्रकटे[ट] लेपयतो नृणां निःशङ्कितं भ०—यथैतेऽशुचयो—येनाऽशुचिलेपेन लिम्पन्ति, इतरथा—अप्रकटे[ट] लेपयतो लोकस्य शङ्कोपजायते किमप्यनेन लेपेन करिष्यन्ति ततः प्रतिश्रये आगत्य लेपना कार्या ॥५७८॥

[1]चोएइ पुणो लेवं, आणेउं लिंपिऊण तो हत्थे ।
अच्छउ धारेमाणो, सद्दवणिक्खेवपरिहारी ॥५७९॥

हस्ते पात्रं लिप्तं [2]स धारयंस्तिष्ठतु तावद् यावच्छोषमुपयाति । ततो यूयं सद्रवनिक्षेपपरिहारिणः, एतदुक्तं भवति-पात्रं तोयार्द्रमपि भुवि न निक्षिपथ किं पुनर्लेपलिप्तम् ॥५७९॥ गुरुराह—

एवं होउवघाओ, आताए संजमे पवयणे य ।
मुच्छाई पवडंते, तम्हा उ ण सोसए हत्थे ॥५८०॥

एवं हस्ते धारयतस्त्रिधात्मनि संयमे प्रवचने चोपघातः, कथं ? पात्रं हस्तस्थं धारयतः कदाचिन्मूर्च्छया प्रपतति, प्रपतितस्य चात्मोप०, पात्रकभेदे संयमोप०, तं साधुं पतितं दृष्ट्वा कश्चित्सागारिक एवं ब्रूयाद्यदुतैतदीय-

१ प्रत्यन्तरस्थितेयं गाथा— प्र. जइ ते हत्थुवघाओ. आणिज्जंतम्मि होइ लेवम्मि । पडिलेहणाइचिट्ठा, तम्हा उ ण काई कायव्वा ॥
२ स तावद्धारयंस्तिष्ठतु यावच्छोपमुप० ।S।

सर्वज्ञेन हस्ते पात्रधारणमुपदिशता अयमपायो भावी न दृष्ट इति प्रवचनोप० ॥५८०॥

दुविहा य होंति पाया, जुण्णा य णवा य जे उ लिप्पंति ।
जुण्णे दाएऊणं, लिंपइ पुच्छा य इयरेसिं ॥५८१॥

यानि लेप्यानि तानि द्विधा, जीर्णानि पात्रकाणि गुरोः प्रदर्श्य लिम्पति, एवंविधान्येतानि पश्य लिम्प्यन्ते उत नेति ?, इतरेषां नवानां लेपने पृच्छा कार्या, किं तानि लिप्यन्ते उत तिष्ठन्तु ? ॥५८१॥ आह—कः पुनरनापृच्छ्य लेपने दोषः ? उच्यते—एवं ज्ञात्वा मायावी लिम्पति—

पाडिच्छगसेहाणं, णाऊणं कोइ आगमणमाई ।
दढलेवेवि उ पाए, लिंपइ मा एसु देज्जेज्जा ॥५८२॥

प्रतीच्छकाः—सूत्रार्थग्राहिणः, [सेहा] शिष्याः—अभिनवप्रव्रजिताः, एतेषामागमनं ज्ञात्वा कोऽपि दृढलेपान्यपि जीर्णानि लेपयति, मा भूदाचार्यस्तेभ्यो दद्यात् ॥५८२॥

अहवावि विभूसाए, लिंपइ जा सेसगाण परिहाणी ।
अपडिच्छणे य दोसा, सेहं काया अओ दाए ॥५८३॥

अथवा दृढलेपमपि पात्रं विभूषया लिम्पति, तत्र लिप्ते शेषाणां ग्लानादीनां परिहानिर्या सा सर्वा

गुरुमनापृच्छ्य लेपे दोषः ।

तत्कृतैव भव०, पात्राभावे गुरुः प्रतीच्छकान्न प्रतीच्छति, [ततः] निर्जराद्यभावः । शैष्यकस्यापि चेत्पात्राणि न दीयन्ते तदा विपरिणामः स्यात्, गृहीभूतः षट्कायान् हन्ति । अतो गुरुः पृच्छ्यः ॥५८३॥ कदा लेपस्य ग्रहणं-दानं कर्त्तव्यमित्याह—

पुव्वण्हलेवदाणं, लेवग्गहणं सुसंवरं काउं ।
लेवस्स आणणे लिंपणे य जयणाविही वोच्छं ॥५८४॥

पूर्वाह्णे पात्रकलेपनं करोति, येन प्रत्यूषसि लिप्तं दिवसेन शुष्यति, 'लेपग्रहणं' गृह्यतेऽस्मिन्निति ग्रहणं-शरावसंपुटं सुसंवृतं वस्त्रादिना कृत्वा[1] लेपस्याऽऽनयने लिम्पने (च) यतनां वक्ष्ये ॥५८४॥ इमां गाथां व्याख्यानयति—

पुव्वण्हे लेवगहणं, काहंति चउत्थगं करेज्जाहि ।
असहू वासिअभत्तं, अकारऽलंभे य दितियरे ॥५८५॥

पूर्वाह्णे लेपदानं करिष्यामीति कृत्वा चतुर्थमेकमुपवासं कुर्यात् । येन निर्व्यापारः सुखेन क०, यद्यसहिष्णुस्ततो वासिकभक्तं भुक्त्वा लेपयति । अथवा तदकारकम्-अपथ्यं तस्याऽलम्भो वा ततोऽन्ये साधवो [2]लब्धिवन्त आनीय ददति ॥५८५॥

१ ० कृत्वा लिम्पनाऽऽनयने यतना ० ।k।    २ लब्धित. ।k।

कयकितिकम्मो छंदेण, छंदिओ भणइ लेवऽहं घेत्तुं ।
तुब्भंपि अत्थि अट्ठो ?, आमं तं कित्तिअं किं वा ? ॥५८६॥

स लेपार्थं यान् कृतद्वादशावर्त्तवन्दनः । 'छंदेने'ति गुरुवाक्येन [1]छन्दितः-अनुज्ञातः सन् भणति लेपमहं ग्रहीष्यामि, भवतामप्यस्ति लेपेनार्थः ? गुरुर्भणति[2]- ममास्ति कार्यं, साधुर्भणति-कियन्तं ग्रहीष्यामि, 'किंव'त्ति, किं मल्लिकया लेपेन वा तव प्रयोजनम् ?, आचार्यस्य लेपेनार्थः, स गच्छसाधारणनन्दीपात्रार्थं चिन्तां करोति ॥५८६॥

सेसेवि पुच्छिऊणं, कयउस्सग्गो गुरुं पणमिऊणं ।
मल्लगरूवे गिण्हइ, जइ तेसिं कप्पिओ होइ ॥५८७॥

कृतोत्सर्गः - कृतोपयोगो गुरुं नत्वा मल्लकं-शरावं लेपग्रहणार्थं, [3]रूतं लेपाच्छादनार्थं, गृह्णाति चेत्तयोः कल्पिकः स्यात्, यद्यसौ वस्त्रैषणायां पात्रैषणायां च गीतार्थ इत्यर्थः ॥५८७॥

गीयत्थपरिग्गाहिअ, अयाणओ रूयमल्लए घेत्तुं ।
छारं च तत्थ वच्चइ, गहिए तसपाणरक्खट्ठा ॥५८८॥

[2]अथासौ मल्लकरूतयोर्मार्गणे न कल्पिकः, ततो गीतार्थपरिगृहीते स्वीकृते मल्लकरूते गृहीत्वा, क्षारं-भूतिं च लात्वा याति, लेपे गृहीते सति चीरमुपरि दत्त्वा लेपस्य, ततो रूतं, तदुपरि भूतिं ददाति, त्रसप्राणरक्षणार्थम् ॥५८८॥



१ ० च्छिन्दितः ।k।   २ ० भणति-आमम् अस्ति कार्यं ०, ।k।   ३ रूतं वा ।S।

यदुक्तं नोदकेन सागारिकगन्त्र्यां लेपो न ग्राह्यः, शय्यातरपिण्डभयात्तत्प्रतिषेधयति—

वच्चंतेण य दिट्ठं, सागारिदुचक्कगं तु अब्भासे ।
तत्थेव होइ गहणं, ण होइ सो सागरिअपिंडो ॥५८९॥

व्रजता दृष्टं सागारिकद्विचक्रं—शकटं, ततस्तत्रैव लेपग्रहणं कार्यं, न शय्यातरपिण्डो लगति ॥५८९॥

गंतुं दुचक्कमूलं, अणुण्णवेत्ता पहुंति साहीणं ।
एत्थ य पहुत्ति भणिए, कोई गच्छे णिवसमीवे ॥५९०॥

गत्वा द्विचक्रमूले चेत्तत्प्रभुः सन्निहितः-स्वाधीनः स्यात् तदाऽनुज्ञाप्यते, तदभावे 'कोऽत्र प्रभु'रिति पृच्छेत् ?, एवमुक्ते कश्चित् पुरुष एवं ब्रूयात् । अत्र शकटे प्रभू राजा, एवमुक्ते कश्चिदगीतार्थोऽनुज्ञापनार्थं नृपान्ते याति ॥५९०॥ एषोऽविधि—अनुज्ञापनादृष्टान्तोऽत्र—

किं देमित्ति णरवई, तुज्झं खरमक्खिआ दुच्चक्केत्ति ।
सो अपसत्थो लेवो, एत्थ य भद्देतरे दोसा ॥५९१॥

कश्चित्साधुर्नृपशकटानि दृष्ट्वा, ज्ञापनार्थं नृपान्ते जगाम । किं ददामि ?, इत्युक्ते नृपेण, 'खर०' तैलमर्पितेषु

द्विचक्रेषु लेपोऽस्ति, तेन कार्यं, भद्रेतरयोर्दोषा भवन्ति, भद्रको[1] यदि—तदा तैलमर्षितान्यन्यान्यपि कारयति, चेदभद्रकस्तदाऽशुचय इति हीलयति, कर्षति वा ॥५९१॥

तम्हा दुचक्कवइणा, तस्संदिट्ठेण वा अणुण्णाए ।
कडुगंधजाणणट्ठा, जिंघे णासं तु अफुसंता ॥५९२॥

तस्माद् द्विचक्रपतिना तदादिष्टेन वाऽनुज्ञाते लेपो ग्राह्यः । कटुतैलगन्धज्ञानार्थं जिघ्रति नासिकयाऽस्पृशन् कटुमृष्टो वा, [2]कटुरस्थिरः स्यात् । मृष्टो ग्राह्यः ॥५९२॥ जिंघणावयवो भणितः, 'छक्कायजयण'त्ति आह—

हरिए बीए चले जुत्ते, वच्छे साणे जलट्ठिए ।
पुढवी संपाइमा सामा, महवाते महियाऽमिए ॥५९३॥

हरितबीजयोरुपरि स्थितं, चलं—गमनाभिमुखं वा तथा [3]युक्तं, वत्सः श्वा वा बद्धो भवति, जलस्थं, सचित्तपृथिवीस्थं, स प्रदेशः सम्पातिमसत्त्वव्यापृतो भ०, श्यामा—रात्रिस्तस्यां, महावाते, महिकायां निपतन्त्यां, अमितो-घनः [न गृह्यत इति] ॥५९३॥ द्वारगाथेयं, आद्यात्रयदमाह—

लेपादानात् पूर्वं 'जिंघणादि'-कार्याणि ।

१ 'तत्थ जइ सो राया भद्दो ताहे सव्वहिं चेव उग्घोसणं करेइ, जह-णेह केणइ सगडा घयण मक्खियव्वा,
जो मक्खेइ सो दंडं पनो एवमाई भद्दओ पसंग कुज्जा.
किं देमित्ति' गाथाया द्रोणीयवृत्तिस्थ एतावदंश उपकारक इति मत्वा तत उद्धृत्य मुद्रितोऽत्र ।सं०।
२ कटुतैलेन निष्पन्नो लेपोऽस्थिरो भवति अतो मिष्टतिलतैलेन निष्पन्नो लेपो ग्राह्यः । स० । ३ वहति तदाऽपे न ग्राह्य इति भावः ।सं०।

॥२४८॥

हरिए बीएसु तहा, अणंतरपरंपरे वि य चउक्का ।
आया दुपयं च पति-ट्ठियंति एत्थं पि चउभंगो ॥५९४॥

हरिते बीजे द्वौ चतुष्कौ भङ्गगानां, कथं ? हरितेऽनन्तरप्रतिष्ठितं शकटं बीजेऽपि[१], ह०अन० बीजाभावान्न बीजे, अनं० ह० न ३, द्वयोर्न० ४, एवं परम्परेऽपि४ हरितबीजयोः, आत्माप्रतिष्ठितो द्विपदं चाऽत्रापि चतुर्भङ्गी पूर्ववत् । तुर्यः सर्वत्र शुद्धः ॥५९४॥ 'चल'त्ति आह—

दव्वे भावे य चलं, दव्वंमि दुपइट्ठिअं तु जं दुपयं ।
आया य संजमंमि अ, दुविहा उ विराहणा तत्थ ॥५९५॥

चलं द्विधा द्रव्यभावभेदेन, द्रव्यचलं-दुःप्रतिष्ठितं द्विपदं भवति । तत्र लेपं गृह्णतो द्विधात्मसंयमविराधना भवति ॥५९५॥ भावचलमाह—

भावचलं गंतुमणं, गोणाई अंतराइयं तत्थ ।
जुत्तेवि अंतरायं, वित्तस चलणे य आयाए ॥५९६॥

१ अनन्तरहरिते प्रतिष्ठितो न बीजे इति द्वितीयो भङ्गः २, अनन्तरहरिते न प्रतिष्ठितोऽनन्तरबीजे च प्रतिष्ठित इति तृतीयो भङ्गः ३ न बीजे न हरिते चानन्तरं प्रतिष्ठित इति चतुर्थो भङ्गः ४, एवं परम्परेऽपि, अनया रीत्या चात्मद्विपदेतिशब्दद्वयमाश्रित्य चतुर्भङ्गी कर्तव्या ।स०।

भावचलं—यच्छकटं गमनाभिमुखं वर्त्तते, तत्र शकटपतौ भद्रके सति यावत्साधुर्लेपं गृह्णाति, ताव[1]त्र योत्रयति बलीवर्दान्, पश्चादुत्सूरे योत्रयति, ततो बलीवर्दानामन्तरायं भवति । 'जुत्ते'त्ति द्वारं, बलीवर्दयुक्तेऽपि शकटे एवमेवान्तरायं भवति०, साधुं दृष्ट्वा वित्रासे[2] बलीवर्दानां, गन्त्रीचलने च लेपं गृह्णत आत्मविराधना भवति ॥५९६॥ 'वच्छे'त्ति द्वारमाह—

वच्छो भएण णासइ, भंडिक्खोभेण (प्र.य) आयवावत्ती ।
आया पवयण साणे, काया य भएण णासंति ॥५९७॥

आसन्नवर्ती वत्सस्तं [3]साधुं पश्यन् भयेन षट्कायान् व्यापादयति, यदि गन्त्रीबद्धस्तदा भयेन नश्यन् गन्त्याक्षेपं करोति, तेन 'भंडिखोभेण' गन्त्रीक्षोभेनात्मव्यापत्तिर्भवति । 'साण'त्ति द्वारं,—श्वाऽक्षं जिह्वया लिखति तत्र लेपं लातो द्विधाऽऽत्म-प्रवचनोपघातः, भयेन नश्यता कायाश्च विनाश्यन्ते ॥५९७॥ 'जलपुढवि'त्ति द्वारं—

जो चेव य हरिएसुं, सो चेव गमो उ उदगपुढवीसु ।
संपाइमा तसगणा, सामाए होइ चउभंगा ॥५९८॥

य एव हरितबीजेषु [4]गमोऽसावेवोदकपृथिव्योर्ज्ञेयः । अत्राऽपि पदद्वयेन भङ्गाः कार्याः, 'संपाइम'त्तिद्वारं

१ तावच्छकटे न युनक्ति बलीवर्दान्, पश्चादुत्सूरे युनक्ति ।S।  २ वित्रासने ।S।
३ साधुं दृष्ट्वा नश्यन् भयेन ।S।  ४ गमः—अधिगमः ।S।

संपातिमाः त्रसगणा यदि स्युस्तदा लेपो न ग्राह्यः । अत्र भङ्गचतुष्कं भवति०, कथं ? संपातिमेष्वात्मा प्रतिष्ठितः द्विचक्रं प्र० इत्यादि, तुर्यः शुद्धः, संपातिमद्वारं । श्यामायां भङ्गचतुष्कं भ०, दिवा गृहीतोऽन्यत्रदिने दत्तः । दिवा गृहीतो रात्रौ लिप्तं२, रात्रौ गृ० दिवा दत्तः३, रात्रौ गृहीतो रात्रौ दत्तः ४ ॥५९८॥ 'महावाय'त्ति द्वारं—

वाउंमि वायमाणेसु, संपयमाणेसु वा तसगणेसु ।
णाणुण्णायं गहणं, अमियस्स य मा विगिंचणया ॥५९९॥

वायौ वाति संपतत्सु वा त्रसगणेषु वाशब्दान्महिकायां च पतन्त्यां लेपो न ग्राह्यः । 'अमिय'त्तिद्वारं, मा भूत् प्रभूतग्रहणे [1]त्यागः ॥५९९॥

एयद्दोसविमुक्कं, घेत्तुं छारेण अक्कमित्ताणं ।
चीरेण बंधिऊणं, गुरुमूलपडिक्कमालोए ॥६००॥

एतद्दोषविमुक्तं लेपं गृहीत्वा वस्त्रेणाच्छाद्य क्षारेणाऽऽक्रम्य चीरेण शरावसंपुटं बद्ध्वा गुरुमूलमेत्येर्यापथिकीं प्रतिक्रम्यालोचयति ॥६००॥

१ अधिकलेपग्रहणे पश्चात्तत्त्यागजन्यो दोषो न स्यादिति भावः ।सं०।

लेपे संपातिमद्वारम् ।

दंसिअ छंदिअ गुरुसेसए य ओमत्थियस्स भाणस्स ।
काउं चीरं उवरिं, रूयं च छुभेज्ज तो लेवं ॥६०१॥

दर्शयति, पुनश्च गुरुं छन्दयति–आमन्त्रयति, शेषसाधूंश्च, यदुत–भवतामनेन लेपेन किञ्चित्कार्यं यदि स्यात्, ततो गृह्यतां, यदि कश्चिन्न गृह्णाति, तदा 'ओमत्थियस्स' अधोमुखीकृतस्य भाजनस्य [1]कृत्वा उपरि चीरं, चीरोपरि रूतपटलं, रूतस्योपरि लेपं प्रक्षिपेत् ॥६०१॥

अंगुट्ठ-पएसिणि-मज्झिमाए घेत्तुं घणं तओ चीरं ।
आलिंपिऊण भाणे, एक्कं दो तिण्णि वा घट्टे ॥६०२॥

अङ्गुष्ठप्रदेशिनीमध्यमाभिरङ्गुलीभिर्लेपं गृह्णाति–लात्वा घनम्-अत्यर्थं चीरं, पुनः पोट्टलिकानिर्गतेन लेपरसेन पात्रं लिम्पति, तच्च पात्रं कदाचिदेकं द्वे त्रीणि वा, [2]तान्यपि घट्टयति–अङ्गुल्या मसृणीकरोति ॥६०२॥

अण्णोऽण्णं अंकंमि उ, अण्णं घट्टेइ वारवारेणं ।
आणेइ तमेव दिणं, दवं रएउं अभत्तट्ठी ॥६०३॥

१ कृत्वा उपरि रूतपटल रूतस्यो० ।S। २ तान्यालिप्य घट्ट० ।S।

लेपे वैयावृत्य-कारकस्य कर्तव्यम् ।

अन्यदन्यदङ्के—उत्सङ्गे स्थापयति । अन्यद् घट्टयत्यङ्गुल्या मसृणीक०, एवं वारं २ एकं द्वे वा अङ्के स्थापयेत्, अन्यदेकं मसृणयति यदैकमेवोत्कृष्टलेपेन लिप्तं भवेत्तदा रूढे सति तत्रैव दिने रञ्जयित्वा पात्रकमुपोषितो द्रवमानयति ॥६०३॥ वैयावृत्यकर एवं करोति—

अभत्तट्ठियाण दाउं, अण्णेसिं वा अहिंडमाणाणं ।
हिंडेज्ज असंथरणं, असहू घेत्तुं अरइयं तु ॥६०४॥

अथ तत्-पात्रकं न रूढं, ग्लानादयश्च सीदन्ति, ततोऽसौ वैयावृत्यकर उपोषितेभ्यः पात्रं समर्प्य, अथवान्येषामहिण्डमानानां समर्प्य हिण्डेत, ग्लानादीनामसंस्तरणेऽनिर्वाहे एवं करोति, अथाऽसौ स्वयमसहिष्णुरुपवासं कर्तुं, ततो लात्वा अन्यसत्कं पात्रं [1]अरञ्जितं—पूर्वलेपितं हिण्डेत ॥६०४॥ यदा पुनरेवंविधः साधुर्नास्ति, यस्य तन्नवलेपं पात्रं समर्प्य भिक्षामटति, आत्मना त्रीणि पात्रकाणि संवाहितुं न शक्नोति, कानि त्रीणि ? एकं नवलेपं, अन्यो भक्तपतद्ग्रहस्तृतीयमशुद्धार्थं मात्रकं, तदाऽयं विधिः—

ण तरेज्जा जइ तिण्णी, हिंडावेउं तओ अ छारेणं ।
उच्चुण्णेउं हिंडइ, अण्णे य दवं सि गेण्हंति ॥६०५॥

॥२५३॥

१ अरञ्जितं—तस्मिन्नेव दिने पूर्वलिप्तमित्यर्थः ।सं०।

यदि श्रीणि पात्राणि हिण्डयितुं न तरेद्—न शक्नुयेत तदा नवपात्रं छारेणावचूर्ण्य—अवगुण्ड्यैकत्र प्रदेशे संस्थाप्य हिण्डति। अन्ये साधवस्तदर्थं लान्ति ॥६०५॥

बहिर्गमने लिप्तादीनां भूत्याऽवगुण्डनम्।

लेत्थारियाणि जाणि उ, घट्टगमाईणि तत्थ लेवेणं।
संजमफाइनिमित्तं, ताईं भूईए गुंडेज्जा ॥६०६॥

लेपेन यानि लिप्तानि, घट्टकादीनि—येनाऽश्मना पात्रं [१]सलेपं मसृणीक्रियते स घट्टकः, आदिशब्दाच्छरावं चीरं च लेपलिप्तं, एतानि भूत्याऽवगुण्डयति, येन तत्र प्रतिष्ठापितानां सतां कीटिकाद्युपघातो न स्यात्। संयमस्फातिनिमित्तम् ॥६०६॥

एवं लेवग्गहणं, आणयणं लिंपणा य जयणा य।
भणियाणि अतो वोच्छं, परिकम्मविहिं तु लित्तस्स ॥६०७॥

लेपग्रहणमानयनं लिम्पना यतना एतानि भणितानि, लिप्तस्य पात्रस्य परिकर्म्मविधिमतो वक्ष्ये ॥६०७॥ स चायम्—

लित्ते [२]छगणिअछारो, घणेण चीरेण बंधिउं उण्हे।
अंछण परियत्तण घट्टणे (प्र.सोसणे) य धोवे पुणो लेवो ॥६०८॥

१ नवलेपं ।k।  २ 'छाणिय छारो' इत्यपि पाठः, तत्र 'क्षाणितः' गालितः क्षारो—भस्म तत्र लेपे प्रक्षिप्यते इत्यर्थो बोध्यः ।स०।

लिप्ते पात्रे सति गोमयछारेणावगुण्डयते पश्चाद् घनेन चीरेण वेष्टयित्वा, रजस्त्राणेन च परिवेष्टय, पात्रकबन्ध ग्रन्थिमदत्त्वोष्णे स्थापयति। 'अंछण'त्ति अङ्गुल्याऽऽकर्षणं–समारणं करोति, परिवर्त्तयति-आतपाऽभिमुखं स्थापयति, एवं शोषणा नवलेपस्य। तत्र छारगुण्डिते धौते पुनर्लेपो दीयते ॥६०८॥ इमां गाथां व्याख्यानयति–तत्र 'लिप्ते छगणिय छारो'त्ति व्याख्यातमेव द्रष्टव्यं, शेषमाह—

लेपशोषण-विधिः, पूर्णे लेपे तत्साधनानां व्युत्सर्गः।

दाउं सरयत्ताणं, पत्ताबंधं अबंधणं कुज्जा।
साणाइरक्खणट्ठा, पमज्ज छाउण्हसंकमणा ॥६०९॥

तत्र पात्रके सरजस्त्राणं पात्राबन्धं दत्त्वा ग्रन्थिं न ददाति, श्वादिरक्षार्थं, ग्रन्थौ सत्यामुत्पाट्य याति, स भुवं प्रमृज्याऽपराह्णे छायाक्रान्तं सत्पुनरुष्णे स्थापयति ॥६०९॥

तद्दिवसं पडिलेहा, कुंभमुहाईण होइ कायव्वा।
छण्णे य णिसं कुज्जा, कयकज्जाणं विउस्सग्गो ॥६१०॥

तत्र दिने कुम्भमुखादीनां-घटग्रीवादीनां प्रत्युपेक्षणं कार्यं, येन लिप्तं पात्रकं बहिस्तस्यां ग्रीवायां तस्मिन् दिने क्रियते, निशायां तु छन्ने [प्रदेशे] तत्पात्रकं कुर्यादात्मसमीपे, कृते कार्ये व्युत्सर्गो घटग्रीवादीनां कार्यः ॥६१०॥ अत्र लेपशेषेऽयं विधिः—

लेपपरिष्ठापन-विधिः, लिप्त-पात्रस्य शीतो काले आतपे स्थापनविधिः

अट्ठगहेउं लेवाहियं तु, सेसं सरूवगं पीसे ।
अहवावि णत्थि कज्जं, सरूवमुज्झे तओ विहिणा ॥६११॥

तत्रान्यत्र वा पात्रकेऽष्टको दातव्यो भ०, तदर्थं लेपाधिकं शेषं सरूतं पिष्यात् । अथ नास्ति कार्यं तदा रूतं परित्यजेद्विधिना छारेण गुण्डयित्वा ॥६११॥ तत् पात्रकं कस्यां पौरुष्यां बाह्यत अभ्यन्तरे च स्थापनीयमित्याह—

पढमचरिमा सिसिरे, गिम्हे अद्धं तु तासि वज्जेज्जा (प्र.ज्जित्ता)।
पायं ठवे सिणेहाति(दि)-रक्खणट्ठा पवेसो वा ॥६१२॥

शीतकाले प्रथमपौरुषीं वर्जयित्वा तत् पात्रं बहिरातपे स्थापयति, चतुर्थयामे मध्ये प्रवेशयेत् शिशिरे, ग्रीष्मे तयोः प्रथमचरमपौरुष्योरर्द्धं वर्जयेत् । पात्रं स्थापयति प्रवेशयति ॥६१२॥

उवओगं च अभिक्खं, करेइ वासाइरक्खणट्ठाए (प्र. साणरक्खट्ठा) ।
वावारेइ व अण्णे, गिलाणमाई(प्र.दा)सु कज्जेसु ॥६१३॥

तस्मिंश्चातपस्थापिते निरूपणं करोति, [1]वर्षादि-श्वादिक्षार्थम् अन्यान्वा साधून् व्यापारयति, यदि स्वयं ग्लानादिकार्ये क्षणिको भवति ॥६१३॥

१ वर्षादिरक्षाश्वा० ।k।

एक्को व जहण्णेणं, दुगतिगचत्तारि पंच उक्कोसा ।
संजमहेउं लेवो, वज्जित्ता गारवविभूसा (प्र. सं) ॥६१४॥

जघन्येनैकः प्रलेपः, मध्यमतो द्वौ त्रयश्चत्वारो[१] वा, उत्कृष्टतः पञ्च दीयन्ते ॥६१४॥ '[२]धोवे पुणो लेवे'-त्यवयवमाह—

अणुवट्टंते तहवि हु, सव्वं अवणित्तु तो पुणो लिंपे ।
तज्जाय सचोप्पडगं, घट्टगरइअं ततो धोवे ॥६१५॥

खञ्जन-तज्जात-लेपविधिः, युक्तिलेपस्य निषेधश्च ।

अनुपतिष्ठति—अरुह्यमाणे पात्रे तेनापि प्रकारेण यदा न रोहति, तदा सर्वं लेपमपनीय पुनर्लिम्पति । एवं खञ्जनलेपविधिरुक्तः, तज्जातलेपमाह—तत्र गृहिभाजने जातस्तज्जातो मल्लिकादिः । तेन 'सचोप्पडगं'—सस्नेहं यत् पात्रं घट्टकेन रचितं मसृणितं सत्काञ्जिकेन धावति ॥६१५॥ कतिभेदो लेप इत्याह—

तज्जायजुत्तिलेवो, खंजणलेवो य होइ बोद्धव्वो ।
मुद्दिअणावाबंधो, तेणयबंधेण पडिकुट्ठो ॥६१६॥



१ बृहत्कल्पटीकाया,-मध्यमतो द्वौ त्रयो वा, उत्कर्षतश्चत्वारः पञ्च वेति निर्दिष्टम् ।सं०।
२ ६०८तमगाथास्थं 'धोवे पुणो लेवे'त्ति पदम् ।सं०।

(१) तज्जातलेपः, (२) युक्तिलेपः पाषाणादिः, (३) खञ्जनलेपश्च । भग्ने पात्रे नवं गृह्यते, तदभावे [1]मुद्रिकाबन्धेन नौबन्धेन गोमूत्रिकाबन्धे[नेत्यर्थः] तत्पात्रकं सीवयति, स्तेनबन्धः प्रतिषिद्धः, पात्रासारताहेतुत्वात् ॥६१६॥ इमां गाथां व्याख्यानयति–तत्र (१)तज्जात(३)खञ्जनलेपौ व्याख्यातावेव, युक्तिलेपमाह—

जुत्तीउ पत्थराई, पडिकुट्ठो सो उ सण्णिही जेणं ।
दयसुकुमार(प्र.ल) असण्णिहि, खंजणलेवो अओ भणिओ ॥६१७॥

युक्तिलेपः प्रस्तरादिः स च प्रतिषिद्धो भगवद्भिर्यतः स सन्निधिं विना न भवति, अतो जीवदयार्थं सुकुमारत्वादसन्निधिरिति कृत्वा खञ्जनलेपो भणितः ॥६१७॥ आह–सुकुमारं लेपमिच्छता विभूषा स्यात् ? नैवं, यतः—

संजमहेउं लेवो, ण विभूसाए वदंति तित्थयरा ।
सइ–असइ य दिट्ठंतो, सइसाहम्मे उवणओ उ ॥६१८॥

संयमनिमित्तं लेप उक्तो न विभूषार्थम्, अत्र सत्यसत्योर्दृष्टान्तो–यथा सत्यसत्यौ द्वे स्त्रियावद्भुतवेषं कुरुतः, सत्या वेषो भर्त्तुर्भक्तिरिति कृत्वा लोकेन गण्यते, असत्या वेषो हस्यते, अस्या वेषोऽन्यार्थं वर्तते इति, एवमत्र सतीसाधर्म्योपनयः कार्यः ॥६१८॥ मुद्रिकादिबन्धानाह—

लेपस्याविभूषार्थत्वं निरूः स्तेनबन्धस्य निषेधः ।



१ 'मुद्रिकाबन्धेन–ग्रान्थबन्धेन तथा नौबन्धेन सीव्यति यादृशो नावि बन्धो भवति तत्सदृशेन गोमुत्रिकाबन्धेनेत्यर्थः' एतावानशोऽत्र द्रोणीयवृत्तित उद्धृतोऽर्थसौकर्याय ।स०।

भिज्जिज्ज लिप्पमाणं, लित्तं वा असइए पुणो बंधो ।
मुद्दिअणावाबंधो, ण तेणएणं तु बंधिज्जा ||६१९||

लिप्यमानं पात्रं भिन्द्याल्लिप्तं वा भिद्यते, अन्यस्मिन्नसति बन्धं कुर्यात् ||६१९|| लेपस्त्रिधेत्याह——

खरअयसिकुसुंभसरिसव, कमेण उक्कोसमज्झिमजहण्णा ।
णवणीए सप्पिवसा, गुडेण लेपो (प्र. लोणे) अलेवो उ ||६२०||

खर इति तिलतैलं तेन कृतो लेप उत्कृष्टः, अतसिकुसुम्भयोर्मध्यमः, सर्षपस्य जघन्यः, नवनीतेन, सर्पिषा, वसया, गुडेन, लवणेन च लेपो न भवति ||६२०|| उक्तो द्रव्यपिण्डोऽधुनैकार्थिकान्याह——

पिंड णिकाय समूहे, संपिंडण पिंडणा य समवाए ।
समोसरण णिचय उवचय, चए य जुम्मे य रासी य ||६२१||

पिण्डो निकायः समूहः संपिण्डनं पिण्डना समवायः समवसरणं—सम्यगेकत्र गमनं समवसरणं। निचय [१]उपचयश्चयः राशिर्युग्मः पिण्डार्थः ||६२१|| भावपिण्डमाह——

दुविहो य भावपिंडो, पसत्थओ होइ अप्पसत्थो य ।
दुग सत्तट्ठचउक्कग, जेणं वा बज्झए इयरो ||६२२||

१ उपचयश्च राशि. |k|

खरादित्रयेण सर्पिषा विन लेपो न भवति

भावपिण्डः प्रशस्ताऽप्रशस्तभेदाद् द्विधा, अप्रशस्तो द्विविधः—रागद्वेषभेदात्, भयभेदात्सप्तधा, कर्मभेदादष्टधा, कषायभेदाच्चतुर्द्धा, येन बाह्येन वस्तुना इतरः—आत्मा बध्यते कर्मणा अष्टप्रकारेण सोऽप्रशस्तो भावपिण्डः ॥६२२॥ प्रशस्तभावपिण्डमाह—

तिविहो होइ पसत्थो, णाणे तह दंसणे चरित्ते य ।
मोत्तूण अप्पसत्थं, पसत्थपिंडेण अहिगारो ॥६२३॥

त्रिविधः प्रशस्तभावपिण्डः—ज्ञानदर्शनचारित्रभेदेन, अयं ज्ञानादिभावपिण्डो येन शुद्धेनाहारोपधिशय्यादिना प्रचुरीक्रियते स एव भावपिण्डः, कारणे कार्योपचारात्, ज्ञानादि कार्यं, पिण्डः कारणम् ॥६२३॥ स चैषणाशुद्धो ग्राह्योऽत एषणा प्रतिपाद्यते—

लित्तंमि भायणंमि उ, पिंडस्स उवग्गहो उ कायव्वो ।
जुत्तस्स एसणाए, तमहं वोच्छं समासेणं ॥६२४॥ दारं ।

लिप्ते भाजने सति पिण्डस्योपग्रहणं कार्यम् एषणायुक्तस्य, अतस्तामेषणां वक्ष्ये ॥६२४॥

णामं ठवणा दविए, भावंमि य एसणा मुणेयव्वा ।
दव्वंमि हिरण्णाई, गवेस-गह-भुंजणा भावे ॥६२५॥

प्रशस्ताऽप्रशस्त भावपिण्डा त्रिभावैषणा च

॥२६०॥

नामस्थापने सुगमे । द्रव्ये—हिरण्यादेर्गवेषणा, भावैषणा त्रिधा—गवेषणा (१) ग्रहणैषणा (२) ग्रासैषणा (३)-भेदेन ॥६२५॥ सा च गवेषणा एभिर्द्वारैरभिगन्तव्या—

पमाणे काले आवस्सए य, संघाडए य उवकरणे ।
मत्तगकाउस्सग्गो, जस्स य जोगो सपडिवक्खो ॥६२६॥

प्रमाणं कतिवारा भिक्षार्थं प्रवेष्टव्यमित्येतद्वक्ष्यति, काले—कस्यां वेलायां भिक्षा गवेषणीया?, आवश्यकं—कायिक्यादिव्युत्सर्गं कृत्वा गोचरे गम्यं, संघाटकयुक्तेन हिण्डनीयं नैकाकिना, भिक्षामटता किम्? उपकरणं सर्वं स्तोकं वा ग्राह्यं, भिक्षामटता मात्रकं ग्राह्यं, कायोत्सर्गं उपयोगप्रत्ययः कार्यः । 'यस्य च योगः' गच्छेन्निदं वक्ति, येन वस्तुना सह योगो भवति तं ग्रहीष्यामि, सर्व एवाऽयं द्वारकलापः सप्रतिपक्षो वाच्यः । द्वारगाथेयम् ॥६२६॥

दुविहं होइ पमाणं, काले भिक्खा पवेसमाणं च ।
सण्णा भिक्खायरिआ, भिक्खे दो काल पढमद्धा ॥६२७॥

द्विविधं प्रमाणं भ०, एकः कालनियमोऽन्यद्भिक्षार्थं प्रविशतां वारालक्षणं प्रमाणं, भिक्षार्थं वारद्वयं प्रविशति, एकमकालसञ्ज्ञायाः पानकनिमित्तं, द्वितीयं भिक्षार्थमिति द्वे भिक्षे, तृतीयवारं न कल्पते । उक्तं भिक्षाप्रवेशवाराप्रमाणम् । भिक्षाकालमाह—'काल पढमद्धा' प्रथमपौरुष्यां यदर्द्धं तत्र प्रवेष्टव्यम् । उक्तं कालप्रमाणम् ॥६२७॥

प्रमाणादिद्वारे गवेषणा ।

आरंण भद्दपंता, भद्दग उट्ठवण भंडण पदोसा ।
दोसीणपउरकरणं, ठवियगदोसा य भद्दंमि ॥६२८॥

यद्यर्द्धपौरुष्या आरत एव भिक्षार्थं [1]प्रविशतो भद्रक-प्रान्तकृतदोषाः स्युः । भद्रः सुप्तां भार्यामुत्थापयति, यदि नोत्तिष्ठति, तदा भण्डणं-कलहो भ०, अथवा स एव प्रद्वेषं कुर्यात्, स गृहपतिर्दोषान्नं प्रचुरं कारयति, एवं स्थापनाकृता दोषा भवन्ति ॥६२८॥

अद्दागमंगलं वा, उब्भावण खिंसणा हणण पंते ।
फिडिउग्गमे य ठविया, -भद्दग-चारी किलिस्सणया ॥६२९॥

तस्यामेव [2]वेलायां साधुमागतं दृष्ट्वा प्रान्तो ब्रूते-अद्दागमिव अहिट्ठाणं दिट्ठं, अमङ्गलं वा गृहपतिर्मन्यते साधुदर्शनं, 'उ'० ततः परिभवो भ०, खिंसना—चैते उदरपूरणार्थमेव प्रव्रज्तिता इति, ताडनं क०, एवं प्रगे गच्छतां दोषाः, यदि फिडि[टि]ते काले प्रविशति तदैते दोषाः—भद्रका गृही भार्यां वक्ति—इयत्यामेव वेलायां त्वया भक्तादि कार्यं, एवमुद्गमदोषः । अथवा यदुद्धरति, तत्त्वयाऽद्यदिवसादारभ्य साध्वर्थं स्थापनीयं, ततः स्थापना भ०, अभद्रक एवं वक्ति—चारी भण्डिकोऽयमन्यथा कोऽयं भिक्षाकाल इति, अवेलायां भिक्षार्थं प्रविष्टस्य क्लेश एव न तु भिक्षाप्राप्तिः ॥६२९॥ मध्याह्नस्यार्वागेव यदि भिक्षामटति तदाऽयं दोषः—

भिक्खस्सवि य अवेला, ओसक्कहिसक्कणे भवे दोसा ।
भद्दगपंतातीया, तम्हा पत्ते चरे काले ॥६३०॥

१ ०प्रविशति, ततः भद्रक० । २ प्रातःकाले इतिभावः ।सं०।

भिक्षाया अवेलायां चेत्प्रविशति तदा गृही भद्रकः 'ओ०' या रन्धनवेला तामर्वाक् करोति येन साधोरपि दीयते, उच्छूरे गच्छतो 'अहि'० तां रन्धनवेलामुत्सूर एव कारयति । प्रान्तकृता दोषाः पूर्ववत् । तस्मात् प्राप्त एव चरेत् काले ॥६३०॥ [ 'काले'त्ति गयं 'आवस्सए'त्ति व्याख्यायते—]

आवस्सग सोहेउं, पविसे भिक्खस्सऽसोहणे दोसा ।
उग्गाहिअवोसिरणे, दवअसईए य उड्डाहो ॥६३१॥

कायिक्यादि संशोध्य भिक्षार्थं प्रविशति, अशोधने एते दोषाः—गृहीतपात्रो यदि व्युत्सृजति तदोड्डाहः, [१]अन्यस्यार्पितपात्रो यदि व्युत्सृजति तदा द्रवाभावे उड्डाहः ॥६३१॥

अइदूरगमणफिडिओ, अलहंतो एसणंपि पेल्लेज्जा ।
उड्डावण पंतावण, धरणे मरणं च छक्काया ॥६३२॥

यदि कायिक्यादिव्युत्सृजनार्थं दूरं स्थण्डिले याति, तदा भिक्षावेलाया भ्रष्टः सन् भिक्षामनाप्नुवन्नेषणां प्रेरयेद्—अतिक्रामयेत् । अथ तत्रैव गृहासन्ने व्युत्सृजतः स गृहपतिस्तदशुचिं त्याजयति । अथवा पंतावणं—ताडनं क०, एतद्दोषभयात् धरणे पुरीषवेगस्य मरणं स्यात् । व्युत्सृजतस्तु षट्कायविराधना स्थण्डिलाभावात्, [२]द्वारम् ॥६३२॥

१ 'अन्य×× उड्डाहः' पर्यन्तो भागः kप्रतौ नास्ति ।सं०। २ [ 'आवस्सय'त्ति द्वारं गतं 'संघाडए'त्ति व्याख्यायते ।सं०।

एकाणियस्स दोसा, इत्थी साणे तहेव पडिणीए ।
भिक्खविसोहि महव्वय, तम्हा सबितिज्जए गमणं ॥६३३॥

एकाकिनः स्त्री–श्व–प्रत्यनीकजनितोपघाता भवन्ति । भिक्षाविशुद्धिरेकस्य न भवति महाव्रतोपघातश्च; तस्मात् सद्वितीयेन गम्यमिति ॥६३३॥ अथ द्वारगाथां व्याख्यानयति—

संघाडगअग्गहणे, दोसा एगस्स इत्थियाउ भवे ।
साणे भिक्खुवओगं, संजमआएगयरदोसा ॥६३४॥

एकाकिनं साधुं दृष्ट्वा कदाचित् स्त्री गृह्णीयात् । शुन्युपयोगे संयमोपघातो, भिक्षोपयोगे आत्मोपघातः । यथासंख्यमेकतरतो दोषः ॥६३४॥

दोण्णि उ दुद्धरिसतरा, एगोत्ति हणे पदुट्ठपडिणीए ।
तिघरगहणे असोही, अग्गहण पदोसपरिहाणी ॥६३५॥

द्वौ मुनी दुष्प्रधृष्यतरौ भवतः, एकाकिनं दृष्ट्वा हन्ति प्रविष्टः सन् प्रत्यनीकः, तस्मात् सङ्घाटकेन गम्यम्, एकाकिनो युगपद्गृहत्रयविनिर्गतभिक्षाग्रहणेऽशुद्धिर्भवति । अथैकां भिक्षां गृह्णाति यस्यामुपयोगो दत्तः, तदा द्वयोः प्रद्वेषो भ०, येन नास्मदीयं गृह्णाति । अग्रहणे परिहानिर्भिक्षाया भ० ॥६३५॥ महाव्रतद्वारम्—

पाणिवहो तिसु गहणे, पउंजणे कोंटलयस्स बितियं तु ।
तिण्णं (प्र.तेणं) उच्छुद्धाई, परिग्गहोऽणेसणग्गहणे ॥६३६॥

गृहत्रयस्य भिक्षाग्रहणे प्राणिवधः कृतो भ०, ततः प्रथमव्रतभङ्गः । तथैकाकी कुटिलं ज्योतिषं प्रयुङ्क्ते, तच्चोपघातकरमवश्यं प्रोच्यते, उपघातजनकं चानृतं, तदुच्चारणे द्वितीयव्रतभङ्गः । उच्छुद्धं–विक्षिप्तं हिरण्यादि दृष्ट्वा लाति एकाकिनो मोहसम्भवात्, ततः 'तिण्णं'ति स्तैन्यदोषस्तृती०, अनेषणीयपरिग्रहणे परिग्रहकृतो दोषः ॥६३६॥ चतुर्थव्रतस्य परिग्रह एवान्तर्भावात् मध्यमतीर्थकृतां, [१]पश्चिमस्य तु मतेन पृथग्, आह—

विहवा पउत्थवइया, पयारमलभंति दट्ठुमेगागी ।
दारपिहाणय गहणं, इच्छमणिच्छे य दोसा उ ॥६३७॥

विधवा [२]प्रोषितभर्तृका, प्रचारमलभमाना यास्त्रिप्रकाराः [३]स्त्रियः, ता एकाकिनं दृष्ट्वा गृह्णन्ति । यदीच्छति तां तदा संयमवि०, अनिच्छति सैव लोकस्य कथयति । यदुत-अयं मामभिभवति, तत उड्डाहः ॥६३७॥ व्याख्याता प्रतिद्वारगाथा । एभिः कारणैरेकाकी भवति—

गारविए काहीए, माइल्ले अलस लुद्ध णिद्धम्मे ।
दुल्लभअत्ताहिट्ठिय, अमणुण्णे वा असंघाडो ॥६३८॥

एकाकिनो भिक्षाग्रहणे सर्वमहाव्रतभङ्गप्रसङ्गः ।



१ पश्चिमजिनमतेन चतुर्थमाह–।Z। २ प्रोषितपतिका ।Z। ३ स्त्रिय एकाकिनं ।k।

एभिः कारणैरसङ्घाटको भवति, द्वारगाथेयम् ॥६३८॥ आद्याऽवयवमाह—

संघाडगरायणिओ, अलद्धिओमो य लद्धिसंपण्णो ।
जेट्ठग्ग पडिग्गहगं, मुय गारवकारणा एगो ॥६३९॥

कस्यचित्सङ्घाटकस्य पर्यायज्येष्ठो रत्नाधिकोऽलब्धिकः । 'ओम'त्ति पर्यायलघुर्द्वितीयो लब्धिसम्पन्नः, सोऽग्रतो विहरति । [1]पुनश्च मण्डल्यां भोजनकाले गुरुर्वक्ति यदुत ज्येष्ठार्यस्याग्रतः पतद्ग्रहं मुञ्चेत्युक्ते लघुश्चिन्तयति, यदुतास्यां वेलायामयं ज्येष्ठार्यः संजातो; न तु भिक्षावेलायां, ततोऽनेन गर्वेणैकाकी भवति ॥६३९॥ 'काही'त्ति द्वारम्—

काहीउ कहेइ कहं, बिइओ वारेइ अहव गुरुकहणं ।
एवं सो एगागी, माइल्लो भद्दगं भुंजे ॥६४०॥

कथकः कथां कुर्वन्नास्ते, द्वितीयो वारयति मा कुथा धर्मकथां ग्लानादयः सीदन्ति, न तिष्ठति; गुर्वग्रे कथयति, गुरुवारितोऽपि न तिष्ठति, तत एकाकी भ०, द्वारम् । मायावी-भद्रकान्न' भोक्तुमना एकाकी भ० ॥६४०॥ अलसद्वारम्—

अलसो चिरं ण हिंडइ, लुद्धो ओहासए विगईओ ।
णिद्धम्मो णेसणाई, दुल्लहभिक्खे व एगागी ॥६४१॥

१ परश्च ।k।

भिक्षायामेकाकिभवने गर्वादिकारणानि ।

अलसश्चिरं न हिण्डति, द्वारम्, लुब्धो विकृतीः प्रार्थयति, द्वारम्। [1]निर्द्धर्मा नैषणादि करोति, द्वारम्। दुर्भिक्षे दुर्लभायां [भिक्षायां] सङ्घाटक नेच्छति ॥६४१॥ 'अत्ताहिट्ठिए'त्ति द्वारम्—

अत्ताहिट्ठियजोगी, असं(प्र.अ सं)खडीओ वऽणिट्ठ सव्वेसिं।
एवं सो एगागी, हिंडइ उवएसऽणुवदेसा ॥६४२॥

आत्माधिष्ठितः—आत्मलब्धिको योगी स एकाकी भ०, द्वारम्। 'अस'० [2]कलहकारकः सर्वेषामनिष्टः सन्नेकाकी भ०, 'उव'० गुरुणा अनुज्ञातोऽननुज्ञातो वा, उक्तं सङ्घाटकद्वारम् ॥६४२॥ उपकरणद्वारमाह—

सव्वोवगरणमाया, असहू आयारभंडगेण सह।
णयणं तु मत्तगस्सा, ण य परिभोगो विणा कज्जे ॥६४३॥

उत्सर्गेण सर्वमुपकरणमादाय भिक्षामटति, यद्यसमर्थस्तत आचारभण्डकेन समं, आचारभण्डकं—पात्रं पटलानि रजोहरणं दण्डकः कल्पद्वयं चोलपट्टमात्रकमेतद् गृहीत्वा याति। मात्रकस्य कार्येण संसक्तादिना परिभोगः क्रियते। 'मत्ते'त्ति गयं ॥६४३॥ 'काउस्सग्ग'त्ति द्वारम्—

आपुच्छणत्ति पढमा, बिइया पडिपुच्छणा य कायव्वा।
आवस्सिया य तइया, जस्स य जोगो चउत्थो उ ॥६४४॥

१ अनेषणादि० ।ऽ। २ 'संखडीउ'त्ति कलहकारकः ।ऽ।

भिक्षायामेकाकिभवने गर्वादि कारणानि।

[1]प्रथममापृच्छति संदिशत, उपयोगं करोमि?, 'कहं लेसु'त्ति पडि[2]पुच्छा [प्रतिपृच्छा], [3]आवश्यकी—कायिकीव्युत्सृजनरूपा, 'जस्स[4]' ० यद्यत्संयमोपकारे वर्त्तते तत्तद् ग्रहीष्यामि ॥६४४॥ एतानि द्वाराणि सप्रतिपक्षाण्यभिधीयन्ते—

प्रमाणादीनि सप्रतिपक्षाणि ।

आयरियाईणट्ठा, ओमगिलाणट्ठया य बहुसोऽवि ।
गेलण्णखमगपाहुण, अतिप्पएऽतिच्छिए यावि ॥६४५॥

आचार्यादीनामर्थे, ओम—ग्लानार्थं [च] बहुशोऽपि वाराः प्रविशति प्रमाणप्रतिपक्ष उक्तः। कालद्वये प्रवेष्टव्यं, तत्प्रतिपक्षो ग्लान—क्षपक—पारणार्थेऽतिप्रत्यूषस्यपि प्रविशति तथा अतिक्रान्तायामपि भिक्षावेलायां प्रवि० बहुशः ॥६४५॥

अणुकंपापडिसेहो, कयाइ हिंडेज्ज वा ण वा हिंडे ।
अणभोगि गिलाणट्ठा आवस्सगऽसोहइत्ताणं ॥६४६॥

गृही एवं वक्त्यनुकम्पया, यदुत—त्वया इयत्यां वेलायां ग्लानार्थं पुनरेत्यं, साधुः प्रतिषेधयति—यतः कदाचित्प्रत्यूषसि हिण्डामि कदाचिन्न, एवं भणता उद्गमदोषाः परिहृता भवन्ति, न च प्रतिषेधः कृतः स्यात्। आवश्यकयतनोच्यते—अनाभोगेन ग्लानार्थमावश्यकमशोध्य गतः ॥६४६॥

१ 'प्राघूर्णकार्थे' इति पदं युक्तम् ।सं०।

आसण्णाउ णियत्ते, कालि पहुप्पंति दूरपत्तोवि ।
अपहुप्पंते तत्तो च्चिय, एगु घरे वोसिरे एगो ॥६४७॥

ततः सञ्जातकायिक्यादिकार्य आसन्नान्निवर्त्तते, प्रभूते काले दूरतोऽपि निवर्त्तते, यदि न प्रभूतः कालः, ततो यतो भिक्षार्थं गतस्तत एव व्युत्सृजति, एको भाजनं धारयति एकस्तु व्युत्सृजति ॥६४७॥

भावासण्णो समणुण्ण, अण्णओसण्णसड्ढवेज्जघरे ।
सल्लपरूवणवेज्जो, तत्थेव परोहडे वावि ॥६४८॥

अथवा भावासन्नोऽत्यन्तासहिष्णुः ततः समनोज्ञानामासन्नप्रतिश्रये गत्वा व्युत्सृजति, तदभावेऽमनोज्ञानां, तदभावेऽवसन्नानां तदभावे श्राद्धगृहे, तदभावे वैद्यगृहे यात्वा प्ररूपयति 'तिण्णि सल्ला महाराये'त्ति एवं स्मारितो वैद्यो वक्ति—अत्र पश्चाद्गृहे व्युत्सृज 'परोहडे'—पश्चादङ्गणे वा ॥६४८॥

[1]एएसिं असईए, रायपहे दो घराण वा मज्झे ।
हत्थं हत्थं मुत्तुं, मज्झे सो णरवइस्स भवे ॥६४९॥

१ इयं गाथा मुद्रितौघनिर्युक्तिद्रोणीयवृत्तौ नास्ति तथापि श्रीमताऽवचूरिकारेण कुतोऽपि प्राप्य विवृतेति मुद्रिताऽत्र ।सं०।

एतेषामभावे नरपतिपथे—राजमार्गे व्यु०, यतोऽसौ सामान्यो लोकस्य, तदभावे द्वयोर्गृहयोर्मध्ये हस्तमात्रं हस्तमात्रं मुक्त्वा व्यु०, यतः स मध्यप्रदेशो नरपतिपरिग्रहः ॥६४९॥

उग्गहकाईयवज्जं, छंडण ववहारु लब्भए तत्थ ।
गारविए पण्णवणा, तव चेव अणुग्गहो एस ॥६५०॥

तदभावे [राजमार्गाऽभावे] कायिकीवर्जं गृहस्थाऽवग्रहे पुरीषं व्यु०, [१]यतस्त्याजने राजकुले व्यवहारं करोति, जहा चाणक्कएवि भणियं—'जइ काइयं न वोसिरइ तओ अदोसो' अयमित्थंभूतस्तत्र व्यवहारो लभ्यते। सङ्घाटकयतनोच्यते। 'गार'० गर्वितमेकाकीभवन्तमाचार्याः प्रज्ञापयन्ति—यत्तवैवानुग्रहोऽयं यदुत स्वाध्यायादि कुर्वन्ति। एवमन्येषामप्यलसादीनां प्रज्ञापना ॥६५०॥ दुर्लभपदव्याख्यां कुर्वन्निदमाह—

जइ दोण्ह एग भिक्खा, ण य वेल पहुप्पए तओ एगो ।
सव्वेवि अत्तलाभी, पडिसेहमणुण्ण पियधम्मे ॥६५१॥

यदि तत्र क्षेत्रे पर्यटतामेकैव भिक्षा द्वयोरपि लभ्यते, न च कालः पर्याप्यते, तदैकाकी हिण्डते, 'अत्ताहिट्ठिय'त्ति यतनामाह—यदि सर्वेऽपि खग्गूडा आत्मलब्धिका भवन्ति, तदाचार्यः प्रतिषेधं करोति, प्रियधर्मे आत्मलब्धिकेऽनुज्ञां करोति, तत एवमेकाकी स्यात् ॥६५१॥ अमणुण्णयतनामाह—



१ कायिक्या सह पुरीषत्याजने व्यवहारो चलति नान्यथेति भावः ।सं०।

अमणुण्ण अण्णसंजोइया उ सव्वेवि णेच्छण विवेगो ।
बहुगुणतदेकदोसे, एसणबलवं ण उ विगिंचे ॥६५२॥

अमनोज्ञो रटनशीलस्तदा अन्येन सह योज्यते । यदि सर्वेऽपि नेच्छन्ति तदा परित्यागः तस्य कार्यः, अथाऽयं बहुगुणसंपन्नः स एवैको दोषः, एषणायां च बलवांस्तदा न परित्यज्यते ॥६५२॥ यदुक्त[1]मेकाणियस्स दोसा इत्यादि (गा० ६३३) तद्यतनामाह—

इत्थीगहणे धम्मं, कहेइ वयठवण गुरुसमीवंमि ।
इह चेवोवर रज्जू, भएण मोहोवसम तीए ॥६५३॥

स्त्रिया गृहीतः सन् धर्मकथां करोति, अथ तथाऽपि न तिष्ठति तदैवं वक्ति—गुरूणां समर्प्य व्रतान्यायामीत्यभिधाय नश्यति; अथ तथाऽपि न लभ्यते गन्तुं, ततो भणतीहाऽपवरके व्रतानि मुञ्चामीति प्रविश्योल्लम्बनार्थं रज्जुं गृह्णाति, ततस्तेन भयेन कदाचिन्मुञ्चति, अथवा म्रियते ॥६५३॥ श्वादियतनामाह—

साणा गोणाइघरे, परिहरऽणाभोगकुड्डकडणीसा ।
वारइ य दंडएणं, वारावे वा अगारेहिं ॥६५४॥

[1] मेगागिणस्स० ।k। ।S।

श्वानो गवादयश्च येषु गृहेषु तानि परित्यजति, अनाभोगप्रविष्टः कुड्यकटनिश्रयोत्तिष्ठति । दण्डेनाऽग्रतो वारयति अगारैर्वा [1]वारापयति ॥६५४॥ प्रत्यनीकयतनामाह—

पडिणीयगेहवज्जण, अणभोगपविट्ठ बोलणिक्खमणं ।
मज्झे तिण्ह घराणं, उवओग करेउ गेण्हेज्जा ॥६५५॥

अनाभोगेन प्रविष्टः प्रत्यनीकैश्च ग्रहीतुमारब्धो बोलं करोति—उच्छब्दयति। येन लोको मिलति, ततो निर्गच्छति। भिक्षाविशोधिमाह—मध्यस्थितत्रयाणां गृहाणामुपयोगं दत्त्वा पङ्क्त्या स्थितानां भिक्षां गृह्णाति ॥६५५॥ पञ्चमहाव्रत-यतनामाह—भिक्षायामुपयोगं ददता प्राणातिपातरक्षणं कृतमेव । द्वितीयमहाव्रतयतनामाह—

वेंटल पुट्ठो ण याणे, आइण्णातीणि वज्जए ठाणे ।
सुद्धं गवेस उंछं, पंचऽइयारे परिहरंतो ॥६५६॥

वेण्टलं-निमित्तादि पृष्ट एवं वक्ति—न जानेऽहम् । तृतीयव्रतयतनामाह—यत्र हिरण्यादि विक्षिप्तमास्ते तदाऽऽकीर्णं[स्थानं] वर्जनीयम् । पञ्चमव्रतयतनामाह शुद्धमुद्गमादिदोषरहितमुञ्छं [भक्तं] गवेषयति। एवं पञ्चातिचारान् परिहरन् ॥६५६॥ व्रतानां [मध्ये] चतुर्थमहाव्रत[2]यतनोक्तैव, उपकरणयतनामाह—

१ 'वारयति' चेति द्रोणीयवृत्तौ मुद्रितायाम् ।सं०।  २ 'इत्थीगहणे' इत्यादि ६५३तमाया गाथायाम् ।सं०।

जहण्णेण चोलपट्टो, वीसरणालू गहाय गच्छेज्जा ।
उस्सग्ग काउ गमणे, मत्तय(ऽ)गहणे इमे दोसा ॥६५७॥

यस्तु विस्मरणालुः स जघन्येन चोलपट्टमादाय याति। उपलक्षणं चात्र चोलपट्टकः, अन्यथा पात्रकं पटलानि रजोहरणं दण्डकं कल्पद्वयं च लात्वा याति । मात्रकयतनामाह—मात्रकं लात्वा गन्तव्यं, कृत्वा चापयोगकायोत्सर्गम् ॥६५७॥ मात्रकाऽग्रहणे एते दोषाः—

आयरिए य गिलाणे, पाहुणए दुल्लहे सहसलाभे ।
संसत्त भत्तपाणे, मत्तगगहणं अणुण्णायं ॥६५८॥

आचार्याद्यर्थं, दुर्लभं वा [1]किञ्चिल्लभ्यते, अकस्माद्वा, संसक्तभक्तपानग्रहणार्थं मात्रकमऽनुज्ञातम् ॥६५८॥ इमां गाथां व्याख्यानयति—

पाउग्गायरियाई, कह गिण्हउ मत्तए अगहियंमि ।
जा एसि विराहणया, दवभाणे जं दवेण विणा ॥६५९॥

प्रायोग्यमाचार्यादीनां क्व गृह्णातु मात्रकेऽगृहीते सति ?, या तेषामाचार्यादीनां विराधना सा तेनाङ्गीकृता

१ किञ्चिद्द्रव्यं० ।S।

भवति, द्रवभाजने गृह्णतो द्रवेण विना या विराधना सा भवति ॥६५९॥

दुल्लहदव्वं व सिया, घयाइ गिण्हे उवग्गहकरं तु ।
पउरऽण्णपाणलंभो, असंथरे कत्थइ सिया उ ॥६६०॥

दुर्लभं द्रव्यं घृतादि स्यात्ततश्च तत्र घृतादि गृह्यते, यत उपष्टम्भकरं हि तत्। आकस्मिकः प्रचुरान्नपानलाभः स्यात्ततोऽसंस्तरतां मुनीनां कुत्रचित् स्याद् ग्रहणम् ॥६६०॥

संसत्तभत्तपाणे, मत्तग सोहेउ पक्खिवे उवरिं ।
संसत्तगं च णाउं, परिट्ठवे सेसरक्खट्ठा ॥६६१॥

संसक्तभक्तपानग्रहणे मात्रके संशोध्य पात्रोपरि प्रक्षिपेत् । मात्रकेऽशुद्धं संसक्तं ज्ञात्वा तत्क्षणादेव परिष्ठापयति शेषभक्तरक्षणार्थं, मा भूत्तद्गन्धेन शेषस्यापि संसक्तिः ॥६६१॥ एभिः कारणैर्न गृह्णाति—

गेलण्णकज्जतुरिओ, अणभोगेणं च लित्त अग्गहणं ।
अणभोगगिलाणट्ठा, उस्सग्गादीणि णवि कुज्जा ॥६६२॥

ग्लानकार्येण त्वरितो गतः, अनाभोगेन वा, लिप्ते वा मात्रके, मात्रं विनाऽपि याति । उत्सर्गयतनामाह—उपयोगं विना अनाभोगेन गतो ग्लानार्थं वा याति। आदिशब्दादावश्यकं च न कुर्यात् ॥६६२॥ 'जस्स य जोगो'त्ति अस्य विधिमाह——

जस्स य जोगमकाऊण, णिग्गमो ण लभई तु सच्चित्तं ।
ण य वत्थपायमाई, तेण्णं गहणे कुणसु तम्हा ॥६६३॥

'जस्स य जोगं' इत्यकृत्वा निर्गत एवं न लभते, सचित्तं प्रव्रज्यार्थमुपस्थितं गृहस्थं, नाप्यचित्तं पात्रवस्त्रादि, 'यस्य योगं' इत्येवमकृत्वा गृह्णतस्स्तैन्यदोषो भवति, तस्मात् कुरु 'यस्य योगं' इत्येवम् ॥६६३॥

'जस्य य जोगो सत्यकरणे स्तैन्यम् ।

सो आपुच्छि अणुण्णाओ, सग्गामे हिंड अहव परगामे ।
सग्गामे सइ काले, पत्ते परगामि वोच्छामि ॥६६४॥

[1]संदिसह उपयोगं करोमि । [2]'कहं लेसु'त्ति आपृच्छने गुरुणा अनुज्ञात [3]आवश्यकीं कृत्वा, [4]यस्य च योग इत्येवमभिधाय निर्गत्य स्वग्रामे हिण्डते, सति काले प्राप्तायां-भिक्षावेलायाम् , अधुना परग्रामे वक्ष्यामि हिण्डतो विधिम् ॥६६४॥

भिक्षावेला-पृच्छाविधिः ।

पुरतो जुगमायाए, गंतूणं अण्णगामबाहिठिओ ।
तरुणे मज्झिमथेरे, णव पुच्छाओ जहा हेट्ठा ॥६६५॥

पुरतो युगमात्रं निरीक्षमाणोऽन्यग्रामं प्राप्य बहिःस्थः पृच्छति । किं विद्यते? भिक्षावेला अत्र [ग्रामे] उत नेति, कान् पृच्छति ?, अत आह—यथाऽधस्तात् प्रतिपादिता, पृच्छा नवविधा—पुरुष-स्त्री-नपुंसकभेदात् त्रिधा, तरुणमध्यमस्थविरभेदैरेकैकः, एवं नवविधा पृच्छा ॥६६५॥ यदि तत्र भिक्षावेला जाता तदाऽयं विधिः—

पायपमज्जण पडिलेहणा उ, भाणदुग देसकालंमि ।
अप्पत्तेऽचिय पाए, पमज्ज पत्ते य पायदुगं ॥६६६॥

ग्रामासन्ने उपविश्य पादौ प्रमार्जयति, पुनश्च पात्रद्वयं प्रत्युपेक्षते, एवं देशकाले भिक्षावेलायां प्राप्तायां करोति। अथाऽद्याऽपि भिक्षाकालो न जातस्तदा पादौ प्रमार्ज्य तावदास्ते यावद्भिक्षाकाले पात्रद्वयं प्रत्युपेक्षेत ॥६६६॥

समणं समणिं सावग-सावियगिहि अण्णातित्थि बहि पुच्छे ।
अत्थिह समण? सुविहिया, सिट्ठे तेसालयं गच्छे ॥६६७॥

श्रमणं श्रमणीं श्रावकं श्राविकां गृहस्थमन्यतीर्थिकं वा दृष्ट्वा बहिः पृच्छति, तत्र प्रविशन् सन्त्यत्र श्रमणाः सुविहिताः?, शिष्टे, तेषामालये गच्छेत् ॥६६७॥

समणुण्णेसु पवेसो, बाहिं ठविऊण अण्ण किइकम्मं ।
खग्गूडोसण्णेसुं, ठवणा उच्छोभवंदणयं ॥६६८॥

समनोज्ञेष्वेकसामाचारीप्रतिबद्धेषु मध्ये प्रविशति, अमनोज्ञेषु बहिरुपकरणं मुक्त्वा प्रविश्य कृतिकर्म करोति। संविग्न-पाक्षिकाव[1]सन्नेपु बहिस्थ एव वन्दनं कृत्वा अबाधां पृच्छति। खग्गूडप्रायावसन्नेषु बहिरुपकरणं संस्थाप्य प्रविश्य तेषामुत्क्षोभवन्दनं करोति ॥६६८॥

१ अवमग्नेषु ।k.।S।

पडिकुट्ठकुलाणं पुण, पंचविहा थूभिआ अभिण्णाणं ।
भग्गघरगोपुराई, रुक्खा णाणाविहा चेव ॥६७४॥

पञ्चविधा स्तूपिका अभिज्ञानं, कृष्णनीलरक्तपीतशुक्लभेदभिन्ना पञ्चधा, तथा गोपुरसमीपे बहिरन्तर्वा वृक्षा नानाविधा अभिज्ञानं प्रतिषिद्धकुलानाम् ॥६७४॥ एतेषु कुलेषु न प्रवेष्टव्यम्—

ठवणा मिलक्खुणेड्डं, अचियत्तघरं तहेव पडिकुट्ठं ।
एयं गणधरमेरं, अइक्कमंतो विराहेज्जा ॥६७५॥

स्थापनाकुलानि, 'मिलक्खू'-[1]म्लेच्छगृहं, अचियत्तकुलं[अप्रीतिमत्कुलं], प्रतिकुष्टं—छिम्पकादिगृहं सूतकोपेतगृहं वा, एतेषु न प्रवेष्टव्यम्, इमां गणधरमर्यादामतिक्रामन् विराधयेद्दर्शनादि ॥६७५॥ आह—प्रतिकुष्टकुलेषु प्रविशतो न कश्चिज्जीववधो भवति ततः किमर्थं परिहारः ?, उच्यते—

छक्कायदयावंतोऽवि, संजओ दुल्लहं कुणइ बोहिं ।
आहारे णीहारे, दुगुंछिए पिंडगहणे य ॥६७६॥

[2]आहारो नीहारो यद्यगुप्तः, स कुर्वन् जुगुप्सितेषु छिम्पकादिषु पिण्डग्रहणं, दुर्लभां बोधिं करोति ॥६७६॥

१ म्लेच्छगृह, साधुदर्शनेऽप्रीतिकृत्कुल, प्रतिकुष्ट० ।प्र।
२ योऽगुप्ताहारनीहारकारको जुगुप्सितछिम्पकादिपिण्डग्राहकश्च स बोधिं दुर्लभां करोतीति सरलार्थः ।स०।

नन्तु 'य' इह जुगुप्सितास्तेऽन्यत्राऽजुगुप्सितास्ततः कथं परिह्रियन्ते ?, उच्यते—

जे जहि दुगुंछिया खलु, पव्वावणवसहिभत्तपाणेसु ।
जिणवयणे पडिकुट्ठा, वज्जेयव्वा पयत्तेणं ॥६७७॥

ये यत्र विषये जुगुप्सिताः, प्रव्रज्यां वसतिं भक्तपानं चाङ्गीकृत्य, एते जिनवचनप्रतिकुष्टा वर्जनीयाः ॥६७७॥

अट्ठारस पुरिसेसुं, वीसं इत्थीसु दस नपुंसेसुं ।
पव्वावणाए एए, दुगुंछिया जिणवरमयंमि ॥६७८॥ सुगमा ॥६७८॥

दोसेण जस्स (प्र.जेण)अयसो, आयासो पवयणे य अग्गहणं ।
विप्परिणामो अप्पच्चओ य कुच्छा य उप्पज्जे ॥६७९॥

येन दोषेनाऽयशो भवति, आयासः—प्रवचने पीडा भवति, अग्रहणं व्रतादेः, विपरिणामो वा श्राद्धस्य शैक्षस्य च भवति, अप्रत्ययो वा शासने येन भवति, जुगुप्सा येनोत्पद्यते, तन्न कार्यम् ॥६७९॥ पुनरेवं कुर्वतो भगवतेदमुक्तम्—

पवयणमणपेहंतस्स, तस्स णिद्धंधसस्स लुद्धस्स ।
बहुमोहस्स भगवया, संसारोऽणंतओ भणिओ ॥६८०॥

गेलण्णाइ-अबाहा, पुच्छिय सयकारणं च दीवेत्ता ।
जयणाए ठवणकुले, पुच्छइ दोसा अजयणाइ ॥६६९॥

सर्वेष्वनन्तरोदितेषु ग्लानाद्यबाधां पृष्ट्वा; स्वागमनकारणं दीपयित्वा; वक्ष्यमाणयतनया स्थापनाकुलानि पृच्छति ॥६६९॥ कानि तानीत्याह—

दाणे अभिगमसड्ढे, संमत्ते खलु तहेव मिच्छत्ते ।
मामाए अचियत्ते, कुलाइ जयणाइ दायंति ॥६७०॥

एतानि कुलानि ते—वास्तव्यास्तस्य साधोर्यतनया दर्शयन्ति ॥६७०॥ तथा चैतानि—

सागारि वणिम सुणए, गोणे पुण्णे दुगुंछियकुलाइं ।
हिंसागं मामागं, सव्वपयत्तेण वज्जेज्जा ॥६७१॥

सागारिकः शय्यातरस्तद्गृहं दर्शयन्ति, 'वणीम'त्ति दरिद्रस्तद्गृहं दर्शयन्ति, तत्रैतदर्थं न गम्यते—स हि असति भक्ते लज्जां करोति, यदि वा यत्किञ्चिदस्ति तद्दत्वा आत्मार्थं रन्धनं करोति, दुष्टश्व[१]वत्कुलं, दुष्टगोमद्गृहं, 'पुण्ण'त्ति

१ श्वकुलं ।D।

पुण्यार्थं यत्र रन्धयित्वा श्रमणादीनां दीयते, अथवा यद् गृहं, बहुलोकैः पूर्णं, वा जुगुप्सितं—छिम्पकादि, हिंसागं—सौनिकादिगृहं मामाकं, एतानि दर्शितानि सन्ति सर्वप्रयत्नेन त्याज्यानि ॥६७१॥ [1]यदुक्तं स्थापनाकुलानि यतनया पृच्छनीयानि कथनीयानि च, तदाह—

स्थापनाकुलपृच्छनादौ यतना ।

वाहाए अंगुलीय व, लट्ठीइ व उज्जुओ ठिओ संतो ।
ण पुच्छेज्ज ण दाएज्जा, पच्चावाया भवे दोसा ॥६७२॥

बाहुं प्रसार्य गृहाभिमुखं तथा अङ्गुल्या यष्टया न पृच्छति, नाऽपि कथयति तथा ऋजुर्गृहाभिमुखः स्थितो न पृच्छेन्नाऽपि दर्शयेत् । यतस्तत्र प्रत्यपायजनिता दोषाः ॥६७२॥ के च ते इत्याह—

अगणीण व तेणेहि व, जीवियववरोवणं तु पडिणीए ।
खरओ खरिया सुण्हा, णट्ठे वट्टक्खुरे संका ॥६७३॥

यद् गृहं बाहुं प्रसार्य पृष्टं कथितं च साधुना तद् गृहं कदाचिदग्निना दग्धं भवति, जीवितव्यपरोपणं वा गृहस्थस्य प्रत्यनीकेन कृतं, 'खरिय'त्ति द्व्यक्षरिका दासी नष्टा भवति, 'खरओ' द्व्यक्षरो वा दासः प्रायो नष्टो भवति, स्नुषा 'केनचित् सह'गता, एतेषु नष्टेषु सत्सु साधोरुपरि शङ्का स्यात् । 'वृत्तखुरः'—अश्वप्रधानः केनचिदपहृतो भवति, ततः साधोरुपरि बाह्वादिना दर्शयतः शङ्का भवति ॥६७३॥ प्रतिक्रु(कु)ष्टकुलान्येभिरभिज्ञानैर्वर्जयति—

॥२७८॥

1 ६६९तमगाथोत्तरार्धे ।सं०।

प्रवचनमनपेक्षमाणस्य–निद्धन्धसस्य निःशूकस्य–लुब्धस्य भगवताऽनन्तः संसार उक्तः ॥६८०॥ अन्यस्याप्येवं कुर्वतोऽनन्त एव संसारस्तदर्थमाह—

जो जह व तहव लद्धं, गिण्हइ आहारउवहिमाईयं ।
समणगणमुक्कजोगी, संसारपवड्ढओ भणिओ ॥६८१॥

सुगमा ॥६८१॥ एवं तावज्ज्ञानवतामपि दोष उक्तः । ये पुनराचार्येण मुण्डितमात्रा अगीतार्थास्ते सुतरामेषणादि न कुर्वन्ति, तदाह—

एसणमणेसणं वा, कह ते णाहिंति जिणवरमयं वा ।
कुरिणंमिव पोयाला, जे मुक्का पव्वईमेत्ता ॥६८२॥

'कुरिणंमि' महत्यरण्ये 'पोयाला' मृगादिपौ(पो)तलकास्त इव यूथपतिना मुक्तः सन्तो विनश्यन्ति । एवं तेऽपीति, एते आचार्यदोषेणैवंविधाः स्युः ॥६८२॥ एते स्वदोषेण, के च ते तदाह—

गच्छंमि केइ पुरिसा, सउणी जह पंजरंतरणिरुद्धा ।
सारणवारणचइया, पासत्थगया पविहरंति ॥६८३॥

शकुनीव पञ्जरान्तरनिरुद्धाः स्मारणादिभिः त्याजिताः सन्तः पार्श्वस्थादिषु प्रविहरन्ति॥६८३॥ '[1]जह सागरंमि'० स्पष्टा, 'एवं गच्छसमुद्दे०' स्पष्टा—

तिविहोवघायमेयं, परिहरमाणो गवेसए पिंडं ।
दुविहा गवेसणा पुण, दव्वे भावे इमा दव्वे ॥६८४॥

त्रिविधस्य ज्ञानदर्शनचारित्रस्योपघातरूपं पिण्डं परिहरन्, गवेषयेत् पिण्डं, सा गवेषणा द्विधा—द्रव्यभावभेदेन ॥६८४॥ द्रव्यत आह—

जियसत्तुदेवि-चित्तसभ-पविसणं कणगपिट्ठ-पासणया ।
डोहल दुब्बल पुच्छा, कहणं आणा य पुरिसाणं ॥६८५॥
सीवण्णिसरिसमोदग-करणं सीवण्णिरुक्खहेट्ठेसु ।
आगमण कुरंगाणं, पसत्थअपसत्थउवमा उ ॥६८६॥
विइयमेयं कुरंगाणं, जया सीवण्णि सीदई ।
पुरावि वाया वायंति, ण उणं पुंजगपुंजगा ॥६८७॥

१ 'जह०' तथा 'एवं'नामकगाथाद्वयं एकोननवतितमे पृष्ठे मुद्रितमस्ति, अतः तत एव विलोकनीयम् ।स०।

वसन्तपुरे जितशत्रुः [नृपः], धारिणी प्रिया, सा चित्रसभां गता, सा गुर्विणी, कनकपृष्ठमृगदर्शनात्तच्चर्मशयनमांसाशनोत्पन्नदोहदा दुर्बला, पृष्टे ज्ञाते च कारणे राज्ञाऽऽदिष्टा नराः—व्रजत कनकपृष्ठमृगार्थं, तेषामाहारः श्रीपर्णीफलानि, तदा ते नराः श्रीपर्णीफलाकारं कृत्वा कणिक्कफलानि कृत्रिमाणि कृत्वा अटवीं गत्वा श्रीपर्णीफलानि पुंजय पुंजया हिट्ठा ठवंति, मृगास्तद् दृष्ट्वा यूथपस्य साहंति, स प्राह—यूयं स्थ, अहं गत्वा पश्यामि, दृष्ट्वोक्तं केनाप्यस्मद्ग्रहणार्थं माया कृता, यतोऽकालः श्रीपर्णीफलानां, अथ भणथ अकालेऽपि स्युः, तत्सत्यम्, किन्तु न पुंजा २, अथ भणथ वातेन तथा कृताः, तन्न—यतः पुरापि वाता वान्ति, न पुनः फलानि पुञ्जाः २ स्युः। [1]अतो न गच्छामः तत्र, इत्युक्ते ये स्थितास्ते सुखिनः, अन्ये न ॥६८५–६८६–६८७॥

इत्थिगहणंमि गिम्हे, अरहट्टेहिं भरणं तु सरसीणं ।
अच्चुदएण ण लवणा, अभिरूढा गयकुलागमणं ॥६८८॥
विइयमेयं गयकुलाणं, जहा रोहंति णलवणा ।
अण्णयावि झरंति सरा, ण एवं बहुओदगा ॥६८९॥

केनापि राज्ञा वनहस्तिग्रहणार्थमादिष्टाः पुरुषा भणन्ति,—यत्र ते हस्तिनश्चरन्ति तन्नलवनं—तृणवनं शुष्कं ग्रीष्मेण,

[1] अतो गच्छामस्तत्रेत्युक्ते ये स्थिता० ।k।

अतो राज्ञा तत्र कारिताऽरघट्टेन तन्नलवनं हरितं जातं, दृष्टं यूथपतिना, निवारयति निजकलभान्, यथा विदितं गजकुलानां यदा रोहन्ति नलवनानि, अत्र पुनरकालः, अथ भणथ–पानीयं प्रभूतं निर्झरेषु वर्त्तते, तेन नीलानि ? तन्न, यतोऽन्यदाऽपि पानीयं प्रभूतं स्यान्न च नीलानि तदा स्थ, माऽत्र प्रविशत, इत्युक्ते ये स्थितास्ते सुखिनो जाता नाऽन्ये ॥६८८–६८९॥ एषा द्रव्यगवेषणा भावगवेषणा त्वसौ—

ण्हाणाईसु विरइयं, आरंभकडं तु दाणमाईसु ।
आयरियणिवारणया, अपसत्थितरे उवणओ उ ॥६९०॥

जिनस्नात्रादौ मिलितसाध्वर्थं केनापि श्रावकेण आधार्कमादि कृतं, भोजनं वा साधून् दृष्ट्वा केनापि भद्रकेण कृतम्, तत्रानेके निमन्त्रिताः, स भद्रकश्चिन्तयत्येनं[नान्] दृष्ट्वा साधवोऽप्यायास्यन्ति, तज्ज्ञात्वा गुरुणा निवारिता ये स्थितास्ते सुखिनो नाऽन्ये ।६९०॥ अथवेयं भावगवेषणा—

धम्मरुइ अज्जवयरे, लंभो वेउव्वियस्स णभगमणं ।
जेट्ठामूले अट्ठम, उवरिं हेट्ठा व देवाणं ॥६९१॥

धर्मरुचिर्ज्येष्ठामासे आतापयत्यष्टमं च करोति, स्वग्रामे न हिण्डत्यन्यग्रामे हिण्डति, तं यान्तं दृष्ट्वैका देवता कुंकणरूपं विकुर्व्य, सालाधस्तिष्ठति भक्त्या आरनालभृताऽलाबुः, ततः समीपगं प्रेक्ष्यैको वक्ति–इदं काञ्जिकं पिब, स उवाच–अलमनेन, ततः परो वक्ति क इदं वहति ? साधोर्दीयते, पर आह–देहि त्यज वा, ततस्तेन साधुर्निमन्त्रितः

सन् द्रव्यतः-इदं काञ्जिकं शीतलं सुरभि च, क्षेत्रतो अस्यामटव्यां को दत्ते, कालो[कालतः] ज्येष्ठामासोऽत्र दुःखं-दातुं, भावतः हृष्टतुष्टः ततोऽत्र कारणेन भाव्यं, तदोपयुज्य तेन 'तस्य पादौ भूमावलगन्तौ नयने अनिमेषे च' दृष्ट्वा 'देव' इति ज्ञात्वा वर्जितम् । अथवा वज्रस्वामिदृष्टान्तः-अवन्त्यामष्टवर्षो वज्रर्षिर्वर्षाकाले सप्ताह[1]वद्दले तस्मिन् मित्रजृम्भका अमराः सार्थं विकृत्य राध्वा न्यमन्त्रयन् वज्रं, बिन्दौ स्थिते गतः, द्रव्यतः पक्वकूष्माण्डकं, क्षेत्रतः उज्जयिन्यसौ, कालतः प्रथमवर्षा, भावतो दायिका अनिमिषनयना, इत्युपयोगाद्वर्जने लाभो वैकुर्विकलब्धेर्नभोगमनलब्धेश्च ॥६९९॥ अधुना धर्मरुचिकथानकमुपसंहरन्नाह—

आयावणऽट्ठमेणं, जेट्ठामूलंमि धम्मरुइणो उ ।
गमणऽज्जगामभिक्ख-ट्ठया य देवस्स अणुकंपा ॥७००॥
कोकणरूवविउव्वण, अंबिलछड्डेमऽहं पियसु पाणं ।
छड्डेहित्ति य बिइओ, तं गिण्ह मुणित्ति उवओगो ॥७०१॥
तण्हाछुहाकिलंतं, दट्ठूणं कुंकणो भणइ साहुं ।
उज्झामि अंबकंजिय, अज्जो! गिण्हाहि णं तिसिओ ॥७०२॥

1 सप्ताहदुर्दिने तन्मित्र० ।ऽ।

सोऊण कोंकणस्स य, साहू वयणं इमं विचिंतेइ ।
गविसणविहिए णिउणं, जह भणियं सव्वदंसीहिं ॥७०३॥
गविसणगहणकुडंगं, णाऊण मुणी उ मुणियपरमत्थो ।
आहडरक्खणहेउं, उवउंजइ भावओ णिउणं ॥७०४॥
उक्कोसदव्वखेत्तं च, अरण्णं कालओ णिदाहो उ ।
भावे हट्ठपहट्ठो, हिट्ठा उवरिं च उवओगो ॥७०५॥
दट्ठूण तस्स रूवं, अच्छिणिवेसं च पायणिक्खेवं ।
उवउंजिऊण पुव्विं, गुज्झिगमिणमोत्ति वज्जेइ ॥७०६॥ ॥७००–७०१–७०२–७०३॥

[सुगमाः] गवेषणागहनमेव [1]कुडङ्ग'-गह्वरमित्यर्थः, तं ज्ञात्वा मुनिः ॥७०४–७०५॥ गुह्यकोऽयमिति [देवोऽयमिति] वर्जयति ॥७०६॥ वज्रस्वामिकथानकमुपसंहरन्नाह—

सत्ताहवद्दले पुव्व-संगई वणिय विरूवुवक्खडणं ।
आमंतण खुड्ड गुरू, अणुणवणं विंदु उवओगो ॥७०७॥

१ कुडुग० ।k।

सप्ताहवर्दले पूर्वसंगतिकदेवो, वणिग्रूपं, अनेकप्रकारमुवक्खडित्ता आमन्त्रणं क्षुल्लकस्य कृतवान् । गुरुणा अनुज्ञातः, प्रवृत्तश्च, पुनश्च बिन्दुपतनात्स्थितः, देवेनोपसंहरितम् ॥७०७॥

एसा गवेसणविही, कहिया भे धीरपुरिसपण्णत्ता ।
गहणेसणंपि एत्तो, वोच्छं अप्पक्खरमहत्थं ॥७०८॥

अतः परं ग्रहणैषणां वक्ष्ये ॥७०८॥

णामं ठवणा दविए, भावे गहणेसणा णेयव्वा ।
दव्वे वाणरजूहं, भावंमि य ठाणमाईणि ॥७०९॥

नामतः सुगमा । स्थापनाग्रहणैषणा द्विधा—(१)सद्भावस्थापना—चित्रकर्मणि साधुर्ग्रहणैषणां कुर्वन् दृश्यते, (२)असद्भावस्थापनाग्रहणैषणा—अक्षादिषु । द्रव्यग्रहणैषणायां आगम—नोआगम—ज्ञशरीर—भव्यशरीर[तदुभय]व्यतिरिक्तायां वानरयूथं, भावग्रहणैषणायां तु स्थानादीनि, इदं कथानकं—एकं वनं, तत्र वानरयूथं परिवसति, कालेन तद्वनं परिशटितपत्रफलं जातं दृष्ट्वा यूथपतिरन्यवनपरीक्षार्थं द्वौ त्रीन् वा पञ्च वानरान् प्रेषयति, ते एताः, एकं वनं भूरिपुष्पफलं पश्यन्ति, तन्मध्ये एको द्रहः, आगत्य कथयन्ति, यूथपतिः सर्वैः सह गत्वा वनं विलोक्य शुद्धं ज्ञात्वा भणति—खादत फलानि धाणाः[तृप्ताः] सन्तः पानीयं गताः । यूथपतिर्ह्रदं सर्वतो विलोक्य 'ओयरंताणि पयाणि दीसंति, नोत्तरंत्ताणि', भणितं च—साऽपाय

एष ह्रदः । मध्ये तीरस्था वा मा वारि पिबत किन्तु नालेन पिबत, तत्र यैः श्रुतं तस्य वचस्ते सुखिनो जाताः, अन्ये दुःखिनः, एवं जिनस्नात्रादौ आधाकर्मादि निष्पन्नं ज्ञात्वा, आचार्यः साधून्निवारयति, यैः श्रुतं ते सुखिनो जाता जिनाज्ञाकरणेन, नाऽन्ये ॥७०९॥ अमुमेवार्थं गाथाभिराह—

परिसडियपंडुपत्तं, वणसंडं दट्ठु अण्णहिं पेसे ।
जूहवई पडियरिए, जूहेण समं तहिं गच्छे ॥७१०॥
सयमेवालोएउं, जूहवई तं वणं समं तेहिं ।
वियरइ तेसि पयारं, चरिऊण य ते दहं गच्छे ॥७११॥

'पडि'० निरूपयति ॥७१०॥ 'वियरइ' ददाति तेषां वानराणां प्रचार' उत्सङ्कलयति ॥७११॥

ओयरंतं पयं दट्ठुं, उत्तरंतं ण दीसइ ।
णालेण पियह पाणीयं, एस णिक्कारणो दहो ॥७१२॥

द्रव्यभावग्रहणैषणैर्भिर्द्वारैरनुगन्तव्या ॥७१२॥

ठाणे य दायए चेव, गमणे गहणागमे ।
पत्ते परियत्ते पाडिए य, गुरुयं तिहा भावे ॥७१३॥

पिण्डग्रहणं कुर्वता वक्ष्यमाणं [१]स्थानत्रयं त्याज्यं, १आत्म२-संयम-३प्रवचनोपघातम् , [२]दाता परीक्ष्यो योऽव्यक्तादिरूपो न स्यात्, [३] दातुर्गमनं-भिक्षार्थमन्तः प्रविशतो निरूप्यम्, [४] यस्माद्भाजनाद् गहणं करोति तन्निरूप्यम्, [५] स आगच्छन् निरूप्यः, [६] प्राप्तस्य दातुर्हस्तमात्रादिरुदकार्द्रो नवेति, [७] परावृत्तं अधोमुखं स्थितं ददतो दर्व्यादि, [८] पातितः पात्रे पिण्डो निरूप्यः, [९]गृहिभाजनं स्थाल्यादि गुरु भवति पाषाणादिर्वोपरि दत्तो भवति, [१०] त्रिविधोऽपि कालो वाच्यः, [११]भावश्च प्रशस्ताप्रशस्तरूपो वाच्यः ॥७१३॥ इमां गाथां प्रतिपदमाह—

आया पवयण संजम, तिविहं ठाणं तु होइ णायव्वं ।
गोणाइ पुढविमाई, णिद्धमणाई पवयणंमि ॥७१४॥

गवादिभिरात्मोपघातो भवति, पृथिवीकायादिभिः संयमोपघातश्च, निद्धमणाई-नगरोदकोपघसरादि-उपघातस्थानं प्रवचनविषयं भवति ।७१४। गवादिभिः कथमात्मोपघातो भवति ?, आह—

गोणे महिसे आसे, पेल्लणे (प्र.ण) आहणण मारणं भवइ (प्र.वावि) ।
दरगहिय भाणभेदो, छड्डणि भिक्खस्स छक्काया ॥७१५॥



गोमहिष्यादिस्थाने प्रेरणमाघातो मारणं भवति 'दर'०अर्द्धगृहीतायां भिक्षायां भाजनभेदो भवति,' भिक्ख०' भिक्षोज्झने षडपि काया विराध्यन्ते, अतः संयमविराधना ॥७१५॥ अथवाऽनेन प्रकारेणात्मविराधना भवति—

चलकुड्डपडणकंटग-बिलस्स व पासि होइ आयाए ।
णिक्खमपवेसवज्जण, गोणे महिसे य आसे य ॥७१६॥

भिक्षाग्रहणस्थाने कदाचिच्चलकुडयपतनादात्मोपघातो भवति, कण्टका वा स्युः, बिलस्य पार्श्वे तावत् स्थानं भवति, तदात्मोपघातः, निर्गमप्रवेशस्थानं गवादीनां मुक्त्वा तिष्ठति भिक्षाग्रहणार्थम् ॥७१६॥ प्रकारान्तरेण संयमविराधनामाह–

पुढवि-दग-अगणि-मारुय-तरु-तस-वज्जंमि ठाणि ठाइज्जा ।
दिंती व हेट्ठ उवरिं, जहा ण घट्टेइ फलमाई ॥७१७॥

पृथिव्यादिवर्जिते स्थाने स्थातव्यं, भिक्षां प्रयच्छन्ती गृहस्थी अधो–भूमौ उपरि–नीव्रादौ न संघट्टयति फलादि, तत्र प्रदेशे स्थितो गृह्णाति ॥७१७॥ अधुना प्रवचनोपघातमाह––

पासवणे उच्चारे (प्र. उच्चारे पासवणे), सिणाण आयमणठाणउक्कुरुडे ।
णिद्धमणमसुइमाई; पवयणहाणी विवज्जेज्जा ॥७१८॥

प्रस्रवणादीनां यत्स्थानं, तथो[1]त्कुरुटिकास्थानं, तथा निर्द्धमनस्थानं–उपघसरस्थानं, यत्र वाऽन्यदशुचि क्षिप्यते, एतेषु स्थानेषु भिक्षां लातुः प्रवचनोपघातो भवति, अतः सर्वैः प्रकारैः प्रवचनहानि–हीलनां वर्जयेत्। [उक्तं स्थानद्वारम्] ॥७१८॥ दातृद्वारमाह–तत्रैतानि द्वाराणि––

१ तथोत्कुरटिकास्थान० ।k।

अव्वत्तमपहु थेरे, पंडे मत्ते य खित्तचित्ते य ।
दित्ते जक्खाइट्ठे, करचरछण्णेऽन्ध णियले य ॥७१९॥

अष्टवर्षमध्याऽव्यक्तः, स यद्यपि ददाति भिक्षां तथापि न गृह्यते, तथा अप्रभुहस्तात्, स्थविरहस्तात्, पण्डकहस्तात्, मत्तः सुरया पीतया; तस्य हस्तात्, क्षिप्तचित्तः-द्रविणाद्यपहारिणा अन्यचित्तः, शत्रुजयाज्ञातहर्पः। यक्षाविष्टः-पिशाचगृहीतः, छिन्नकरचरणः, अन्धः, निगडितश्च यः ॥७१९॥

तद्दोस-गुव्विणी-बाल, वच्छ-कंडंत-पीस-भज्जंती ।
कत्तंती पिंजंती, भइया दगमाइणो दोसा ॥७२०॥

त्वग्दोषः कुष्ठी यः। बालवत्सा-शिशुपालका, कण्डन्ती व्रीह्यादि, पेषन्ती-गोधूमादि, भर्जयन्ती-यवधान्यादि, केपाश्चित् पाठो 'भुंजंती', कर्तयन्ती सूत्रम्, पिञ्जयन्ती रूतम्, एतेभ्योऽव्यक्तकादिभ्यो हस्ताद् भिक्षा न ग्राह्या, 'भइया'-भजनाविकल्पना कदाचित्तेभ्योऽपि गृह्णाति, 'दग'० एतेषु भुञ्जानादिषु आचमनोदकप्रोज्झनदोषः। अव्यक्तादिष्वनेके उपघातादयः ॥७२०॥इदं गाथाद्वयं व्याख्यानयति—

कप्पट्ठिग अप्पाहण दिण्णे, अण्णोऽण्णगहणपज्जंतं ।
खंतियमग्गणदिण्णं, उड्डाहपदोसचारभडा ॥७२१॥

'कप्पट्ठिअ'त्ति बालिकायै 'अप्पाहण'त्ति संदेशं साधुदानार्थं दत्त्वा क्षेत्रं गता काऽपि भद्रिका, बालया आगतसाधवे कूरो दत्तः, सोऽन्यान्यमार्गणेन सर्वं पर्याप्तं गृहीत्वा गतः । अपराह्णे आगता 'खंति'त्ति जननी भोजनं याचते, बालाऽऽह-साधवे दत्तं, सा आह-सुष्ठु कृतं, कूरमानय, अम्ब, बा०-साधवे दत्तः, साऽऽह सु० करम्बमानय, सा आह-साधवे दत्तः । चतुर्थरसिकमानय बालाऽऽह-साधवे दत्तं, किं सर्वं दत्तं ? बालाऽऽह-स मार्गयति, ततो रुष्टा गुरुपार्श्वं गत्वा निन्दत्येष चारभटः, गुरुणा तत्पुरत एव तस्योपकरणं सर्वं लात्वा निष्काशितः ॥७२१॥ अप्रभुद्वारमाह—

अप्पभु भयगाईया, उभएगतरे पदोस पहु कुज्जा ।
थेरे चलंत पडणं, अप्पभुदोसा य ते चेव ॥७२२॥

अप्रभवो भृतकादयस्तैर्दीयमानं न गृह्णीयात् । प्रभुर्भृतकसाध्वोरेकतरे द्वेषं कुर्यात् । द्वारम् । स्थविरस्य चलतः पतनं भवति, अप्रभुदोषास्तथैव, स्थविरः प्रायेणाप्रभुर्भवति, परिभूतत्वात् ॥७२२॥ पण्डकद्वारमाह—

आयपरोभयदोसा, अभिक्खगहणंमि खुब्भण णपुंसे ।
लोगदुगुंछा संका, एरिसगा णूणमेतेऽवि ॥७२३॥

पण्डकाद् गृह्यमाने एते दोषाः । यत आत्मनः परत उभयतश्च दोषः, अभीक्ष्णं तत्र भिक्षाग्रहणे क्षोभो भवति, तद्वा क्षुभ्यत्यभीक्ष्णं साधुदर्शनादिना, लोकश्च जुगुप्सते शङ्कते एतेऽपि [१]नपुंसकाः ॥७२३॥ मत्तद्वारम्—

१ नपुंसकानीति ।K।S।

अवयास भाणभेदो, वमणं असुइत्ति लोग उड्डाहो ।
खेत्ते य दित्तचित्ते, जक्खाइट्ठे य दोसा उ ॥७२४॥

मत्तो 'अवयास' त्ति आलिङ्गति भिक्षां प्रयच्छन्, भाजनं वा भनक्ति, वमनं-छर्दनं करोति तथा 'अशुचि'-रितिकृत्वा लोके उड्डाहः । क्षिप्तचित्त-दीप्तचित्त-यक्षाधिष्ठितेषु एत एव पूर्वोक्ता दोषाः ॥७२४॥ द्वारपञ्चकमाह—

करच्छिण्ण असुइ चरणे, पडणं अंधिल्लए य छक्काया ।
णियलाऽसुइ पडणं वा, तद्दोसी संकमो असुइ ॥७२५॥

[1]छिन्नकराद्भिक्षां गृह्णतो लोकेऽशुचिरिति दोषः, [2]छिन्नचरणस्य पतनं भवति, [3]अन्धात् षट्कायवधो भवति, [4]निगडितोऽशुचिर्भवति, तस्य पतनं वा भवति, [5]कुष्ठिनस्तत्संक्रमो भवेत्, अशुचिर्भवति, द्वारम् ॥७२५॥

गुव्विणि गब्भे संघट्टणा उ, उट्ठंति णिवेसमाणी य ।
बालाई मंसउंडग, मज्जाराई विराहेज्जा ॥७२६॥

गुर्व्विणीहस्तान्न ग्राह्या भिक्षा गर्भसंघट्टनभयात्, बालवत्साहस्तान्न, यतः सा बालं मुक्त्वा यदि भिक्षां ददाति ततस्तं बालं 'मंसुंडग'त्ति मांसपिण्डादिबुद्धया मार्जारादि विराधयेत् ॥७२६॥ द्वारपञ्चकमाह—

बीओदगसंघट्टण, कंडणपीसंत भज्जणे डहणं ।
कत्तंती पिंजंती, हत्थं लित्तंमि उदगवहो ॥७२७॥

कण्डयन्त्यां पिंषन्त्यां च यथासंख्यं बीजोदकयोः सङ्घट्टनकृतौ दोषौ स्तः । भर्जयन्त्यां दहनकृतो दोषो भवति, कर्त्तयन्तीपिञ्जयन्त्योर्हस्तौ निष्ठीवनलिप्तौ भवतः । तत्-क्षालने उदकवधो भवति ॥७२७॥ यदुक्तं भजनया विकल्पनीयमव्यक्तादीनां, तदाह—

भिक्खामेत्ते अवियालणं तु, बालेण दिज्जमाणंमि ।
संदिट्ठे वा गहणं, अइबहुय वियालणुण्णाओ ॥७२८॥

भिक्षामात्रे दीयमाने बालेनाऽविचारणया गृह्णाति, प्रभुणा प्रत्यक्षं संदिष्टो बालो [१]ददाति, तदा [२]गृह्णाति, अथाऽसौ बहु ददाति, ततः साधुर्विचारयति किमर्थं बह्वद्य !, गृहस्थेन कारणे प्रोक्ते गृह्णाति ॥७२८॥ अप्रभुयतनामाह—

अप्पहुसंदिट्ठे वा, भिक्खामित्ते व गहणऽसंदिट्ठे ।
थेर पहु थरथरंते, धरणं अहवा दढसरीरे ॥७२९॥



१ ददाति बाल इत्यर्थः ।सं०।     २ साधुर्गृह्णातीति भावः ।सं०।

अप्रभुर्भृतकादिः—तस्य प्रभुसंदिष्टस्य हस्ताद्भिक्षा गृह्यते, असंदिष्टे सति भिक्षामात्रं गृह्यते । स्थविरः प्रभुः, कम्पमानः परेण धृतो यदि ददाति दृढशरीरो वा ततो गृह्यते ॥७२९॥ पण्डकादीनाह—

पंडगअप्पडिसेवी, मत्तो सड्ढो व अप्पसागरिए ।
खेत्ताइ भद्दगाणं, करचरविट्ठप्पसागरिए ॥७३०॥

पण्डकादीनां-यतना ।

पण्डकस्य ददतो गृह्यते [1]यदि सोऽप्रतिसेवी भवति, न कुत्सितं कर्म समाचरति, मत्तो यदि श्राद्धोऽल्पसागारिको वाशब्दादल्पमदश्च ददाति, तदा ग्राह्यं, [2]क्षिप्तचित्तदीप्तचित्तयक्षाविष्टानां हस्ताद् गृह्यते, यदि प्रकृत्या भद्रकाः स्युः । चरणरहितो यद्युपविष्टो ददाति अल्पसागारिकं भवति, कररहितोऽपि यद्यल्पसागारिके ददाति तदा ग्राह्यम् ॥७३०॥ अन्धादियतनामाह—

सड्ढो व अण्णरुंभण, अंधे सवियारणा य बद्धंमि ।
तद्दोसिए अभिण्णे, वेला थणजीवियं थेरा ॥७३१॥

चेच्छ्राद्धावानन्येनाऽऽकृष्यमाणोऽन्धो ददाति तदा ग्राह्यम् । बद्धाद् गृह्यते चेत्सविचारो भवति, परिष्वष्कितुं शक्नोति, तदा गृह्यते, 'तद्दो'० यद्यसावभिन्नकुष्ठी भवति—गलत्कुष्ठो न भवति, वेलामासं मुक्त्वा गुर्विण्या हस्ताद्

१ ० यप्तसौऽप्र० ।ऽप्रतौ।    २ ० चित्तादि यदा० ।ऽप्रतौ।

गृहृणन्ति स्थविरकल्पिकाः, जिनकल्पिकादयस्तु यतः प्रभृत्यापन्नसत्त्वा भवति ततः प्रभृति न गृहृणन्ति। स्थविरकल्पिकाः-स्तनोपजीविबालयुक्ताया हस्तान्न गृहृणन्ति । जिनकल्पिकादयो यावद्बालस्तावत्परिहरन्ति ॥७३१॥ कण्डयन्त्यादियतनामाह—

कण्डयन्त्यादीनां यतना ।

उक्खित्तऽपच्चवाए, कंडे पीसे वऽच्छूढ भज्जन्ती ।
सुइं व पीसमार्गी, बुद्धीय विभावए सम्मं ॥७३२॥

उत्क्षिप्तं मुशलमप्रत्यपाये मुक्त्वा ददाति तदा कल्पते, अचित्तं पेषयन्ती, सच्चित्ते पूर्वप्रक्षिप्ते पिष्टे अन्यस्मिन्न प्रक्षिप्ते सति चेद्ददाति ततो गृह्यते, ([1]पेषणं शिलायां घरट्टे वा) एवं भृज्जन्त्यपि 'अच्छूढ'त्ति यदि पूर्वप्रक्षिप्तं भृष्टं, अन्यदद्यापि न प्रक्षिप्तं, शुष्कं अचेतनं वा पिनष्टि ततश्च बुद्ध्या विभाव्य निरूप्य गृहृणाति ॥७३२॥ इमां गाथां भाष्यकार आह—

मुसले उक्खित्तंमि य, अपच्चवाए य पीस अचित्तं ।
भज्जंती अच्छूढे, भुंजंती जा अणारद्धा ॥७३३॥

भर्जयन्ती पूर्वभृष्टेऽन्याऽक्षेपेण, अच्छूढेऽक्षिप्ते, 'भुंजं०' यद्यद्यापि न विद्वालयति भक्तं यत्तद्भाजनगृहातं, तत उत्थाय ददाति ॥७३३॥

[1] ( ) एतदन्तर्गतोंऽशः k संज्ञक प्रतिमध्ये नास्ति ।

कत्तंतीए थूलं, विक्खिण लोढण जति य णिट्ठविये ।
पिंजण असोयवाई, भयणागहणं तु एएसिं ॥७३४॥

स्थूरं कर्त्तयन्त्याः कराद् गृ०, यतः सा न शङ्खचूर्णादिना हस्ताङ्गुलीः करोति, नाऽपि निष्ठीवनेन, रूतं विक्खणन्त्यां गृह्यते । [1]उरिणणं–लोढणं यदि निट्ठवियं होइ, लोढिणीदिन्नो कप्पासघाणो लोढिओ अन्नोऽद्यापि न दिन्नो, पिञ्जयन्त्या अशौचवादिन्या हस्ताद् गृह्यते [यदि] न हस्तौ प्रक्षालयति, एवमेषां दातॄणां हस्ताद्भजनया ग्रहणं च भवति ॥७३४॥ उक्ता प्रतिद्वारगाथा, ततश्चोक्तं दातृद्वारम्, गमनद्वारमाह—

गमणं च दायगस्सा, हेट्ठा उवरिं च होइ णायव्वं ।
संजम आय विराहण, तस्स सरीरे य मिच्छत्तं ॥७३५॥

दातुर्भिक्षार्थमन्तर्गच्छतोऽधस्तादुपरि विज्ञेयम्, यदि न निरूपयति ततस्तस्य गच्छतः पृथिव्यादिविनाशात्साधोः संयमवि०, तस्य दातुः शरीरे सर्पादिना भ०, अतः स मिथ्यात्वं यायाद्, यदुतैवंविधस्य दत्तम् ॥७३५॥ इमां गाथां व्याख्यानयति—

वच्चंती छक्काया, पमद्दए हिट्ठतो उवरि तिरियं च ।
फलवल्लिरुक्खसाला, तिरिया मणुया य तिरियं तु ॥७३६॥

१ उरूणणं ति पाठः ।k. ।s।

व्रजन्ती सा स्त्री पडपि कायान् विराधयति—अधस्ताद् भुवि पृथिव्यग्नेऽम्बनस्पतित्रसान्, वायुकायं कश्चिद् दृतौ स्थितं स्पृशन्ती व्यापादयेत् । तथोपरि फलवल्लिवृक्षशाला:—शाखा विराधयेत् तिर्यग्, जातमात्रमनुजान् तिरश्चोऽश्ववत्सकादीन् संघट्टयेत् ॥७३६॥ अथैते दोषाः—

कंटगमाई य अहे, उप्पिं अहिमादिलंबणे आया ।
तस्स सरीरविणासो, मिच्छत्तुड्डाह वोच्छेओ ॥७३७॥

कण्टकादयो वाऽधः स्युः, उपरि सर्पादिलम्बने आत्मवि०, दातुः शरीरविनाशो मिथ्यात्वं तस्यान्यस्य वा, प्रवचनोपघातश्च, एतेषामेतावानपि प्रभावो नास्ति येन रक्षन्ति, गतं गमनद्वारम् ॥७३७॥ ग्रहणद्वारमाह—

णीयदुवारुग्घाडण-कवाडठिय देह दारमाइण्णे ।
इड्डिरपत्थियलिंदे, गहणं पत्तस्सऽपडिलेहा ॥७३८॥

नीचद्वारे चक्षुषा निरूपयितुं न शक्नोति, अतस्तत्र न गृह्यते भिक्षा, उद्घाटकपाट—अनर्गलितकपाट न, किन्तु दत्तकपाट तत्र न गृह्यते, तथा दातुर्देहेन रुद्धे सति न गृ०, आकीर्णे—अन्यपुरुषैर्गमागमं कुर्वद्भिः । इड्डरं—गन्त्र्यादिरूपं, पत्थिका—बृहती पिटिका, अलिन्दं—कुण्डकं, गृह्यते तस्मिन्निति ग्रहणं—प्रदेशः—अन्नभण्डकस्थानं प्राप्तस्य 'अप'०-यतः प्रत्युपेक्षणा न शुद्ध्यति अन्तरोदितैर्दोषैः, अतो न गृह्यते, यदि [1]शुद्ध्यति ततो गृह्यते, ततो ग्रहणप्रदेशं प्राप्तस्य

[1] शुद्ध्यति ततो ग्रहणप्रदेशं ० प्रk।

गमनद्वारे कण्टकादिदोषविचारणा ।

गृहस्थस्य प्रत्युपेक्षणा कार्या, श्रोत्रादिभिरुपयोगं करोति, द्वारगाथेयम् ॥७३८॥ कथं जिनकल्पिकादयो गृह्णन्ति स्थविरा वा ? तदाह—

णियमा उ दिट्ठगाही, जिणमाई गच्छणिग्गया होंति ।
थेरावि दिट्ठगाही, अदिट्ठि करेंति उवओगं ॥७३९॥

नियमाद् दृष्टग्राहिणो जिनकल्पिकाः, स्थविरा अदृष्टेऽपि श्रोत्रादिभिरुपयोगं दत्त्वा ततः परिशुद्धं गृह्णन्ति ॥७३९॥ 'णीयदुवारकवाड'त्ति आह—

णीयदुवारुवओगे, उड्डाह अवाउडा पदोसो य (प्र.पउसिज्जा) ।
हियणट्ठंमि अ संका, एमेव कवाड उग्घाडे ॥७४०॥

नीचद्वारे निष्कुट्टन कृत्वोपयोगं निरीक्षणं कुर्वत उड्डाहः । कदाचिदप्रावृतास्त्रियस्तत्र भवन्ति तासां दर्शने प्रद्वेषं कुर्युः, हृते नष्टे वस्तुनि कश्चिद् गृहस्थानां शङ्कोपजायते । उद्घाटकपाटे एते दोषाः ॥७४०॥

देहेणण्णसरीरेण वं, दारं पिहिअं जणाउलं वावि ।
इड्डरपत्थियलिंदेण, वावि पिहियं तहिं वावि ॥७४१॥

स्थूलत्वाद्दातुर्देहेनान्यदेहेन वा पिहितं द्वारं भवति, 'तहिं वा वि' तत्रेड्डरादौ स्थगितद्रव्यं भवेत्ततो न गृह्यते ॥७४१॥

एतेहऽदीसमाणे, अग्गहणं अहव कुज्ज उवओगं ।
सोतेण चोक्खुणा घाण-ओ य जीहाए फासेणं ||७४२||

एतैरदृश्यमाने चक्षुरदर्शने सति अग्रहणं भवति, अथवाऽदृश्यमानेऽप्युपयोगं कुर्यात् श्रोत्र.घ्रे. ||७४२|| कथम् ? इत्याह—

हत्थं मत्तं च धुवे, सद्दो उदकस्स अहव मत्तस्स ।
गंधे व कुलिंगाई, तत्थेव रसो फरिसबिंदू ||७४३||

हस्तं मात्रं वा कुण्डलिकादि प्रक्षालयति [सति] उदकस्य झलज्झलाशब्दो भ० । घ्राणेन [उपयोगं दत्ते] कदाचिदागच्छन्त्या कुलिङ्गादिस्त्रीन्द्रियादिर्मर्दितो भ०, एतच्च गन्धेन जानाति, यत्र गन्धस्तत्र रसोऽपीति, स्पर्शनेन [उपयोगं दत्ते] उदकबिन्दुर्लगति, चक्षुषा [उपयोगं ददाति] गमनागमनप्राप्तस्य द्रव्यस्य भाजनस्य हस्तस्य मा भूदुदकसंसृष्टम् ||७४३||

सो होइ दिट्ठगाहो, जो एते जुंजई पदे सव्वे ।
णिस्संकिय णिग्गमणं, आसंकपयंमि संचिक्खे ||७४४||

य एतानि पदानि पूर्वोक्तानि प्रयुङ्क्ते स दृष्टग्राही, यदि निःशङ्कितं स्यादेतेन किञ्चित् पुरःकर्मादि कृतं, ततो निषिध्य याति, अथ शङ्कितं भवति, तां प्राप्तां सती निरूपयति ||७४४|| आगमनद्वारमाह—

ग्रहणे श्रोत्रादीनामुपयोगकरनिर्देशः ।

आगमणदायगस्सा, हेट्ठा उवरिं च होइ जह पुव्विं ।
संजमआयविराहण, दिट्ठंतो होइ वच्छेण (प्र.च्छंमि) ॥७४५॥

यथा—पूर्वं गमने संयमात्मविराधने निरूपिते, एवमागमनेऽपि निरूपणीये। 'पत्त'त्ति द्वारम् । 'दिट्ठंतो'प्राप्तायां भिक्षायां दात्र्यां वा वत्सकेन दृष्टान्तः । यथैकस्मिन् वणिग्गृहे संखडयां वत्सस्य सारा केनापि न कृता, मध्याह्ने तेन रटितं, [1]सालङ्कारया स्नुषया भक्तं पानं दत्तं यथा तस्य चार्यां दृष्टिः,न नार्याम् , एवं साधारपि ॥७४५॥ अथवा—

पत्तस्स उ पडिलेहा, हत्थे मत्ते तहेव दव्वे य ।
उदउल्ले ससिणिद्धे, संसत्ते चेव परियत्ते ॥७४६॥

प्राप्तस्य गृहस्थस्य प्रतिलेखना कार्या, हस्त उदकार्द्रो न वेति, मात्रं निरूपयति, द्रव्यं संसक्तं नवेति, एवं प्राप्तद्वारं व्याख्यातं निर्युक्तिकृता। 'परिय'त्ति द्वारम्। परिवर्त्तितेऽधोमुखे कृते गृहिणा मात्रादौ यद्युदकार्द्रं स्निग्धं, उदकेनैव संसक्तं वा [संयुक्तमित्यपि] भ० । तन्न गृह्यते ॥७४६॥ 'पत्त'द्वारमाह भाष्यकारः—

तिरियं उड्ढमहेवि य, भायणपडिलेहणं तु कायव्वं ।
हत्थं मत्तं दव्वं, तिण्णि उ पत्तस्स पडिलेहा ॥७४७॥

गोचरीगतसाधं विशुद्धदृष्टिः

गोचरीगतसाधं प्रतिलेखना ।

१ सालंकारस्नुपया ।k।ऽ।

आगच्छत एव भाजनस्य तिर्यगूर्ध्वाधो विलोकयासन्नीभूतस्य गृहिणो हस्तं मात्रं द्रव्यं त्रीण्यप्येतानि निरूपयेत् ॥७४७॥ किम् ?—

भाजनपिण्ड-प्रतिलेखना

[1]मा ससिणिद्धो दउल्ले, तसाउलं गिण्ह एगतर दट्ठुं ।
परियत्तियं च मत्तं, ससणिद्धाईसु पडिलेहा ॥७४८॥

सस्निग्धादीनामेकतरमपि मात्रादौ दृष्ट्वा तन्मा गृहाण । 'परिय'त्ति द्वारमाह भाष्यकारः—'परि०' परावर्तितं सद् गृहस्थादिमात्रं सस्निग्धादिसमन्वितं भवति। तेषु सस्निग्धादिषु प्रत्युपेक्षणा कार्या ॥७४८॥ 'पडिय'त्ति द्वारमाह—

अप्रतिलेखन संयमात्म-विराधने ।

पडिओ खलु दट्ठव्वो, कित्तिमसहाविओ य जो पिंडो ।
संजमआयविराहण, दिट्ठंतो सिट्ठि कब्बट्ठो ॥७४९॥

पात्रे पिण्डः पतितमात्रो विलोक्यः, किमयं कृत्रिमः ? योगेन निष्पन्नः, सक्त्वादि सिद्धपिण्डी[2] वा । स्वाभाविकः कूरखोट्ट इव, यदि कृत्रिमः पिण्डः, स्फोटयित्वा न निरूपयति तदा संयमात्मविराधना भवति । दृष्टान्तः काष्ठश्रेष्ठिना, तेन हि संयोगपिण्डो न निरूपितः, तत्र सङ्कलिकाऽऽसीत्, राजकुले व्यवहारः, तेन काष्ठर्षिणा निर्यूढम् । अन्यः कदाचित्तादृशो न भ०, अतो निरूपणीयः ॥७४९॥ आत्मविराधनामाह—

१ ।S। ।k। एतत्संज्ञकप्रतिमध्ये 'ससिणिद्धो' इति गाथाग्रभागो दृश्यते ।सं०। २ सिद्धपिण्डी वा ।S।

गरविस अट्ठिय कंटय, विरुद्धदव्वंमि होइ आयाए ।

संजमओ छक्काया, तम्हा पडियं विगिंचिज्जा ॥७५०॥

[1]गरः य आहारं स्तम्भयति कार्मणं वा, विषमस्थीनि कण्टकाश्चाहारे कदाचिद् भवन्ति, विरुद्धं वा किञ्चिद्द्रव्यं स्याद्, अनिरूपणे [2]आत्मविराधना भवत्यसंयमश्च, षट्काया विराध्यन्ते पृथिव्यादीनां तत्र सम्भवात्, ततश्च पतितं 'विगिंचिज्ज'त्ति विलाकयेत् ॥७५०॥

अणभोगेण भएण य, पडिणी उम्मीस भत्तपाणंमि ।

दिज्जा हिरण्णमाई, आवज्जणसंकणादिट्ठे ॥७५१॥

अनाभोगेन ददाति, कदाचित्परसत्कं सुवर्णमुपहृतं, पुनश्च प्रत्याकलिता सती कलिकलङ्कभयात्साधोर्वेष्टयित्वा, प्रत्यनीकत्वेन वोन्मिश्र्य—एकीकृत्य भक्तादिना दत्ते । एतद्दोषं विनाऽपि [3]यदि तत्र निरूपयति तदा—आवर्जनं पूर्वोक्तसंयमविराधनादिदोषाणाम्, शङ्कना सुवर्णादौ दृष्टे राजादीनां भवति ॥७५१॥ गुरुद्वारमाह—

उक्खेवे णिक्खेवे, महल्लया लुद्धया वहो दाहो ।

अचियत्ते वोच्छेओ, छक्कायवहो य गुरुमत्ते ॥७५२॥

१ गराः-आहारं० ।k। २ ० विराधना स्याद् संयमतश्च षट्० ।S। ३ ० यदि न निरूपयति० ।k। ।S।

महतो भाजनस्योत्क्षेपे निक्षेपे-मोक्षणे गृहस्थस्य कटिभङ्गो भवति, पादस्योपरि वा पतनं भ०, 'जह'० साधुर्वक्ति महता भाजनेन दीयतां, ततश्च लुब्धता साधोरुपजायते। तस्य भाजनस्य साधोर्गृहिणो वा पदोपरि पतने वधो भवति। [1]उष्णत्वाद्दाहो वा भ०, महाप्रमाणेन दीयमाने गृहिणोऽप्रीतिर्भ०, व्यवच्छेदो वा तद्द्रव्यान्यद्रव्ययोः, षट्कायवधश्च भण्डकपतने ॥७५२॥ एतां गाथां भाष्यकृदाह—

गुरुदव्वेण व पिहिअं, सयं व गुरुयं हवेज्ज जं दव्वं ।
उक्खेवे णिक्खेवे, कडिभंजण पाय उवरिं वा ॥७५३॥

गुरुद्रव्येण पिहितं, स्वयं वा यद् द्रव्यं गुरु भवति। तस्योत्क्षेपे निक्षेपे [च] कटिभङ्गो भ०, पादोपरि पतने आत्मवि० ॥७५३॥

महल्लेण देहि मा डहरएण, भिण्णे अहो इमो लुद्धो ।
उभए एगतरवहो, दाहो अच्चुण्ह एमेव ॥७५४॥

महता भाजनेन देहि, [2]मा'डहरेणे'त्युक्ते मुनिना तथाकृते, अशक्नुवत्या कदाचित्तद्भाजनं भज्यते, भग्ने लुब्धोऽयमि'ति वक्ति, पतिते उभयोरेकतरस्य वधो भ० । अत्युष्णे द्रव्ये पतिते [1]दाहो भवति ॥७५४॥

१ उष्णत्वाद्दाघो वा ।S। ।k। २ ० मा डहरेणत्ति लघुनेत्यु० ।S।

बहुगहणे अचियत्तं, वोच्छेओ तदण्णदव्व'तस'वावि ।
छक्कायाण य वहणं, अइमत्त तंमि मत्तंमि ॥७५५॥

बहुग्रहणेऽचियत्तं भवति गृहिणः, व्यवच्छेदस्तदन्यद्रव्यस्य, षट्कायवधोऽतिमात्रे बृहत्प्रमाणे स्थाल्याऽऽदौ गृहीते ॥७५५॥ त्रिधा-द्वारमाह—

तिविहो य होइ कालो, गिम्हो हेमंत तह य वासासु ।
तिविहो य दायगो खलु, थी पुरिस णपुंसओ चेव ॥७५६॥

कालस्त्रिधा-ग्रीष्मो हेमन्तो वर्षा च, त्रिविधेऽपि काले दाता त्रिधा-पुंस्त्रीनपुंसकभेदात् ॥७५६॥

एक्किकोवि अ तिविहो, तरुणो तह मज्झिमो य थेरो य ।
सीयतणुओ णपुंसो, सोम्हि त्थी मज्झिमो पुरिसो ॥७५७॥

एकैकस्त्रिधा-तरुणादिभेदेन, शीतलतनुर्नपुंसकः, सोष्मा स्त्री, मध्यमो नरो नात्युष्णो नातिशीतलः ॥७५७॥

पुरकम्मं उदउल्लं, ससणिद्धं तंपि होइ तिविहं तु ।
इक्किक्कंपि य तिविहं, सच्चित्ताचित्तमीसं तु ॥७५८॥

न केवलं कालादयस्त्रिधा, यदपि पुरःकर्मादि तदपि त्रिधा—१पुरःकर्म २उदकार्द्रं ३सस्निग्धं, [1]एकैकं त्रिविधं सच्चित्ताचित्तमिश्रभेदात् ॥७५८॥

आइदुवे पडिसेहो, पुरओ कयं जं तु तं पुरेकम्मं ।
उदउल्लं बिंदुसहिअं, ससणिद्धे मग्गणा होइ ॥७५९॥

आद्यद्वयस्य पुरःकर्मोदकार्द्रस्य प्रतिषेधो द्वयो, यतस्ताभ्यां सदोषत्वान्न व्यवहारः। भिक्षायाः पुरतो यत्कडुच्छक-प्रक्षालनादि कृतं तत्पुरःकर्म, यद् बिन्दुसहितं भाजनादि तदुदकार्द्रं, सस्निग्धं—बिन्दुरहितमात्रं, तस्मिन् मार्गणा कार्या ॥७५९॥

ससिणिद्धंपि य तिविहं, सच्चित्ताचित्तमीसगं चेव ।
अच्चित्तं पुण ठप्पं, अहिगारो मीससचित्ते ॥७६०॥

सस्निग्धं त्रिधा, तत्राऽचित्तं स्थाप्यं, यतस्तत्र भिक्षा ग्राह्यैव, पुनर्निरूपणं मिश्र—सचित्तयोः कार्यम् ॥७६०॥

पव्वाण किंचि अ(उ)व्वाणमेव, किंचिच्च होअणुव्वाणं ।
पाएण तिहि सव्वं, एक्कगहाणी य वुड्ढी य ॥७६१॥

[1] पुरःकर्म सचित्तं अचित्तं मिश्रं चेति एवमुदकार्द्रं सस्निग्धं च ज्ञेयम् ।सं०।

हस्ते सस्निग्धं मनाक् प्रम्लानं(१) [१]अव्यानमुद्रानं किञ्चित् ,(२) [२]किञ्चिदनाव्यानमनुद्रानं, (३) त्रिविधमप्येत्रायेण सस्निग्धं, एकैकशुष्कभागवृद्ध्या हान्या वा, ग्रहणं पश्चानुपूर्व्या, पूर्वानुपूर्व्या सैकैकभागवृद्धिः ॥७६१॥ कथमित्याह—

सत्तविभागेण करं, विब्भाइत्ताणं इत्थिमाईणं ।
णिच्चुण्णय इयरेवि य, रेहा पव्वे करतले य ॥७६२॥

सप्तविभागात् करं विभज्य स्त्र्यादीनां, ते च विभागा एतानङ्गीकृत्य कार्याः, इमे च ते निम्नोन्नतेतरे, निम्नाङ्गुलिपर्वरेखाः, उन्नतं-पर्वाणि, [३]इतरत्करतलं ॥७६२॥ केन शुष्केन कः प्रम्लानः? केन प्रम्लानेन कः सार्द्रः?, इत्याह—

जाहे य उण्णयाई, उव्वाणाइं हवंति हत्थस्स ।
ताहे तलपव्वाणा, लेहा पुण होंतऽणुव्वाणा ॥७६३॥

यदोन्नतानि [पर्वाणि] उद्वानानि भवन्ति तदा हस्तस्य तलं प्रम्लानं मनाक् शुष्कं भवति, रेखा अनुद्वानाः स्युः ॥७६३॥ शुष्कहस्तस्थानानां एकैकवृद्ध्या यथा यस्मिन् काले ग्रहणं भवति तथाह—

तरुणित्थि एक्कभागे, पव्वाणे होइ गहण गिम्हासु ।
हेमंते दोसु भवे, तिसु पव्वाणेसु वासासु ॥७६४॥

आर्द्रहस्तस्य पुरुषादेःप्रम्लाशुष्कत्वादि-विचारः ।



१ आस्यान० ।k।S। २ ० मास्यान ० ।k।S। ३ इतरत्-नोन्नतं नाऽपि निम्नं सममित्यर्थः ।सं०।

तरुण्याः—स्त्रिय उन्नतसप्तमैकभागे प्रम्लाने शुष्के सति उष्णकाले भिक्षा ग्राह्या, तस्याः कालस्य चोष्णत्वात्, यावता कालेनोन्नतप्रदेशः शोषं गतस्तावतेतरे निम्नप्रदेशाः सार्द्रा अप्यचित्ता जाताः, अतः कल्पते भिक्षाग्रहणं, हेमन्ते द्वयोः सप्तभागयोर्भिक्षाग्रहणं, वर्षासु त्रिषु शुष्केषु तरुण्याः ॥७६४॥

एमेव मज्झिमाए, आढत्तं दोसु ठायए चउसु ।
तिसु आढत्तं थेरी, णवरि ट्ठाणेसु पंचसु उ ॥७६५॥

एवमेव मध्यमायाः स्त्रियो ग्रीष्मे द्वयोर्भङ्गयोः प्रारब्धं चतुर्भागेषु [1]सन्तिष्ठते, एवं स्थविर्या ग्रीष्मे त्रिष्वारब्धं पञ्चसु [2]सन्तिष्ठते ॥७६५॥

एमेव होइ पुरिसो, दुगाइछट्ठाण पज्जवसिएसुं ।
अपुमं तु तिभागाइं, सत्तमभागे अवसिते उ ॥७६६॥

एवमेव नरे द्वयोरारब्धं षट्स्थानपर्यवसितेषु भागेषु सन्तिष्ठते, नपुंसकस्य पुनस्त्रिभागेष्वारब्धं सप्तमभागे सन्तिष्ठते, सर्वस्मिन् हस्ते शुष्के भिक्षाग्रहणं कार्यं । एवं पूर्वानुपूर्व्या [3]एकैकवृद्ध्या ग्रहणमुक्तं, पश्चानुपूर्व्या त्वेकैकभागहान्या भिक्षाग्रहणं ज्ञेयं, यथा स्थविरनपुंसकस्य वर्षासु सप्तभिर्भागैः शुष्कैर्गृह्यते । तस्यैव हेमन्ते षड्भिर्भागैर्ग्रीष्मे पञ्चभिर्भागैरेवमनया हान्या तावद्यावत्तरुणी स्त्रीति ॥७६६॥ भावद्वारमाह—

१ तिष्ठते ।k। २ तिष्ठते ।k। ३ षष्ठीविभक्तिरत्र ।सं०।

दुविहो य होइ भावो, लोइयलोउत्तरो समासेणं ।
एक्किकोवि य दुविहो, पसत्थओ अप्पसत्थो य ॥७६७॥

द्विधा भावो—लौकिको लोकोत्तरश्च, एकैको द्विधा-प्रशस्तोऽप्रशस्तश्च, अत्रोदाहरणं—एकत्र संनिवेशे द्वौ भ्रातरौ, तत्रैको ग्रामं गत्वा कर्षणं करोत्यन्योऽपि तथैव, एकस्य सुभार्या अन्यस्य दुर्भार्या, सा प्रभाते उत्थायात्मानं मण्डयन्ती कर्मकरचिन्तां किञ्चिन्न करोति, अन्या कर्मकरादिचिन्तां कृत्वाऽऽत्मनः कार्यं मण्डनादि करोति, याऽऽत्मन एव मण्डने लग्ना अचिरेण तस्या गृहं परिक्षीणं, अन्यस्या धनधान्येन समृद्धं जातं, एवं यः साधुर्वर्णाद्यर्थं भुङ्क्ते, गुर्वादीनां नाऽऽनयति, तस्य निर्जरालाभाभावः, या बालादीनां दत्त्वा न वर्णाद्यर्थं पश्चादाहरति स ज्ञानाद्याभागी जातः ॥७६७॥ [1]अधुनेममर्थं गाथाभिरुपसंहरन्नाह—

लौकिक-प्रशस्तेतरभेदेन भावचातुर्विध्यम्

सज्झिलगा दो वणिया, गामं गंतूण करिसणारंभो ।
एगस्स देहमंडण-बाउसिया भारिया अलसा ॥७६८॥

बाउसिया—विभूषणशीला ॥७६८॥

१ सम्प्रत्यमुमेवार्थं गाथा० ।k।

मुहधोवण दंतवणं, अद्दागाईण कल्ल आवासं ।
पुव्वण्हकरणमप्पण, उक्कोसयरं च मज्झण्हे ॥७६९॥

मुखधावनं करोत्यादर्शादिभिर्मण्डयति, 'कल्ल'त्ति कल्यपूपकम् आवश्यकं पूर्वाह्णे करोत्यात्मनोत्कृष्टतरं च घृतपूर्णादि मध्याह्ने भक्षयत्येकाकिनी ॥७६९॥

तणकट्ठहारगाणं, ण देइ ण य दासपेसवग्गस्स ।
ण य पेसणे णिउजइ, पलाणि हिय हाणि गेहस्स ॥७७०॥

तृणकाष्ठहारकाणां न किञ्चिद्दत्ते न च प्रेषणे कार्ये नियुङ्क्ते, भोजनादिना विना नष्टाः किञ्चिद् गृहे आसीत्तद् हृतं ॥७७०॥ तत्रायं लौकिकोऽप्रशस्तो भावः । लौकिकप्रशस्तमाह—

विइयस्स पेसवग्गं, वावारे अण्ण(प्र.ऊण) पेसणे कम्मे ।
काले देहाहारं, सयं च उवजीवई इड्ढी ॥७७१॥

द्वितीयस्य भार्या प्रेष्यवर्गं प्रेषणाकार्ये व्यापारयति, काले च तेषामाहारं दत्ते ॥७७१॥ लोकोत्तराऽप्रशस्तभावमाह—

वण्णबलरूवहेउं, आहारे जो तु लाभि लब्भंते ।
अतिरेगं ण उ गिण्हइ, पाउग्गगिलाणमाईणं ॥७७२॥

वर्णबलरूपहेतुमाहारयति । लाभे क्षीरादौ लभ्यमाने प्रायोग्यं ग्लानादीनामतिरिक्तं न गृह्णाति ॥७७२॥

जह सा हिरण्णमाईसु, परिहीणा होइ दुक्खआभागी ।
एवं तिगपरिहीणो, साहू दुक्खस्स आभागी ॥७७३॥

यथा सा हिरण्यादिहीना जाता दुःखभागिनी, एवं साधुरपि त्रिकेण—ज्ञानदर्शनचारित्रलक्षणेन हीनो दुःखभाग् भवति ॥७७३॥ लोकोत्तरप्रशस्तमाह—

आयरियगिलाणट्ठा, गिण्ह ण महंति एव जो साहू ।
णो वण्णरूवहेउं, आहारे एस उ पसत्थो ॥७७४॥

आचार्यादीनामर्थाय लाति न ममेदं योग्यं किन्त्वाचार्यादेरेव । उक्तं भावद्वारम् ॥७७४॥

उग्गमउप्पायणएसणाए, बायाल होंति अवराहा ।
सोहेउं समुयाणं, पडुप्पण्णे वच्चए वसहिं ॥७७५॥
सुण्णघरदेउले वा, असई य उवस्सयस्स वा दारे ।
संसत्तकंटगाई, सोहेउमुवस्सगं पविसे ॥७७६॥

एवं साधुरुद्गमोत्पादनैषणाभिर्द्विचत्वारिंशदपराधैः समुदानं—भैक्ष्यं संशोध्य, 'पडुप्पन्ने'—लब्धे भक्तादौ [1]वसतिं-याति ॥७७५॥ सा केषु स्थानेषु ?, अत आह—उपाश्रयं [2]यान्, शून्यगृहे भक्तं प्रत्युपेक्षते, तदभावे देवकुले, तदभावे उपाश्रयद्वारे, संसक्तं त्रसैः कण्टकैर्वा [3]यद् व्याप्तं तत्संशोध्य, प्रोज्झ्य संसक्तादिभक्तम्, उपाश्रयं प्रविशति ॥७७६॥

गौचरीं गृहीत्वा वसतिप्रवेश-विधिः ।

संसत्तं तत्तोच्चिअ, परिट्ठवेत्ता पुणो दवं गिण्हे ।
कारण मत्तय गहिअं, पडिग्गहे छोढु पविसणया ॥७७७॥

संसक्तं भक्तं पानकं वा तत एव स्थानात्परिष्ठाप्य पुनरन्यद्द्रवं गृह्णाति, ग्लानादिकारणेन मात्रके यद् गृहीतमासीत्तत् पतद्ग्रहे प्रक्षिप्य प्रविशति, यतस्तस्य साधुभिराख्यातं तस्यान्यल्लब्धं, अतो निष्कारणमात्रोपयोगं परिहरन्, प्रक्षिप्य पतद्ग्रहे, प्रविशति ॥७७७॥ निष्कारणमात्रोपयोगे च प्रमादी भवति, अशुद्धं परिष्ठाप्य किं करोति ? अत आह—

गामे य काल-भाणे, पहुच्चमाणे हवंति भंगट्ठा ।
काले अपहुप्पंते, णियत्तई सेसए भयणा ॥७७८॥

१ ० वसतिं व्रजति संशोध्य केषु० ।k। २ ० व्रजन् ।k। ३ संशोधयित्वा प्रोज्झ्य संसक्तादिभक्तं, तत उपाश्रयं० ।k।

यदा ग्रामः[१] कालः[२] भाजनं[३] च पर्याप्यते, अत्र पदत्रयनिष्पन्ना अष्टौ भङ्गाः, एषां मध्ये यत्र कालो न पर्याप्यते तस्मिन्निवर्त्तते, शेषेषु च चतुर्षु विकल्पनां करोति ॥७७८॥ भजनामाह—

अण्णं च वए गामं, अण्णं भाणं व गेण्ह सइ काले ।
पढमे बितिए छप्पंचमे य भय सेस य णियत्ते ॥७७९॥

अन्यं ग्रामं व्रजति काले पर्याप्यमाणे, अन्यं च भाजनं गृह्णाति, एवं प्रथमद्वितीयषष्ठपञ्चमेषु भङ्गेषु [१]भजनां, सेवनां [वा] [२]करोति ॥७७९॥ स च पर्याप्यमाणः कालो द्विधा जघन्य ऊत्कृष्टश्च, जघन्यमाह—

वोसिरिउमागयाणं, उव्वासिअ मत्तए य भूमितिअं ।
पडिलेहयमत्थमणं, सेसत्थमिए जहण्णो उ ॥७८०॥

संज्ञां व्युत्सृज्याऽऽगतानां तोयमात्रके शुष्के निर्लेपनार्थं, तोयं यत्र क्षिप्यते तस्मिन् शोषिते, कायिकादिभूमित्रये प्रत्युपेक्षिते सति [३]यदाऽस्तमनं भवति तत्र प्रदेशे शेषोपधिरादित्येऽस्तमिते प्रत्युपेक्ष्यते यदा, अयमित्थंभूतो जघन्यः ॥७८०॥ उत्कृष्टमाह—

१ ० भजना करोति ० ।k।    २ येषु कालो न पर्याप्यते तेपु भिक्षायै न गन्तव्यमित्यर्थः ।सं०।
३ ० यदाऽस्त याति शेषोपधिरादित्येऽस्तमिते प्रत्युपेक्षते यदा, अयं जघन्यः ।S।

भुत्ते वियारभूमीं, गयागयाणं तु जह य ओगाहे ।
चरमाए पोरसीए, उक्कोसो सेस मज्झिमओ ॥७८१॥

भुक्ते सति [1]विचारभूमिं गत्वाऽऽगतानां यथा 'ओगाहे' आगच्छति [2]चरमपौरुषी चतुर्थः प्रहरोऽयमुत्कृष्टः, शेषस्तु मध्यमः ॥७८१॥ भिक्षामटित्वा प्रविशता वसतौ किं कर्त्तव्यम् ? अत आह—

पायपमज्जण णिसीहिआ य तिण्णि उ करे पवेसंमि ।
अंजलि ठाणविसोही, दंडग उवहिस्स णिक्खेवो ॥७८२॥

बहिरेव वसतेः पादौ प्रमार्ज्य, निषेधिकात्रयं करोति, पुरस्ताद् गुरो[3]रञ्जल्या नमस्कारं करोति, 'णमो खमासमणाणं'ति, [4]स्थानं विशोधयति यत्र दण्डोपध्योर्निक्षेपं करोति ॥७८२॥ एतां गाथां व्याख्यानयति—

एवं पडुपण्णे पविसओ उ, तिण्णि व णिसीहिया होंति ।
अग्गद्दारे मज्झे, पवेस पाए य सागरिए ॥७८३॥

एवं प्रत्युत्पन्ने लब्धे भक्ते प्रविशतस्तिस्रो नैषेधिका भवन्ति । अग्रद्वारे, मध्यप्रदेशे, वसतेः प्रवेशे च मूलद्वारस्य [4]तृतीयां करोति, असागारिके पादौ च प्रमार्जयति ॥७८३॥ अञ्जल्यवयवमाह—

१ विचारभूमेरागताना ।S। २ अथवा चरमपौरुषी-पादोनचतुर्थप्रहरो बोध्यः ।सं०। ३ तथा प्रविष्टस्थानं० ।k।
४ ० तृतीया आगारिके० ।k। ।S।

वसतिप्रवेशविधिः वसतिप्रवेशकरणीयं च।

हत्थुस्सेहो सीस-प्पणामणं वाइओ णमोक्कारो ।
गुरुभायणे पणामो, वायाए णमो ण उस्सेहो ॥७८४॥

प्रविशन् हस्तोच्छ्रायं नमस्कारार्थं करोति, शीर्षप्रणामनं [1]करोति, वाचा 'नमो खमासमणाणं' ति [2]करोति, गुरुणि भिक्षाभाजने सति शिरसा वाचा वा प्रणामं करोति, न हस्तोच्छ्रायं करोति ॥७८४॥ स्थानविशोधिमाह—

उवरिं हेट्ठा य पमज्जिऊण, लट्ठिं ठवेज्ज सट्ठाणे ।
पट्टं उवहिस्सुवरिं, भायणवत्थाणि भाणेसु ॥७८५॥

उपर्यधः प्रमृज्य स्वस्थाने यष्टिं स्थापयति, चोलपट्टकमुपधेरुपरि स्थापयति, भाजनवस्त्राणि भाजनोपरि स्थापयति ॥७८५॥

जइ पुण पासवणं से, हवेज्ज तो उग्गहं सपच्छागं ।
दाउं अण्णस्स सचोल-पट्टओ काइयं णिसिरे ॥७८६॥

यदि प्रस्रवणस्य विषयो भवति, ततोऽवग्रहं—पतद्ग्रहं सपटलं समर्प्यान्यस्य साधोः, सचोलपट्टः कायिकां व्युत्सृजति, व्युत्सृज्य कायोत्सर्गं करोति ॥७८६॥ तत्र को विधिरत आह—

१ ० करोति, अत्र तद् गुरुभिक्षाभाजनं मात्रकञ्च गुरु गृहीनमङ्गुलीभिःततश्चैवं गुरुणि० ।k। २ करोति यतोऽसौ गुरोर्मात्रकस्याधो हस्तो दत्त ।k।

चउरंगुलमुहपत्ती, उज्जुयए वामहत्थि रयहरणं ।
वोसट्ठचत्तदेहो, काउस्सग्गं करेज्जाहि ॥७८७॥

चतुर्भिरङ्गुलैर्जानुनोरुपरि चोलपट्टं करोति, नाभेश्चाधश्चतुर्भिरङ्गुलैः, पादयोश्चान्तरं चतुरङ्गुलं कार्यं, मुखवस्त्रिकां दक्षिणहस्तेन गृह्णाति वामहस्तेन रजोहरणम् ॥७८७॥ एतां गाथां व्याख्यानयति—

चउरंगुलमप्पत्तं, जाणुगहेट्ठा छिवोवरिं णाहिं ।
उभओ कोप्परधरिअं, करेज्ज पट्टं च पडलं वा ॥७८८॥

चतुरङ्गुलैरप्राप्तजानुश्चोलपट्टो यथा भवति, नाभिं चतुर्भिर्न स्पृशति । उभयतो बाहुकूर्पराभ्यां धृतिं करोति चोलपट्टस्य, यदा चोलपट्टः सच्छिद्रो भवति, तदा पटलं गृह्णाति ॥७८८॥

पुव्वुदिट्ठे ठाणे, ठाउं चउरंगुलंतरं काउं ।
मुहपोत्ति उज्जुहत्थे, वामंमि य पायपुंछणयं ॥७८९॥

पूर्वोद्दिष्टमेव कायोत्सर्गस्थानं, तत्र स्थित्वा पादस्यान्तरं चतुरङ्गुलं कृत्वा दक्षिणे मुखवस्त्रिकां वामहस्ते पादपुञ्छनकं—रजोहरणं कृत्वा तिष्ठति कायोत्सर्गे ॥७८९॥

काउस्सग्गंमि ठिओ, चिंते समुयाणिए अईआरे ।
जा णिग्गमप्पवेसो, तत्थ उ दोसे मणे कुज्जा ॥७९०॥

सामुदानिकातिचारान्—भिक्षातिचारानित्यर्थः । निर्गमादारभ्य यावद् वसतौ प्रवेशो जातः, तत्र ये दोषा जातास्तान् मनसि [1]कृत्वा ॥७९०॥

ते उ पडिसेवणाए, अणुलोमा होंति वियडणाए य ।
पडिसेववियडणाए, एत्थ उ चउरो भवे भंगा ॥७९१॥

तांश्चातिचारान् प्रतिसेवनानुलोम्येन यथैव [2]सेवितास्तेनैवानुक्रमेण स चिन्तयति, विकटना—आलोचना तस्या आनुलोम्येन वा चिन्तयति, कथं ? पूर्वं लघुः पश्चाद् वृद्धः पश्चाद् वृद्धतर आलोच्यते । अत्र चतुर्भङ्गी—द्वयनुलोमेन१, प्रतिसेवनानु० आलोचनाननुलोमेन२, आलोचनाऽनुलो० प्रति० अननुलो०३, द्वयननुलोमेन४ ॥७९१॥ व्याक्षिप्ते गुरौ नाऽऽलोचयतीत्येतदाह—

वक्खित्तपराहुत्त, पमत्ते मा कयाइ आलोए ।
आहारं च करेंतो, णीहारं वा जइ करेइ ॥७९२॥

१ करोति ।k। २ ० क्रमेण चिन्तयति० ।S।

व्याक्षिप्तो धर्मकथादिना स्वाध्यायेन, पराङ्मुखः पराभिमुखः, प्रमत्त इति विकल्पयति, एवंविधे गुरौ न कदाचिदालोचयेत्, तथाऽऽहारं नीहारं वा कुर्वति नालोचयेद् ॥७९२॥ इमां गाथां व्याख्यानयति—

कहणाई वक्खि.त्ते, विकहाइ पमत्त अण्णओ व मुहे ।
अंतरमकारए वा, णीहारे संक मरणं वा ॥७९३॥

'अ म०' अन्यतोऽभिमुखो वा स्यात्, भुञ्जतोऽपि नालोच्यं अन्तरायं भवति, अकारकं वा शीतलं भवति यावदालोचनां शृणोति, नीहारं कुर्वत [1]आशङ्कया कायिकादिर्नायाति, धारयतो मरणं स्यात् ॥७९३॥

अव्वक्खित्ताउत्तं, उवसंतमुवट्ठिअं च णाऊणं ।
अणुण्णवेत्तु मेहावी, आलोएज्जा सुसंजए ॥७९४॥

अव्याक्षिप्तम्, आयुक्तम्–उपयोगपरं, उपस्थितं, [उपशान्तं] उद्यतं, ज्ञात्वा अनुज्ञाप्यालोचयेत् ॥७९४॥ इमां गाथां व्याख्यानयति—

कहणाइ अवक्खित्ते, कोहाइ अणाउले तदुवउत्ते ।
'संदिसह'त्ति अणुण्णं, काऊण विदिण्णमालोए ॥७९५॥

१ ० आशङ्कया साधुजनितया न काय० ।k।

कथनादिना अव्याक्षिप्ते, क्रोधादिभिरनाकुले, तदुपयुक्ते भिक्षालोचनोपयुक्ते '[1]संदिसहालोचयामी'त्येवमनुज्ञां कृत्वा 'विदिन्ने'त्ति आचार्येणाऽपि दत्तायामनुज्ञायां 'भणत' इत्येवंलक्षणायामोलोचयेत् ॥७९५॥ [2]एतानि वर्जनीयानि–

णट्टं वलं चलं भासं, मूयं तह ढड्ढरं च वज्जेज्जा (प्र.त्ता) ।
आलोएज्ज सुविहिओ, हत्थं मत्तं च वावारं ॥७९६॥

नृत्यन् नालोचयति, वलन् नालोचयति, अङ्गानि चलयन् नालोचयति, भाषमाणो गृहस्थभाषया [3]नालोचयति, मूकेन स्वरेण ढड्ढरेण वा नालोचयति। आलोचयेत् सुविहितः, [4]उदकादिस्निग्धं मात्रं च, दात्र्या व्यापारकं कथयन्नालोचयति ॥७९६॥ एतां गाथां व्याख्यानयति—

करपाय भमुहिसीसऽच्छि-उट्ठमाईहि णट्टिअं णाम ।
वलणं हत्थसरीरे, चलणं काए य भावे य ॥७९७॥

करस्य पादस्य भ्रुवः शिरस अक्ष्णः ओष्ठस्य चैवमादीनामङ्गानां सविकारं चलनं नर्त्तनं कुर्वन् नालोचयति, वलनं हस्तस्य शरीरस्य कुर्वन् नालोचयति, चलनं मोटनं कायस्य कुर्वन् नालोचयति, भावचलनम् अन्यथागृहीतमन्यथाऽऽलोचयति ॥७९७॥

---

१ संदिशत आलोचया० ।S। २ तेनाऽऽलोचयतैतानि ।k।
३ ० यति किन्तु संयतभाषयाऽऽलोचयति मूकेन ० ।k। ४ ० हस्तं उदकस्निग्धं तथा मात्रकञ्च गृहस्थसत्कं दात्र्या० ।k।

गारत्थिय भासाओ य, वज्जए मूय ढड्ढरं च सरं ।
आलोए वावारं, संसट्ठियरे व करमत्ते ॥७९८॥

दात्री–संबन्धिनं व्यापारं, संसृष्टमुदकार्द्रादि इतरदसंसृष्टं करं मात्रं चालोचयति ॥७९८॥

एयद्दोसविमुक्कं, गुरुणो गुरुसम्मयस्स वाऽऽलोए ।
जं जह गहियं तु भवे, पढमाओ जा भवे चरिमा ॥७९९॥

एभिर्दोषैर्विमुक्तमनन्तरोक्तैर्भैक्षमालोचयेद् गुरुसमीपे, गुरुसम्मतस्य साधोर्वा, यद्यथा गृहीतं प्रथमभिक्षाया आरभ्य यावत्पश्चिमा भिक्षा [1]तावदालोचयत्युत्सर्गेण ॥७९९॥ एभिः कारणैरोघतो वाऽऽलोचयतीत्याह—

काले अपहुप्पंते, उच्चाओ (प्र.उव्वाओ) वावि ओहमालोए ।
वेला गिलाणगस्स व, अइच्छइ गुरू व उच्चाओ ॥८००॥

अपर्याप्यमाणे काले ओघत आलो०, यदि वा श्रान्तः। वेलां वा ग्लानस्यातिक्रामति, गुरुः [2]उच्चातः–श्रान्तः कुलादिकार्येण, तदौघत आलोचयति ॥८००॥ का सा ओघाऽऽलोचना ?— इत्याह—

१ ०.चयेदुत्सर्गेण० ।k। २ उद्वात ।k।

पुरकम्मपच्छकम्मे, अप्पेऽसुद्धे य ओहमालोए ।
तुरियकरणंमि जं से, ण सुज्झई तत्तिअं कहए ॥८०१॥

आकुलत्वे आपन्ने सति एवमोघालोचनयाऽऽलो०, पुरःकर्मपश्चात्कर्माल्पं नास्ति किञ्चिदित्यर्थः, अशुद्धमाधाकर्मादि, तदल्पं नास्तीति, एवमोघत आलोचयेत्, त्वरिते कार्ये जाते सति यश्च शुद्धयति उक्तेन प्रकारेण, तावन्मात्रमेव कथयति, एषा ओघत आलोचनेति ॥८०१॥

आलोइत्ता सव्वं, सीसं सपडिग्गहं पमज्जित्ता ।
उड्ढमहो तिरियंमि (प्र.येसुं), पडिलेहे सव्वओ सव्वं ॥८०२॥

एवमेषा मानसी वाचिकी वोक्ता, कायिकी आलोचना—भण्यते आचार्यस्य भिक्षा दर्श्यते, एवं मनसा वाचा वालोचयित्वा सर्वं निरवशेषं, तथा मुखवस्त्रिकया शिरः प्रमृज्य पतद्ग्रहं च सपटलं ऊर्ध्वे—पीठीः, अधो—भुवि, तिर्यक्-तिरश्चीनं प्रत्युपेक्षेत निरूपयेत्, सर्वतश्चेति—चतसृष्वपि दिक्षु सर्वं नैरन्तर्येण ॥८०२॥ ततः पतद्ग्रहं हस्ते कृत्वा भक्तादि गुरवे दर्शयतीति वक्ष्यति । एतां गाथां व्याख्यानयति—

उड्ढं पुप्फफलाई, तिरिअं मज्जारि-साण-डिंभाई ।
खीलग-दारुग-आवडण-रक्खणट्ठा अहो पेहे ॥८०३॥

उद्यानादौ आवासितानां सतां पुष्पफलादिपातमूर्ध्वं निरूप्य, तिर्यग् मार्जार-श्व-डिम्भानालोक्याऽऽलोचयति मा भूदत्र आगच्छन्तस्तत्पात्रमुत्प्रेर्यं पातयिष्यन्ति । काण्डं वा केनचिद्विक्षिप्तमायाति, अधः कदाचित्कीलका भवन्ति, तत्राऽऽपतनं–प्रस्खलनं मा भूत्ततोऽधो निरूप्य ततो भक्तादि दर्शयति ॥८०३॥ 'सीसं सपडिग्गहं पमज्जित्ते'त्यवयवमाह–

ओणमओ पवडेज्जा, सिरओ पाणा सिरं पमज्जेज्जा ।
एमेव उग्गहंमिवि, मा संकुडणे तसविणासो ॥८०४॥

हस्तस्थे पतद्ग्रहेऽवनमतः शिरसः प्राणिनः कदाचित्पतेयुः, अतः शिरः प्रमार्जयेत्, एवमेव पतद्ग्रहे प्रमार्जनं कृत्वा प्रदर्शयेत् भक्तादि, कुतः ?, 'मा सं०' मा भूत्संकोचने पटलानां त्रसादिविनाशः ॥८०४॥

काउं पडिग्गहं करयलंमि, अद्धं च ओणमित्ताणं ।
भत्तं वा पाणं वा, पडिदंसिज्जा गुरुसगासे ॥८०५॥

कृत्वा पतद्ग्रहं करतलेऽर्द्धं च शरीरस्यावनम्य भक्तं वा पानं वा प्रदर्शयेद् गुरुसकाशे ॥८०५॥

ताहे य दुरालोइय, भत्तपाण एसणमणेसणाए उ(प्र.अ) ।
अट्ठुस्सासे अहवा, अणुग्गहादीउ झाएज्जा ॥८०६॥

कदाचिद्दुरालोचितं भक्तं पानं वा भवति, 'नट्टं वलं चलमि'त्येवमादिप्रकारेण, तथैषणादोषकृताऽनेषणादोषो



गोचरीप्रदर्शन-
विधिः ।

वा ज्ञातस्तत एतद्विशुद्धयर्थमष्टोच्छ्वासं नमस्कारं ध्यायेत्, अथवाऽनुग्रहादि ध्यायेत् । 'जइ मे अणुग्गहं कुज्जा'त्ति गाथाद्वयम् ॥८०६॥

विणएण पट्ठवित्ता, सज्झायं कुणइ तो मुहुत्तागं ।
पुव्वभणिया य दोसा, परिस्समाई जढा एवं ॥८०७॥

विनयेन प्रस्थाप्य स्वाध्यायं मुहूर्त्तमात्रं करोति, जघन्यतो [1]गाथात्रयम् उत्कृष्टतश्चतुर्दशपूर्वाणि, एवं कुर्वता पूर्वभणिता दोषा 'धाउक्खोभेण मरणमि'त्यादयः परिश्रमादयश्च त्यक्ता भवन्ति ॥८०७॥

[2]पच्छण्णे भुत्तव्वं, जयणा दाणाउ पडिणियत्तेणं ।
तुच्छगजाई दाणा, बंधो इहरा पओसाई ॥८०८॥

प्रच्छन्ने भोक्तव्यम् ॥८०८॥

दुविहो य होइ(प्र.सोय) साहू, मंडलिउवजीवओ य इयरो य ।
मंडलिमुवजीवंतो, अच्छइ जा पिंडिया सव्वे ॥८०९॥

यो मण्डल्यामुपविशति स तावत्प्रतीक्षते यावत् सर्वे पिण्डिता [3]भवंति ॥८०९॥

१ ० गाथाद्वयं० ।k।  २ k संज्ञकप्रतौ गाथा नास्ति ।सं०।  ३ स्युः ।k।

इयरो वि(प्र.य) गुरुसगासं, गंतूणं भणइ संदिसह भंते ! ।

पाहुण-खवग-अतरंत-बाल-वुड्ढाण-सेहाणं ॥८१०॥

इतरोऽमण्डल्युपजीवी गत्वा गुरुं [1]भणति । संदिशत–ददत यूयं, इदं प्राघूर्णक-क्षपका[2]तरन्त बाल-वृद्ध-शैक्षकेभ्यः ॥८१०॥ पुनश्च—

दिण्णे गुरूहिं तेसिं, सेसं भुंजेज्ज गुरुअणुण्णायं (प्र.ये) ।

गुरुणा संदिट्ठो वा, दाउं सेसं तओ भुंजे ॥८११॥

एवमुक्ते गुरुणा तेभ्यो दत्ते, शेषं भुङ्क्ते गुरुणाऽनुज्ञाते, अथवा गुरुणाऽसौ संदिष्टस्त्वमेव देहि, स्वयं दत्त्वा शेषं भुङ्क्ते ॥८११॥ [3]अन्यानपि साधूनिमन्त्रयतीत्याह—

इच्छिज्ज ण इच्छिज्ज व, तहविय पयओ णिमंतए साहू ।

परिणामविसुद्धीए अ, निज्जरा होअगहिएवि ॥८१२॥

[4]प्रयत्नेन सद्भावेन [5]निमन्त्रयेत्, अगृहीतेऽपि भक्ते निर्जरा भवति ॥८१२॥ अथाऽवज्ञया निमन्त्रणेऽयं दोषः—

---

१ ० भणतीह-आचार्याः-सदिशत–ददत यूयमिदं भोजनम् ।k।  २ ० कासमर्थ० ।S।

३ ० न केवलमसौ प्राघूर्णकादिभ्यो ददाति अन्यानपि० ।k।

४ इच्छेन्न वा तथापि प्रयत्नेन० ।k।  ५ ० येत्, ततोऽगृ० ।k।

भरहेरवयविदेहे, पण्णरसवि कम्मभूमिगा साहू ।
एक्कंमि हीलियंमि, सव्वे ते हीलिया हुंति ॥८१३॥
भरहेरवयविदेहे पण्णरसवि कम्मभूमिगा साहू ।
एक्कंमि पूइयंमि, सव्वे ते पूइया हुंति ॥८१४॥
अह को पुणाइ णियमो, एक्कंमि वि हीलियंमि ते सव्वे ।
होंति अवमाणिया, पूइए य संपूइया सव्वे ॥८१५॥
णाणं व दंसणं वा, तवो य तह संजमो य साहुगुणा ।
एक्के सव्वेसुवि हीलि-एसु ते हीलिया हुंति ॥८१६॥
एमेव पूइयंमिवि, एक्कंमिवि पूइया जइगुणा उ ।
थोवं बहूणिवेसं, इइ णच्चा पूयए मइमं ॥८१७॥
तम्हा जइ एस गुणो, एक्कंमि वि पूइयंमि ते सव्वे ।
भत्तं वा पाणं वा, सव्वपयत्तेण दायव्वं ॥८१८॥

एकस्मिन् साधु हीलिते पूजिते वा सर्वसाधु-हीला-पूजा-वर्णनम् ।

॥३२५॥

स्पष्टा ॥८१३॥ आदरेण निमन्त्रणेऽयं गुणः, सुगमा ॥८१४॥ अत्राऽऽह परः—

अथ कः पुनरयं नियमो यदेकस्मिन्नवमानिते सर्व एवाऽपमानिता भ० । न हि एकस्मिन् पूजिते सर्व एव पूजिताः, न हि यज्ञदत्ते भुक्ते देवदत्तो भुक्तो भवति ॥८१५॥ आहाऽऽचार्यः—

एते गुणा यथैकस्मिन् साधौ स्थिता एवं सर्वेष्वपि [1]एकरूपत्वात्तेषां ॥८१६॥

एवमेकस्मिन् पूजिते सर्वे पूजिता यतिगुणा भवन्ति । यस्मादेवं तस्मात्स्तोकमेतद् भक्तं बहुनिवेयं—बह्वायमित्यर्थः । निर्जराहेतुः । एवं ज्ञात्वा साधून् पूजयेन्मतिमान् ॥८१७॥ स्पष्टा ॥८१८॥

वेयावच्चं णिययं करेह, उत्तमगुणे धरिन्ताणं ।
सव्वं किल पडिवाई, वेयावच्चं अपडिवाई ॥८१९॥

उत्तमगुणान् धारयतां वैयावृत्त्यं कुरुत ॥८१९॥

पडिभग्गस्स मयस्स व, णासइ चरणं सुयं अगुणणाए ।
णहु वेयावच्चचिअं, सुहोदयं णासए कम्मं ॥८२०॥

[1] ० तेषा तत एकत्र पूजिते पूजिताः स्युः ।k।

लाभेण जो जयंतो, जइणो लाभंतराइयं हणइ ।
कुणमाणो य समाहिं, सव्वसमाहिं लहइ साहू ॥८२१॥
भरहो बाहुबलीवि य, दसारकुलणंदणो य वसुदेवो ।
वेयावच्चाहरणा, तम्हा पडितप्पह जईणं ॥८२२॥
होज्ज ण व होज्ज लंभो, फासुग-आहार-उवहिमाईणं ।
लं(प्र.ला)भो य णिज्जराए, णियमेण अओ उ कायव्वं ॥८२३॥
वेयावच्चे अब्भुट्ठियस्स, सद्धाए काउकामस्स ।
लाभो चेव तवस्सिस्स, होइ अद्दीणमणसस्स ॥८२४॥

प्रतिभग्नस्य—उन्निष्क्रान्तस्य, मृतस्य वा नश्यति चरणं, श्रतमगुणनया, न तु [1]वैयावृत्त्यचितं बद्धं शुभोदयं नश्यति कर्म ॥८२०॥

लाभेन प्राप्तघृतादेर्योजयन् यतीन् लाभान्तरायं हन्ति, पादप्रक्षालनादिना कुर्वन् समाधिं सर्वसमाधिं लभते

१ ० चितं-बद्धं शुभो० ।k।

॥८२१॥ 'पडितप्पह'त्ति वैयावृत्त्यं कुरुत ॥८२२॥ भवेद्वा न वा लाभः प्रासुकाहारोपध्यादीनां, [1]तथाऽपि निर्जरा भवति ॥८२३॥ स्पष्टा ॥८२४॥

एसा गहणेसणविही, कहिया भे धीरपुरिसपण्णत्ता ।

गहणेसणा समत्ता

घासेसणंपि इत्तो, वुच्छं अप्पक्खरमहत्थं ॥८२५॥

ग्रासैषणोच्यते ॥८२५॥

दव्वे भावे घासेसणा उ, दव्वंमि मच्छ आहरणं ।

गलमंसुंडगभक्खण, गलस्स पुच्छेण घट्टणया ॥८२६॥

एको मत्स्यो गले मांसपिण्डं पार्श्वतो भुक्त्वा पुच्छेण घट्टणां करोति । गलं हन्ति० मत्स्यबन्धो वेत्त्ययं गृहीतः तेन चैवं सर्वं भक्षितम् ॥८२६॥

अह मंसंमि पहीणे, झायंतं मच्छियं भणइ मच्छो ।

किं झायसि तं एवं ?, सुण ताव जहा अहिरिओऽसि ॥८२७॥

१ ० तथाऽपि वैयावृत्त्यार्थमभ्युद्यतस्य निर्जरालाभो भवति० ॥८२३॥ ।k।

चरियं व कप्पियं वा, आहरणं दुविहमेव णायव्वं ।
अत्थस्स साहणट्ठा, इंधणमिव ओयणट्ठाए ॥८२८॥

स्पष्टा ॥८२८॥

उदाहरण— द्वैविध्यम् । मत्स्यस्य कल्पितोदाहरणम् ।

तिबलागमुहा मुक्को, तिक्खुत्तो वलयामुहे ।
तिसत्तखुत्तो जालेणं, सयं छिण्णोदए दहे ॥८२९॥
एयारिसं ममं सत्तं, सढं(प्र.हि) घट्टिअघट्टणं ।
इच्छसि गलेण घेत्तुं, अहो ते अहिरीयया ॥८३०॥

अहं प्रमत्तश्चरन् बलाकया गृहीतः, सा उत्क्षिप्य पश्चाद् गिलति अहं वक्रीभूतो मुखेन पतामि, एवंद्वित्रिर्वारा ऊर्ध्वं क्षिप्तः [त्रिर्वारा ऊर्ध्वं क्षिप्तः]। ततो मुक्तः, अन्यदा सागरे गतः, तत्र वलयामुखे कटकात्मके [1]आवर्त्त इव चित्ते वारत्रयं पतितो मुक्तश्च, त्रयः सप्तका एकविंशतिर्वारान् जालान्मुक्तः, कथं?,—यदा जालं क्षिप्तं स्यात्तदा भूमिं लात्वा तिष्ठामि। एकह्रदेऽभवाम, परमस्माभिर्न ज्ञातं यदेष शोष्यति, स शुष्कः । मत्स्यानां स्थले गतिर्नास्ति । ततः केऽपि मृताः केऽपि सन्ति तत्र मात्सी आगतः, स करेणाऽऽदाय शूले प्रोतयति. ततश्चिन्तितं

१ आवर्तवदुच्चिते० ।k।

ममाऽप्येषां गतिरितिविमृश्य तेषां मत्स्यानामन्तरातं(लं) [मध्यस्थितमित्यर्थः] शूलं मुखे लात्वा स्थितः, स वेत्त्येते सर्वे प्रोताः, [१]सोऽन्यह्रदे गत्वा धावयति, तत्राऽहं शूलं मुक्त्वोत्प्लुत्यास्ताघे जले गतः । तत ईदृशं मे सत्त्वं, शठ मां तथा घट्टितघट्टनः,—घट्टितानि सम्बन्धितानि जालादिचलनानि यस्य मे सोऽहं घट्टितघट्टनः, तमेवं-विधं मामिच्छसि गले ग्रहीतुम् ?, अहो ते निर्लज्जता, उक्ता द्रव्यग्रासैषणा, यथाऽसौ ग्रासं कुर्वन्न क्वचिच्छलितः ॥८२९-८३०॥ भावग्रासैषणामाह—

अह होइ भावघासेसणा उ, अप्पाणमप्पणा चेव ।
साहू भुंजिउकामो, अणुसासइ णिज्जरट्ठाए ॥८३१॥

कथं ?, यदात्मानमात्मनैवाऽनुशास्ति, कदा पुनः ?, भोक्तुकामो निर्जरार्थं, न तु वर्णाद्यर्थम् ॥८३१॥ किं पुनश्चिन्तयन्नात्मानमनुशास्तीत्याह—

बायालीसेसणसंकडंमि, गहणंमि जीव ! णहु छलिओ ।
एण्हिं जह(प्र.जइ) ण छलिज्जसि, भुजंतो रागदोसेहिं ॥८३२॥

द्विचत्वारिंशदेषणादोषैर्दुःप्रवेशे गह्वरे हे जीव ! न त्वं छलितः ॥८३२॥ [इदानीं भुञ्जन् यदि रागद्वेषाभ्यां

१ ० न्यद् ह्रदे गत्वा धावति तत्राऽहं० ।k।

न छलिष्यसि तथा विधेयमिति]—

जह अब्भंगण-लेवा, सगडक्ख-वणाण जुंत्तिओ होंति ।
इय संजमभरवहणट्ठ-याए साहूण आहारो ॥८३३॥

यथाऽभ्यङ्गः शकटाक्षे युक्त्या दीयते, व्रणानां च लेपा दीयन्ते, नातिबहवो नातिस्तोका वा एवं संयमभरवहनार्थं साधूनामाहारः ॥८३३॥

उवजीवि-अणुवजीवी, मंडलिं(प्र.लिए) पुव्ववण्णिओ साहू ।
मंडलिअसमुद्दिसगाण, ताण इणमो विहिं वुच्छं ॥८३४॥

मण्डल्युपजीवी अनुपजीवी च पूर्वं द्विधा वर्णितः साधुरेकः, इदानीं बहूनां मण्डल्यामसमुद्दिस[श]कानां यो-विधिस्तं वक्ष्ये ॥८३४॥ [1]ते च कथं भवन्ति ?, अत आह—

आगाढजोगवाही, णिज्जूढत्तट्ठिआ व पाहुणगा ।
से(प्र.सा)हा सपायछित्ता, बाला वुड्ढेवमाईया ॥८३५॥

(१)आगाढयोगः—गणियोगस्तत्रस्थाः, (२)'णिज्जूढ'०त्ति कारणान्तरेणामनोज्ञास्तिष्ठन्ति ते पृथग् भुञ्जते, (३)आत्मा-

१ ते च मण्डल्यामसमुद्देगकाः कथं स्युः ? अत०' ।k।

थिकाश्च (४)प्राघूर्णकाश्च, यतस्तेषां प्रथममेव प्रायोग्यं [1]दीयते, शैक्षा(शिक्षकाः) अपि सागारिकत्वेन पृथग् भोज्यन्ते, (६)सप्रायश्चित्ताश्च पृथग् भोज्यन्ते, (७)बाल(८)वृद्धाश्च, आदिग्रहणात् कुष्ठव्याध्याद्युपद्रुताः ॥८३५॥ ते चाऽऽलोके भुञ्जते, स च द्विधेत्याह—

दुविहो खलु आलोको, दव्वे भावे य दव्वि दीवाई ।
सत्तविहो पुण भावे, आलोगं(प्र.गो) तं परिकहेऽहं(प्र.स्सं) ।८।३६॥

द्विधाऽऽलोको द्रव्यभावभेदेन, [2]द्रव्यतः प्रदीपादिः । भावतः सप्तधा, तं परिकथयामि ॥८३६॥

(१)ठाणे(२)दिसि(३)पगासणया, (४)भाय(प्र.स)ण(५)पक्खेवणे य(६)गुरु(७)भावे ।
सत्तविहो आलोको, सयावि जयणा सुविहियाणं ॥८३७॥

तैर्निष्क्रमप्रवेशवर्जिते स्थाने भोक्तव्यं, गुरोरेकस्यां दिश्युपवेष्टव्यं, सप्रकाशे स्थाने भोक्तव्यं, भाजने च विस्तीर्णमुखे, प्रक्षेपणं कवलानां, गुरोश्चक्षुःपथे भोक्तव्यं, 'भावे'० ज्ञानादिवृद्ध्यर्थं, सप्तविधेऽप्यालोके सदाऽपि यतना सुविहितानाम् ॥८३७॥ इमां गाथां व्याख्यानयति—

१ ० दीयन्ते ततस्तेऽप्येकाकिनो भवन्ति० ।k।   २ द्रव्यः प्रदीपादिभिः ।S।

णिक्खमपवेस मंडलि, सागारियठाण परिहियट्ठाइ ।
मा एक्कासणभंगो, अहिगरणं अंतरायं वा ॥८३८॥

निष्क्रमप्रवेशौ वर्जयित्वोपविशति, मण्डलीप्रवेशं च वर्जयति। सागारिकस्थानं च, सागारिके प्राप्ते एकाशनभङ्गः स्याद्, अधिकरणं राटिर्वा भवति, अन्यसाधुस्थाने उपविष्टस्यान्तरायं भवति ॥८३८॥ दिशिद्वारमाह—

पच्चुरसि-परंमुह-पट्ठि-पक्ख एया दिसा विवज्जेत्ता ।
ईसाणग्गेईय व, ठाएज्ज गुरुस्स(प्र.गुरुण) गुणकलिओ ॥८३९॥

प्रत्युरसं—गुरोरभिमुखं पराङ्मुखं च नोपविशति, पृष्ठतः पक्षयोर्न, एता दिशो वर्जयित्वा ईशान्यां गुरोराग्नेय्यां वा दिशि तिष्ठेद् भोजनार्थम् ॥८३९॥

मक्खि(प्र.च्छि)यकंटट्ठाईण, जाणणट्ठा पगासभुंजणया ।
अट्ठियलग्गणदोसा, वग्गुलिदोसा जढा एवं ॥८४०॥

मक्षिका—कण्टकाऽस्थ्यादीनां ज्ञानार्थं प्रकाशे स्थाने भुङ्क्ते, एवं च गलकादौ अस्थि—कण्टक—लगनदोषस्त्यक्तो भवति ॥८४०॥

१ ० भवति पार्श्वे निपतति बहु० ।k।

जे चेव अंधयारे, दोसा ते चेव संकडमुहंमि ।
परिसाडी बहुलेवाडणं च तम्हा पगासमुहे ॥८४१॥

परिशाटिर्भवति, 'बहुलेवाडणं' हस्तस्योपरि खरण्टते ॥८४१॥

कुक्कुडिअंडगमित्तं, अविगियवयणो उ पक्खिवे कवलं ।
अइखद्धकारगं वा, जं च अणालोइयं हुज्जा ॥८४२॥

कुकुंटयण्डकप्रमाणं कवलमविकृतवदने गुर्वाऽऽलोके भोक्तव्यम् । गुरोरदर्शने कदाचित्साधुः प्रचुरं भुञ्जीत, अकारकम्–अपथ्यं, प्रच्छन्नं यत्स्निग्धद्रव्यं गुरोरनालोचितमभूत्तदपि भुञ्जीत ॥८४२॥

एएसि जाणणट्ठा, गुरु-आलोए तओ उ भुंजेज्जा ।
णाणाइसंधणट्ठा, ण वण्ण-बलरूवविसयट्ठा ॥८४३॥

एतेषां दोषाणां ज्ञानार्थं गुर्वाऽऽलोके भुञ्जीत । भावद्वारमाह–ज्ञानादिभावत्रयमभुञ्ज्यमाने त्रुट्यति, [1]तत एतेषां सन्धानार्थं भुञ्जीत न च वर्णबलरूपविषयार्थम् ॥८४३॥

सो आलोइयभोई, जो एए जुंजए पए सव्वे ।
गविसण-गहण-ग्घासेसणाइ तिविहाइ वि विसुद्धं ॥८४४॥

१ अतः ।5।

स [2]साधुरालोकितभोजी य एतानि पदानि स्थानादीनि प्रयुङ्क्ते, स त्रिविधयाऽप्येषणया शुद्धं भुङ्क्ते ॥८४४॥

एवं एगस्स विही, भोत्तव्वे वण्णिओ समासेणं ।
एमेव अणेयाणवि, जं णाणत्तं तयं वोच्छं ॥८४५॥

एकसाधोर्भोजनविधिवर्णितः संक्षेपेण, एवमनेकेषामपि(k) यत् पुनर्नानात्वं यदतिरिक्तं तदहं वक्ष्ये ॥८४५॥



किं पुनः कारणं मण्डली क्रियते?, उच्यते—

अतरंतबालवुड्ढा, सेहाएसा गुरू असहुवग्गो ।
साहारणोग्गहाऽलद्धि-कारणा मंडली होइ ॥८४६॥

ग्लान-बाल-वृद्ध-शैक्ष्य प्राघूर्णकाः गुरुः 'असहुवग्गो'त्ति असमर्थो राजपुत्रादिः । एतेषां सुखनिर्वाहनार्थं मण्डली क्रियते, येन वहवः प्रतिजागरकाः स्युः[k] यथा कश्चित्किञ्चित्करोति, एकस्यैव वैयावृत्त्यादि कुर्वतः सूत्रार्थहानिर्भवति, तस्मादुपग्रहो भक्तादिको भवति, साधारणोपग्रहा मण्डली, स साधारणोऽतुल्यो यस्यां सा । योऽलब्धिमांस्तदर्थं मण्डली भवति ॥८४६॥ भिक्षागतानां वसतिरक्षपालस्याऽयं विधिः—

णाउं णियट्टणकालं, वसहीपालो य भायणुग्गाहे ।
परिसंठियच्छदवगेण्ह-णट्ठया गच्छमासज्जा ॥८४७॥



२ ० साधुर्गुरोरालोचितं भुङ्क्ते य० ।k।

वसतिपाल-कर्त्तव्यम् ।

ज्ञात्वा भिक्षागतानां निवर्त्तनकालं वसतिपालो नन्दीपात्रं प्रतिलिख्योद्ग्राहयति । संघट्टितेनास्त इत्यर्थः । किमर्थं ?, परिसंस्थिताच्छद्रवग्रहणार्थम् , एतदुक्तं भवति—तत्रानीय साधवः पानकं प्रक्षिपन्ति । परिसंस्थितं—स्वच्छीभूतं ततोऽन्यत्र पात्रके क्रियते, येनाऽऽचार्यादीनां स्वच्छं योग्यं भवति पात्रकादिप्रक्षालनं च क्रियते(k), गच्छमाश्रित्य द्वे त्रीणि [१]चत्वारि भवन्ति प्रतिलेख्यानि ॥८४७॥

असइ य णियत्तेसुं, एक्कं चउरंगुलूण भाणेसु ।
पक्खिविय पडिग्गहगं, तत्थऽच्छदवं तु गालेज्जा ॥८४८॥

वसतिपाल—नन्दिपात्रयोरभावे एकं पतद्ग्रहं चतुरङ्गुलन्यूनपात्रेषु प्रक्षिप्य, रिक्तपात्रे द्रवगलनं क्रियते, अत्राऽयं नियमो, [२]यदुत—तावद् भिक्षा ग्राह्या यावत् पात्रकं चतुरङ्गुलन्यूनमास्ते ॥८४८॥ किमर्थं द्रवं गालयेत् ?, इत्याह—

जल-गालनम् ।

आयरिय-अभाविय-पाणगट्ठया पायपोस-धुवणट्ठा ।
होइ य सुहं विवेगो, सुहआयमणं च सागरिए ॥८४९॥

आचार्याः, अभावितशैक्षादिपानार्थं, पादधावनार्थं, अपानधावनार्थं भवति(k) सुखेन विवेकः—त्यागोऽतिरिक्तस्य भवति, तथा सागारिणोऽग्रे सुखेनाऽऽचमनं भवति ॥८४९॥ [३]कियन्ति ध्रियन्ते पात्राणीत्याह—

१ ० चत्वारि पञ्चादीनि यावदुद्ग्राहयति० ।k। २ ० यदुत भिक्षां तावत् साधवोऽटन्ति यावत् ० ।k।
३ ० कियन्ति पात्राणि गल्तिद्रवस्य ध्रियन्त इत्याह ।k।

एक्कं व दो व तिण्णि व, पाए गच्छप्पमाणमासज्ज ।
अच्छदवस्स भरेज्जा, कसट्ट-बीए विगिंचेज्जा ॥८५०॥

एकं द्वे त्रीणि वा भ्रियन्ते स्वच्छद्रवस्य, गलिते सति 'कसट्ट'त्ति कचवरं बीजादि च परित्यजेत् ॥८५०॥ अथ पुनस्तत्र गलने कीटिकामर्कोटकादयः प्लवमाना दृश्यन्ते, तत्रायं विधिः—

मूइंगाईमकोडएहिं, संसत्तगं च णाऊणं ।
गालेज्ज छब्बएणं, सउणीधरएण व दवं तु ॥८५१॥

कीटिकादिसंसक्तं ज्ञात्वा, गालयेत् 'छब्बएणं' वंशपिटकेन शकुनिगृहेण वा ॥८५१॥

इय आलोइयपट्ठविअ-गालिए मंडलीइ सट्ठाणे ।
सज्झायमंगलं कुणइ, जाव सव्वे पडिणियत्ता ॥८५२॥

एवमालोचिते सति, प्रस्थापिते स्वाध्याये, गलिते पानके, पुनश्च मण्डल्यां स्वस्थाने उपविश्य स्वाध्यायमङ्गलं करोति । यावत्सर्वे साधवः प्रतिनिवृत्ता [1]भवन्ति ॥८५२॥ यदि सहिष्णवस्ततो यौगपद्येन भुञ्जते, असहिष्णुष्वयं विधिः—

[1] स्युः ।k।S।

काल-पुरिसे व आसज्ज, मत्तए पक्खिवित्तु तो पढमा ।
अहवावि पडिग्गहगं, मुयंति गच्छं समासज्ज ॥८५३॥

ग्रीष्मकालाद्यङ्गीकृत्याऽसहिष्णुः, बुभुक्षालुर्वा तमाश्रित्य मात्रे प्रक्षिप्य भक्तं प्रथमालिका दीयते, अथ बहवो बुभुक्षालवस्ततः पतद्ग्रहं मुञ्चति तेभ्यो भक्षणार्थं, गच्छमाश्रित्य तदनुरूपं पतद्ग्रहं मुञ्चति ॥८५३॥

चित्तं बालाईणं, गहाय आपुच्छिऊण आयरिअं ।
जमलजणणीसरिच्छो, णिवेसई मंडलीथेरो ॥८५४॥

चित्तं बालादीनां गृहीत्वा, पृष्ट्वाऽऽचार्यं, मण्डलीस्थविरो [उपविशति, मण्डलीस्थविरो] गीतार्थो–रत्नाधिकोऽलुब्धः, [श्र] अत्र पदत्रयनिष्पन्ना अष्टौ भङ्गाः ॥८५४॥ शुद्धाऽशुद्धान् दर्शयन्नाह—

जइ लुद्धो राइणिओ, होइ अलुद्धो वि जावि गीयत्थो ।
ओमोवि हु गीयत्थो, मंडलिराइणि अलुद्धो उ ॥८५५॥

यद्यसौ मण्डलीस्थविरो लुब्धो रत्नाधिकस्ततस्तिष्ठति न प्रविशति, अनेन लुब्धपदेन २, ४, ६, ८ भङ्गाः अशुद्धाः, अलुब्धोऽपि यदि गीतार्थः 'ओमो०'त्ति लघुपर्यायः स मण्डल्यां प्रविशति, अयं प्रथमाऽभावेऽपवादे शुद्धो भवति । 'गीय'० यस्तु गीतार्थो रत्नाधिकोऽलुब्धः स प्रविशति, असावाद्यो भङ्गः शुद्धः, यत्र यत्र लुब्धपदम-

मण्डलीस्थविरस्वरूपम् ।

गीतार्थपदं च स स [भङ्गः] त्याज्यः । 'ओम' रत्नाधिकपदं अगीतार्थलुब्धपदरहितं शुद्धमपवादपदे ॥८५५॥ [1]ते मिलिता आलोके भुञ्जते, स द्विधा द्रव्यालोकः- प्रदीपादिः, भावालोकमाह—

ठाणदिसिपगासणया, भायणपक्खेवणा य भावगुरू ।
सो चेव अ आलोगो, णाणत्तं तद्दिसा ठाणे ॥८५६॥

अर्थः पूर्ववत् । [2]यन्नानात्वं दिशः स्थानस्य च ॥८५६॥ स्थानमाह—

णिक्खमपवेस मोत्तुं, पढमसमुद्दिस्सगाण ठायंति ।
सज्झाए परिहाणी, भावासण्णेवमाईया ॥८५७॥

निष्क्रमप्रवेशौ पूर्वभुक्तानां मुक्त्वा तिष्ठन्ति, मार्गाऽभावे स्वाध्यायहानिः । भावासन्नस्य संज्ञादिवेगधारणे पीडा [भवति] ॥८५७॥ दिग्द्वारमाह—

पुव्वमुहो राइणिओ, एक्को य गुरुस्स अभिमुहो ठाइ ।
गिण्हइ व पणामेइ व, अभिमुहो इहरहाऽवण्णा ॥८५८॥

१ इदानीं ते० ।k। २ किन्तु नानात्वं ।k।

पूर्वाभिमुखो रत्नाधिक उपविशति, एको गुरोरभिमुखमुपविशति, स यथा गुरोरतिरिक्तं गृह्णाति दत्ते वा, इतरथा पृष्ठयादि दत्त्वोपविशतोऽवज्ञा कृता भवति ॥८५८॥

जो पुण हवेज्ज खमओ, अतिउच्चाओ व सो बहिं ठाइ ।
पढमसमुद्दिट्ठो वा, सागारियरक्खणट्ठाए ॥८५९॥

क्षपकः, अतिश्रान्तो, वा—प्राघूर्णकादिः स बहिर्मण्डल्यास्तिष्ठति, प्रथमसमुद्दिष्टो वा सागरिकरक्षणार्थम् ॥८५९॥

एक्केक्कस्स य पासंमि, मल्लयं तत्थ खेलमुग्गाले ।
कट्ठ(प्र.कंट)ट्ठिए व छुब्भइ, मा लेवकडा भवे वसही ॥८६०॥

साधूनां भुञ्जतामेकैकस्य पार्श्वे मल्लकं भवति, तत्र खेलः श्लेष्मा—उद्गाल्यते, भुञ्जतः कदाचित्कण्टकोऽस्थि वा स्यात्ततस्तत्र क्षिप्यते [1]मा वसतिर्लेपकृता—अनायुक्ता भवति ॥८६०॥ तथाऽमुं परं विधिमाह—

मंडलि भायण भोयण, गहणं साहीय कारणुव्वरिते ।
भोयणविही उ एसो, भणिओ तेल्लुक्कदंसीहिं ॥८६१॥

१ अन्यथा वसतिर्लि० ।k।

मण्डली यथारत्नाधिकतया कार्या । भाजनानि पूर्वं अहाकडाइं भुञ्जन्ति । भोजनं च स्निग्धमधुरं पूर्वं भोक्तव्यं, [1]पात्रात्कवलग्रहणं, ग्रहणस्यैव शुद्धिर्वाच्याऽथवा शुद्धिर्भुञ्जानस्य यथा स्यात्तथा वक्तव्यं, कारणे भोक्तव्यं । अतिरिक्तविधिर्वाच्यः । अयं [2]भोजनविधिः। द्वारगाथेयम् ॥८६१॥ [3]आद्यावयवमाह—

मंडलि अहराइणिआ, सामायारी य एस जा भणिआ ।
पुव्वं तु अहाकडगा, मुच्चंति तओ कमेणियरे ॥८६२॥

यथारत्नाधिकतया सामाचारी चाऽत्र कार्या 'ठाण–दिसी'त्यादि, उक्तं मण्डलीद्वारम् ॥ भाजनद्वारमाह–प्रथमं यथाकृतानि परिकर्मरहितानि यानि लब्धानि तानि भोजनार्थं मुच्यन्ते । एतदुक्तं भवति–पूर्वमप्रतिकर्मा पतद्ग्रहो भ्राम्यते, क्रमेणेतरे–अल्पपरिकर्म–बहुपरिकर्माणि मुच्यन्ते ॥८६२॥ भोजनद्वारम्—

णिद्धमहुराणि पुव्वं, पित्ताईपसमणट्ठया भुंजे ।
बुद्धिबलवड्ढणट्ठा, दुक्खं खु विगिंचिउं णिद्धं ॥८६३॥

स्निग्धमधुराणि पूर्वं भक्ष्यन्ते (k)बुद्ध्यादिवर्धनार्थं, 'घृतेन वर्धते मेधा'इत्यादि। बलेन वैयावृत्यादि कर्तुं शक्यते(k) दुःखं परिष्ठापयितुं स्निग्धं घृतादि भवति, यतोऽसंयमो भवति ॥८६३॥

१ 'ग्रहणं' च पात्रात् कुर्कुट्यण्डकमात्रं कवलं गृह्णाति ।k। २ ० विधिः सुगमः ।k। ३ प्रथमाव० ।k।

अह होज्ज णिद्धमहुराणि, अप्पपरिकम्म-सपरिकम्मेहिं ।
भोत्तूण णिद्धमहुरे, फुसिअ करे मुंचऽहागडए ॥८६४॥

अथ भवेयुः(k) स्निग्धानि मधुराणि चाल्पपरिकर्मसु पात्रेषु ततः को विधिः ? इत्याह—स्निग्धादीनि भुक्त्वा करौ प्रोञ्छयित्वा यथाकृतान्यपरिकर्माणि समुद्दिशनार्थं मुच्यन्ते ॥८६४॥ ग्रहणद्वारमाह—

कुक्कुडिअंडगमित्तं, अहवा खुड्डागलंबणासिस्स ।
लंबणतुल्ले गिण्हइ, अविगियवयणो य राइणिओ ॥८६५॥

अथवा [1]क्षुल्लकः लम्बनाशिनः—लघुकवलभोजिनस्तुल्यान् कवलान् गृह्णाति, अविकृतवदनो रत्नाधिको न भावदोषेण मुखमत्यर्थं बृहत्कवलक्षेपार्थं निर्वाहयति किं तर्हि ?, स्वभावस्थेनैव मुखेनेति ॥८६५॥ अथवाऽयं ग्रहणविधिः—

गहणे पक्खेवंमि अ, सामायारी पुणो भवे दुविहा ।
गहणं पायंमि भवे, वयणे पक्खेवणा होइ ॥८६६॥

ग्रहणे प्रक्षेपे च कवलानां द्विधा सामाचारी, ग्रहणं पात्रकात्कवलोत्क्षेपः प्रक्षेपणं वदनविषयम् ॥८६६॥ पात्रात्कथं गृह्यते तदाह—

१ क्षुल्लकेन लम्बनकेनाऽशितुं शीलं यस्य तस्य क्षुल्लकलम्बनाशिनः० ।k।

कडपयरच्छेएणं, भोत्तव्वं अहव सीहखइएणं ।
एगेहि अणेगेहिवि, वज्जेत्ता धूमइंगालं ॥८६७॥

कटकच्छेदेन भोक्तव्यं, यथा कलिञ्जस्य खण्डलं छित्त्वाऽपनीयते एवमसावपि भुङ्क्ते, प्रतरच्छेदेन वा तरिकाच्छेदेनेत्यर्थः, सिंहभक्षितेन वा सिंहो हि एकदेशादारभ्य तावद् भुङ्क्ते यावत्सर्वं निष्ठितं भवति, तच्चैकेन बहुभिर्वा भोक्तव्यं वर्जयित्वा धूमाङ्गारे—रागद्वेषावित्यर्थः ॥८६७॥ वदनप्रक्षेपणमाह—

असुरसुरं अचवचवं, अदुयमविलंबिअं अपरिसाडिं ।
मणवयणकायगुत्तो, भुंजइ अह पक्खिवणसोहिं ॥८६८॥

'असुरसुरं'—सरडकान् अकुर्वन्, 'अच'० वल्कमिव न चर्वयति, अद्रुतम्—अत्वरितं तथाऽविलम्बितं—अमन्थरम्, अपरिशाटि, मनोवाक्कायगुप्तो भुञ्जीत, एवं त्रिगुप्तस्य प्रक्षेपणाशोधिर्भवति ॥८६८॥

उग्गम-उप्पायणासुद्धं, एसणादोसवज्जिअं ।
साहारणं अयाणंतो, साहू हवइ असारओ ॥८६९॥

उद्गमोत्पादनाशुद्धमेषणादोषवर्जितं साधारणं सामान्यं गुडादि अजानानः अतिमात्रं दुष्टेन भावेन वाऽऽददानः योऽसौ पतद्ग्रहो भ्रमति तस्मात्, साधुरसारकोऽप्रधानो भवति ज्ञानाद्यङ्गीकृत्य ॥८६९॥

उग्गम-उप्पायणासुद्धं, एसणादोसवज्जिअं ।
साहारणं वियाणंतो, साहू हवइ ससारओ ॥८७०॥

साधारणमेतद् द्रव्यमिति विजानानोऽदुष्टेन[1] भावेन कवलं गुडादेराददानः साधुर्भ० ससारः ॥८७०॥

उग्गम-उप्पायणासुद्धं, एसणादोसवज्जिअं ।
साहारणं अयाणंतो, साहू कुणइ तेणिअं ॥८७१॥

साधारणमजानानः–दुष्टभावेनाऽऽददानः स्तैन्यं साधु करोति ॥८७१॥

उग्गम-उप्पायणासुद्धं, एसणादोसवज्जिअं ।
साहारणं वियाणंतो, साहू पावइ णिज्जरं ॥८७२॥

साधारणं तुल्यमेतत्सर्वेषां जानन्न दुष्टान्तरात्मा स्वल्पमाददानो निर्जरां करोति ॥८७२॥

अंतंतं भोक्खामित्ति, बेसए भुंजए य तह चेव ।
एस ससारणिविट्ठो, ससारओ उट्ठिओ साहू ॥८७३॥

१ अदुष्टेनान्तरात्मना कवलं० ।k।

अन्त्यं वल्लचणकादि तदपि पर्युषितं अन्त्यान्त्यं भक्षयिष्यामीति परिणामेनोपविष्टो मण्डल्यां, तथापरिणामो भुङ्क्ते, एष ससार उपविष्टः, उत्थितश्च, तस्य शुभपरिणामस्याप्रतिपातित्वात् ॥८७३॥

संसारे समुद्रवणिग्दृष्टान्तः ।

एमेव य भंगतिअं, जोएयव्वं तु सारणाई ।
तेण सहिओ ससारो, समुद्दवणिएण दिट्ठंतो ॥८७४॥

एवमेव भङ्गत्रयं योजनीयम् । सारश्चात्र ज्ञानादि, अत्र समुद्रवणिजा दृष्टान्तः । [1]एको वणिक् समुद्रपारे ससारो [2]गतः ससारश्चाऽऽगतः । एवं भङ्गाः ॥८७४॥

मण्डल्यां पतद्ग्रहभ्रमणविधिः ।

जत्थ पुण पडिग्गहगो, होज्ज कडो तत्थ छुब्भए अण्णं ।
मत्तग गहिउव्वरिअं, पडिग्गहे जं असंसट्ठं ॥८७५॥

यत्र पुन भुञ्जानानां पतद्ग्रहो 'भवेत्कडो'–निष्ठितभक्तो जातः–साधुपर्यन्तमप्राप्त एव, ततस्तत्र निष्ठितभक्ते पतद्ग्रहेऽन्यद् भक्तं प्रक्षिप्यते, ततश्च यस्मिन् साधौ संनिष्ठितस्तत आरभ्य पुनर्भ्राम्यति, मात्रके बालादीनां प्रायोग्यं गृहीतमासीत् । उद्धरितमसंसृष्टं पतद्ग्रहे क्षिप्त्वा भ्राम्यति ॥८७५॥

१ ० 'एको ××× एवं भङ्गाः' एतावानंशोऽसंज्ञकप्रतौ नास्ति ।स०। २ ० गतः द्रविण वहूकृत्य ससा० ।k।

जं पुण गुरुस्स सेसं, तं छुब्भइ मंडलीपडिग्गहके ।
वालादीण व दिज्जइ, ण छुब्भइ सेसगाणऽहिअं ॥८७६॥
सुक्कोल्लपडिग्गहगे, विआणिआ पक्खिवे दवं सुक्के ।
अभत्तट्ठिआण अट्ठा, बहुलंभे जं असंसट्ठं ॥८७७॥

यद् गुरोः शेषं भुञ्जानस्य तत्संसृष्टमपि मण्डलीपतद्ग्रहे प्रक्षिप्यते, ततश्च बालग्लानादीनां दीयते, शेषाणां न प्रक्षिप्यते, संसृष्टं सत्, 'सुक्कु'० शुष्कार्द्रयोर्भक्तयोः पतद्ग्रहौ भवतः । विज्ञाय शुष्के द्रवं प्रक्षिप्यते, येन तोयप्रक्षेपणे संजातबन्धं भक्तं सुखेनैव कवलैर्गृह्यते, [1]अथवा गुडादि लब्धं तदसंसृष्टमेव ध्रियते, किमर्थम्?, अभक्तार्थिनां येन मनोज्ञं भवेत् ॥८७६-८७७॥ उक्ता ग्रहणशुद्धिः, भुञ्जानस्य शोधिमाह—

सोही चउक्कभावे, विगइंगालं च विगयधूमं च ।
रागेण सयंगालं, दोसेण सधूमगं होइ ॥८७८॥

शुद्धौ चतुष्कं भवति, नामस्थापनाद्रव्यभावरूपं, द्रव्यशोधिः पूर्ववत्, भावे—विगताङ्गारधूमं भुञ्जतो भावशुद्धिः ॥८७८॥

१ अथ बहुलाभः संजातः, प्रचुरं लब्धं गुडादि ततोऽसं० ।k।

भुञ्जानस्य शोधिः ।

जत्तासाहणहेउं, आहारेंति जवणट्ठया जइणो ।
छा(प्र.बा)यालीसं दोसेहिं, सुपरिसुद्धं विगयरागा ॥८७९॥

चारित्रयात्रासाधनार्थ—यापनार्थं शरीरसंधारणार्थं यतयः षट्चत्वारिंशद्दोषैः सुपरिशुद्धम् आहारयन्ति, के च ते?, षोडशोद्गमदोषाः, षोडशोत्पादनादोषाः, [१]दशैषणादोषाः । संयोजनाऽतिप्रमाणं साङ्गारं धूमगं चैते षट्चत्वारिंशद्दोषाः ॥८७९॥

हियाहारा मियाहारा, अप्पाहारा य जे णरा ।
ण ते विज्जा तिगिच्छंति, अप्पाणं ते तिगिच्छगा ॥८८०॥

श्लोकः स्पष्टः ॥८८०॥ कारणद्वारमाह—

आहार-कारणानि

छण्हमण्णयरे ठाणे, कारणंमि उ आगए ।
आहारेज्जा (उ)मेहावी, संजए सुसमाहिए ॥८८१॥

षण्णां स्थानानामन्यतरस्मिन् कारणे स्थाने आगते आहारयेत् ॥८८१॥ तान्याह—

१ दशैषणात आरभ्य षष्ठं धर्मं० इत्यादिपर्यन्तः पाठः K संज्ञकप्रतौ पतितो दृश्यते ।सं०।

वेयणवेयावच्चे, इरियट्ठाए य संजमट्ठाए ।
तह पाणवत्तियाए, छट्ठं पुण धम्मचिंताए ॥८८२॥

[1]क्षुद्वेदनोपशमार्थं [2]वैयावृत्त्यार्थं [3]ईर्याशोधनार्थं [4]संयमार्थं [5]'पाणवत्तियाए'त्ति प्राणसंधारणार्थं [6]षष्ठं धर्मचिन्तार्थम्। ॥८८२॥ इमां गाथां व्याख्यानयति—

णत्थि छुहाए सरिसया, वेयण भुंजेज्ज तप्पसमणट्ठा ।
छाओ वेयावच्चं, ण तरइ काउं अओ भुंजे ॥८८३॥

नास्ति क्षुत्सदृशी वेदना, तत्प्रशमार्थं भुङ्क्ते, द्वारं। 'छाओ' बुभुक्षितो वैयावृत्त्यं कर्तुं न शक्नोति, अतो भुङ्क्ते (दारं) ॥८८३॥

इरियं(प्र.चन सोहेइ)णवि सोहेइ, पेहाईयं च संजमं काउं ।
थामो व परिहायइ, गुणणुप्पेहासु य असत्तो(प्र.असमत्थो) ॥८८४॥

ईर्यां न शोधयति क्षुधितः, द्वारं । प्रेक्षादिकं संयमं कर्त्तुं न शक्नोति, द्वारं ॥ थामः—प्राणस्तस्य परिहानिर्भवति, द्वारं । गुणनं पूर्वपठितस्यानुप्रेक्षणं—चिन्तनं ग्रन्था[1]र्थयोः, असमर्थः सन् भुङ्क्ते ॥८८४॥

---

१ ० र्थयोरेतदसौ वर्तुमस० ।k।

पड् अनाहार कारणानि ।

अहवा ण कुज्ज आहारं, छहिं ठाणेहिं संजए ।
पच्छा पच्छिमकालंमि, काउं अप्पक्खमं खमं ॥८८५॥

अथवा न कुर्यादेवाहारम् एभिः षड्भिः स्थानैर्वक्ष्यमाणैः, [1]षष्ठं पदमाह—'पच्छा'० पश्चिमकाले—संलेखनाकाले, आत्मक्षमाम्—आत्महितां क्षान्तिं[2] कृत्वा पश्चात्—शरीरपरिकर्मानन्तरं सर्वोऽऽहारं मुञ्चति ॥८८५॥ तानि षट् स्थानान्याह—

आयंके उवसग्गे, तितिक्खया बंभचेरगुत्तीए ।
पाणदयातवहेउं, सरीरवोच्छेयणट्ठाए ॥८८६॥

[1]आतङ्कोप[2]सर्गयोस्तितिक्षार्थं—सहनार्थं [3]ब्रह्मचर्यगुप्त्यर्थं च [4]प्राणदया [5]तपः [6]शरीरव्यवच्छेदार्थं न भोक्तव्यम् ॥८८६॥ इमां गाथां व्याख्यानयति—

आयंको जरमाई, राया सण्णायगा व उवसग्गा ।
बंभवयपालणट्ठा, पाणदयावासमहियाई ॥८८७॥

[1]आतङ्को—ज्वरादिः, [2]राज्ञा राजकुलधारणादिरूपो यद्युपसर्गः कृतः, 'स' स्वजनो यद्युन्निष्क्रमणार्थमुपसर्गं करोति, [3]ब्रह्मव्रतपालनार्थं, [4]तथा प्राणदयार्थं न भुङ्क्ते, यदि वर्षति महिका वा निपतति ॥८८७॥

१ तत्र षष्ठं पदमाह निर्युक्तिकारः—'पच्छा' |k| २ क्षान्तिमुपशमं कृ० |k|

आहारस्यापवादपदता ।

तवहेउ चउत्थाई, जाव छउम्मा(प्र.चउमा)सिओ तवो होइ ।
छट्ठं सरीरवोच्छेय-णट्ठया होयणाहारो ॥८८८॥

५तपोऽर्थ—तच्च चतुर्थादि यावत्पण्मासास्तावत्तपो भवति तदर्थं, ६शरीरव्यवच्छेदार्थं न च भुङ्क्ते ॥८८८॥

एएहिं छहिं ठाणेहिं, अणाहारो य जो भवे ।
धम्मं णाइक्कमे भिक्खू, झाणजोगरओ भवे ॥८८९॥

स्पष्टा ॥८८९॥ आहेदमुक्तं षड्भिः कारणैर्मोक्तव्यं च, ततः किमेतत् ?, भोजनमपवादपदम् ?, उच्यते—अपवादपदमेव, यतः—

भुंजंतो आहारं, गुणोवयारं सरीरसाहारं ।
विहिणा जहोवइट्ठं, संजमजोगाण वहणट्ठा ॥८९०॥

भुञ्जन्नाहारं, किंभूतः, गुणानां ज्ञानादीनामुपकारकं, शरीरसत्त्वाधारकं१, यथोपदिष्टम्—आधाकर्मादिरहितं, संयमयोगानां व्यापाराणां वहनार्थं भुञ्जन्नपवादस्थ एव भुङ्क्ते नान्यथा॥ ८९०॥ समुद्दिष्टे सति संलिहनकल्पः कार्य इत्याह—

१ ० धारकमाहार भुञ्जन् विधिना ग्रासैषणाविशुद्धं, यथो० ।k।

भुत्तट्ठियावसेसो, तिलंबणा होइ संलिहणकप्पो ।
अपहुप्पत्ते अण्णं पि, छोढुं ता लंबणे ठवए ॥८९१॥

भुक्तानामवशेषो यः संलिहनकल्पः कार्यः स भुक्ताऽवशेषः । कवलत्रयप्रमाणः संलिखनकल्पः कार्यः । स यदा त्रिकवलप्रमाणो न भवति ?, तदाऽपर्याप्यमाणेऽन्यदपि तस्मिन् पात्रके भक्तं प्रक्षिप्य त्रीन् कवलान् स्थापयति ॥८९१॥

संदिट्ठा संलिहिउं, पढमं कप्पं करेइ कलुसेणं ।
तं पाउं मुहमासे, बितियच्छदवस्स गिण्हंति ॥८९२॥

संदिष्टा भुक्ताः सन्तः संलिह्य पात्रकाणि प्रथमं कल्पं ददाति कलुषोदकेन, तत्पीत्वा 'मु०' मुखस्य परामर्शः—प्रमार्जनं करोति, द्वितीयकल्पार्थमच्छद्रवस्य ग्रहणं कुर्वन्ति ॥८९२॥

दाऊण बितियकप्पं, बहिआ मज्झट्ठिओ उ दवहारी ।
तो देंति तइयकप्पं, दोण्हं दोण्हं तु आयमणं ॥८९३॥

दत्त्वा द्वितीयं कल्पं बाह्यतः पात्रकप्रक्षालनभूमौ, ते च मण्डल्या[1]कारेणोपविशन्ति, तेषां मध्ये स्थितो द्रवधारी[2] पात्रकप्रक्षालनं सर्वेषामेव प्रयच्छति, ततो ददति तृतीयकल्पं, पात्रकप्रक्षालनानन्तरं 'दुण्हं' द्वयोः २ साध्वोर्मात्रकेषु 'आ०'

१ ० कारेण तत्रोपविशन्ति । २ ० धारी भवति स च पात्र० ।k।

निर्लेपनार्थमुदकं प्रयच्छति[1] ॥८९३॥ उद्धरितभक्तविधिमाह—

होज्ज सिआ उद्धरियं, तत्थ य आयंबिलाइणो हुज्जा ।
पडिदंसि अ संदिट्ठो, वाहरइ तओ चउत्थाई ॥८९४॥

स्यात्कदाचिदुद्धरितं तत्र साधूनां मध्ये केचिदाचाम्लादयो [2]भवन्ति, ततस्तस्मिन् भक्ते उद्धरिते आचार्याय दर्शिते सति रत्नाधिकः संदिष्टः सन् चतुर्थादीन् साधून् व्याहरति ॥८९४॥ नैतान् [व्याहरति]—

मोहचिगिच्छ-विगिट्ठं, गिलाण-अत्तट्ठियं च मोत्तूणं ।
सेसे गंतुं भणई, आयरिया वाहरंति तुमं ॥८९५॥

मोहचिकित्सार्थं य उपोषितस्तं, तथा विकृष्टतपसं च न व्याहरति । तस्य कदाचिद्देवता प्रातिहार्यं करोति, अतो न दीयते, ग्लानो ज्वरादिना, [3]आत्मार्थिक, एतान् मुक्त्वा, शेषान् गत्वा भणति, यदुत—आचार्या युष्मान् व्याहरन्ति ॥८९५॥ यश्चतुर्थादिक आकारितः स आकर्ण्य किं करोतीत्याह—

---

१ ० च्छति ॥८९५॥ एषोऽनुद्धरितभक्ते विधिरुक्तः यदा तूद्धरितभक्तं तदा को विधिरित्याह ।k।

२ ० भवन्ति आदिग्रहणादभक्तार्थिको वा कोऽपि, तद् उद्धरित रत्नाधिक आचार्याय दर्शयति, गुरुणा च संदिष्टो यदुत आहूवयाचाम्लादीन्, येन तेभ्यो दीयते, पुनश्चासौ सदिष्टः सन् चतुर्थादीन् व्याहरति, स च नैतान् व्याहरति ० ।k। 'होज्ज' इत्यादिगाथा kसंज्ञकप्रतावनया रीत्या व्याख्याता ।स०। ३ आत्मलब्धिकं न व्याहरति ।k।

अपडिहणंतो आगंतु, वंदिउं भणइ सो उ आयरिए ।
संदिसह भुंज जं सरति, तत्तियं सेस तस्सेव ॥८९६॥

गुर्वाज्ञामनतिलङ्घयन् आगत्य वन्दित्वा भणति, संदिशत यूयं, भणति गुरुः भुञ्जीत, सोऽपि भणति 'जं सरइ तत्तियं' भुञ्जामि, शेषमुद्धरितं तस्यैव यस्य सत्कः पतद्ग्रहः, पुनश्चासावेव परिष्ठापयति ॥८९६॥

अभणंतस्स उ तस्सेव, सेसओ होइ सो विवेगो उ ।
भणिओ तस्स उ गुरुणा, एसुवएसो पवयणस्स ॥८९७॥

'जं सरइ तत्तियं'ति, अभणतस्तस्यैवोद्धृतं भ०, स एव विवेचकः—परिष्ठापकः, भणिते तस्यैव साधोः पतद्ग्रहः, स एव कल्पं ददाति, अयं पूर्वोक्तः प्रवचनोपदेशः ॥८९७॥

भुत्तंमि पढमकप्पे, करेमि तस्सेव देंति तं पायं ।
जावतिअंति अभणिए, तस्सेव विगिंचणे सेसं (प्र.ए भूमिं) ॥८९८॥

उद्धरिते भक्ते भुक्ते सति, पात्रकस्य प्रथमकल्पे कृते, यस्य सत्कं पात्रं तत्तस्यैव ददाति 'जं सरइ' इत्यभणिते तस्यैव यदुद्धृतं शषं तत्परित्याज्यं भवति । इदं पूर्वोक्तस्यैव व्याख्यानं न पुनरुक्तमिति ॥८९८॥ चतुर्थोपवासिकादेः कीदृशं कल्पते इत्याह—

विहिगहिअं विहिभुत्तं, अइरेगं भत्तपाण भोत्तव्व ।
विहिगहिए विहिभुत्ते, एत्थ य चउरो भवे भंगा ॥८९९॥

विधिना गृहीतमुद्गमादिदोषरहितं, विधिभुक्तं—कटकच्छेदादिना भुक्तं, यद्यतिरिक्तं जातं भक्तं पानकं वा तद् भोक्तव्यं [1]परिष्ठापनकं कल्पते ॥८९९॥ विध्यविधिगृहीतस्वरूपमाह—

उग्गमदोसाइजढं, अहवा बीअं जहिं जहा पडिअं ।
इय एसो गहणविही, असुद्धपच्छायणे अविही ॥९००॥

उद्गमादिभिस्त्यक्तं यद्वस्तु—मण्डकादि, यथा पतितं तत्तथैव, न समारचयत्येषा ग्रहणविधिः । उद्गमादिदोषान्वितस्याऽशुद्धस्य ग्रहणमिदमविधिग्रहणं, अथवा गुडादेर्मण्डकादिना प्रच्छाद्य [2]यदेकत्र स्थापनं, तदविधिग्रहणम् ॥९००॥ अविधिभुक्तमाह—

काग-सियाल-क्खइयं, दविअरसं सव्वओ परामट्ठं ।
एसो उ भवे अविही, जहगहिअं भोयणंमि (भुंजओ य) विही ॥९०१॥

काकभुक्तं, शृगालभुक्तं, दवित[अ]रसं—द्रावितरसमित्यर्थः, सर्वतः परामृष्टं—उत्थल्लपत्थल्लणेण भुक्तं, इदम-

१ परिष्ठापनकं न कल्पते ।S। परिष्ठापनिकाकारेण ।k। २ ० कत्र देशे० ।k।

विधिभुक्तं, यथैव गृहीतं पात्रे तथैव भुक्ते इदं विधिभुक्तं ॥९०१॥ द्वारगाथेयम्, [3]आद्यावयवमाह—

उच्चिणइ व विट्ठाओ, कागो अहवावि विक्खिरइ सव्वं ।
विप्पेक्खइ य दिसाओ, सियालो अण्णोण्णहिं गिण्हे ॥९०२॥

यथा काक उच्चित्योच्चित्य विष्ठादेर्मध्याद्वल्लादि भक्षयति एवमसावपि, अथवा विकिरति सर्वं, काकवदेव कवलं मुखे प्रक्षिप्य दिशः प्रेक्षते, शृगाल इवान्यत्र २ प्रदेशे भक्षयति ॥९०२॥

सुरहीदोच्चंगट्ठा, छोढूण दवं तु पियइ दवियरसं ।
हेट्ठोवरि आमट्ठं, इय एसो भुंजणे अविही ॥९०३॥

सुरभियद् 'दोचगं' तीमनमोदनादिना यस्मिन् मिश्रीभूतं तत्र द्रवं प्रक्षिप्य यो निर्यासः संजातस्तत्पिबनं यत्तद् द्रवितरसमुच्यते, अधस्तादुपरि च यद् 'आमट्ठ" विपर्यासीकृतं [4]तदेतत्परामट्ठं, अयं भोजनेऽविधिः ॥९०३॥ को ग्रहणभोजनयोर्विधिरित्येतदाह—

जह गहिअं तह णीयं, गहणविही भोयणे विही इणमो ।
उक्कोसमणुक्कोसं, समकयरसं तु भुंजेज्जा ॥९०४॥

३ प्रथमावय० ।k। ४ 'परामट्ठं'त्ति भण्यते ।S।

विध्यविधि-भुक्तादि ।

यथैव गृहीतं–गृहस्थेन दत्तं तथैवाऽऽनीतमयं ग्रहणविधिः । भोजने पुनरयं विधिः । यदुत्कृष्टमनुत्कृष्टं द्रव्यं तत्समीकृतरसं भुञ्जीतेत्ययम् । प्रथमो भङ्गः शुद्धः ॥९०४॥

तइएवि अविहिगहिअं, विहिभुत्तं तं गुरूहिऽणुण्णायं ।
सेसा णाणुण्णाया, गहणे दत्ते य णिज्जुहणा ॥९०५॥

तृतीये भङ्गेऽविधिना गृहीतं विधिभुक्तं समीकृतरसं तच्च गुरुणाऽनुज्ञातं, शेषौ द्वौ भङ्गौ नाऽनुज्ञातौ, यस्तु अविधिभुक्तं काकशृगालादिरूपं भक्तं ददाति, यो गृह्णाति तयोर्निर्द्धारणं–निष्काशनं क्रि० । तथा विधिगृ० अविधिभुक्तं यो ददाति गृह्णाति वा तयोर्निष्काशनं क्रि० ॥९०५॥

अहवावि अकरणाए, उवट्ठियं जाणिऊण कल्लाणं ।
घट्टेउं दिंति गुरू, पसंगविणिवारणट्ठाए ॥९०६॥

अथवैतद्दोपाऽकरणतया–अनासेवनतयोपस्थितं दातारं[1] च ज्ञात्वा संगोपायनं क्रियते, कल्याणं च गुरुर्ददाति, घट्टयित्वा–तिरस्कृत्य, यदुत–त्वया पुनरेवं न कार्यं, प्रसङ्गस्य पुनरासेवनस्य निवारणार्थम् ॥९०६॥

१ दातारं गृहीतारं च ।k।

घासेसणा य एसा, कहिया भे ! धीरपुरिसपण्णत्ता ।
संजमतवड्ढगाणं, णिग्गंथाणं महरिसीणं ॥९०७॥
एयं घासेसणविहिं, जुंजंता चरणकरणमाउत्ता ।
साहू खवंति कम्मं, अणेगभवसंचियमणंतं ॥९०८॥
एत्तो परिट्ठवणविहिं, वोच्छामि धीरपुरिसपण्णत्तं ।
जं णाऊण सुविहिया, करेंति दुक्खक्खयं धीरा ॥९०९॥

स्पष्टा ॥९०७॥ स्पष्टा ॥९०८॥ स्पष्टा ॥९०९॥ उद्धरितद्वारमाह, अथवा स्वयमेव भाष्यकारः सम्बन्धं प्रतिपादयति–

भत्तट्ठिअ उव्वरिअं, अहव अभत्तट्ठियाण जं सेसं ।
संबंधेणाणेण उ, परिठावणिआ मुणेयव्वा ॥९१०॥

भक्तार्थिकानां अथवाऽभक्तार्थिकानां भुक्तानां परिष्ठापनिकभाक्तॄणां यदुद्धरति. तत्परिष्ठाप्यमिति कृत्वाऽनेन सम्बन्धेन पारिष्ठापनिका ज्ञेया ॥९१०॥

सा पुण जायमजाया, जाया मूलोत्तरेहि उ असुद्धा ।
लोभातिरेगगहिया, अभिओगकया विसकया वा ॥९११॥

[1]जाता–ग्रहणकाल एव प्राणातिपातादिभिरशुद्धा । यद्वा जाता-आधाकर्मादिदोषयुक्ता[2] । जातास्वरूपमाह– मूलगुणैः-प्राणातिपातादिभिरशुद्धा, उत्तरगुणैराधाकर्मादिभिरशुद्धा, लोभातिरेकतया गृहीता साप्यशुद्धा जातोच्यते, अभियोग[3]कृता विषकृताऽप्यशुद्धा ॥९११॥ इमां गाथां व्याख्यानयति–

मूलगुणेहिं असुद्धं; जं गहिअं भत्तपाण साहूहिं ।
एसा उ होइ जाता, वुच्छं सि विहीऍ वोसिरणं ॥९१२॥

वक्ष्ये 'अस्या'–जाताया विधिना व्युत्सृजनं परित्यागम् ॥९१२॥

एगंतमणावाए, अच्चित्ते थंडिले गुरुवइट्ठे ।
आलोए एगपुंजं, तिट्ठाणं सावणं कुज्जा ॥९१३॥

आलोके–समे भूभागे न गर्त्तादौ । यत्र प्राघूर्णकादयः सुखेन पश्यन्ति, त्रिः० श्रावणां करोति यदुत– व्युत्सृष्टम् ॥९१३॥

१ सा परिष्ठापनिका जाता ग्रहणकाल एव प्राणातिपातदोषेण जातोत्पन्ना, अजाताऽऽधाकर्मादिदोषेणाऽदूषिता तत्स्वरूपमाह ।k।
२ ० युक्ता, अजाता आधाकर्मादिदोषेणाऽदूषिता, तत्स्वरूपमाह० ।S। ३ अभियोगो वशीकरणचूर्णं मन्त्रश्च, साऽप्यशुद्धा इमा० ।k।

लोभातिरेगगहिअं, अहव असुद्धं तु उत्तरगुणेहिं ।
एसावि होति जाया, वोच्छं सि विहीऍ वोसिरणं ॥९१४॥

अथवोत्तरगुणैरशुद्धम्, इयमपि भिक्षा जातेत्युच्यते ॥९१४॥

एगंतमणावाए, अच्चित्ते थंडिले गुरुवइट्ठे ।
आलोए दुण्णि पुंजा, तिट्ठाणं सावणं कुज्जा ॥९१५॥

केवलमत्र द्वौ पुञ्जौ क्रियेते ॥९१५॥ 'अभियोग'त्ति आह—

दुविहो खलु अभिओगो, दव्वे भावे य होइ णायव्वो ।
दव्वंमि होइ जोगो, विज्जा मंता य भावंमि ॥९१६॥

योगश्चूर्णस्तन्मिश्रः पिण्डः । भावाभियोगश्च विद्याभिमन्त्रितपिण्डः । स च परिष्ठाप्यः ॥९१६॥

विज्जाए होअगारी, अचियत्ता सा य पुच्छए चरिअं ।
अभिमंतणोदणस्स उ, अणुकंपणमुज्झणं च खरे ॥९१७॥

विद्याभिमन्त्रितपिण्डे भावाभियोगेऽगारीदृष्टान्तः—सा भर्त्तुर्न रोचते । चरिकां प्रव्राजिकां पृच्छति पत्युर्वशीकरणार्थं तयौदनमभिमन्त्र्य दत्तं, पत्युर्मरणानुकम्पया न दत्तम्, उत्कुरुटिकायामुज्झनं कृतं स च खरेण भक्षितः ॥९१७॥

बारस्स पिट्टणंमि अ, पुच्छण कहणं च होअगारीए ।
सिट्ठे चरियादंडो, एवं दोसा इहंपि सिया ॥९१८॥

[1]स गर्दभ आगत्य[द्वार] पिट्टयति मन्त्रवशीकृतः सन् , भर्त्रा पृष्टया तया स्वभावे कथिते चरिकाया दण्डः कृतः । यदि तिरश्चामप्येवमवस्था स्यात्तदा नृणां विशेषतः, अत ईदृशः पिण्डो न ग्राह्यः ॥९१८॥ द्रव्याभियोगे चूर्णवशीकरणपिण्डे अविरतादृष्टान्तः—

जोगंमि उ अविरइया, अज्झुववण्णा सरूवभिक्खुंमि ।
कइजोगमणिच्छंतस्स, देइ भिक्खं असुभभावे ॥९१९॥

'अज्झोववण्णा'—अनुरक्ता सुरूपे भिक्षौ अनिच्छतस्तत्कर्म कर्तुं कृतयोगो भिक्षापिण्डो दत्तः, पुनस्तस्य तद्ग्रहणानन्तरमेवाशुभभावो जातः—तदभिमुखं चित्तम् ॥९१९॥

संकाए स णियट्टो, दाऊण गुरुस्स काइयं णिसिरे ।
तेसिंपि असुभभावो, पच्छा(प्र.पुच्छा) उ ममापि उज्झयणा ॥९२०॥

1 स च गर्द० ।k।

योगकृतभिक्षाशङ्कया निवृत्य गोचराद् गुरोः पतद्ग्रहं समर्प्य कायिकाभूमिं याति, गुरोरशुभभावः । ततः साधुरागत्याऽऽलोचते, गुरुरप्याह—ममाप्यस्ति भावः, ततो विधिनोज्झनं क्रियते ॥९२०॥

एमेव विसकयंमि वि, दाऊण गुरुस्स काइयं णिसिरे ।
गंधाइ विण्णाए, उज्झण अविही सियालवहे ॥९२१॥

नवरं ग्रहणानन्तरमेव तस्य शिरोवेदना, गुरुणा गन्धादिना ज्ञाते, आदिशब्दाद्भक्तस्य [1]उत्फंसणेण वा, विधिनोज्झनं क्रियते, अविधित्यागे शृगालादिवधः ॥९२१॥

एवं विज्जाजोए, विससंजुत्तस्स वावि गहियस्स ।
पाणच्चएवि णियमुज्झणा(प्र.ज्झिअव्व) उ वोच्छं परिट्ठवणं ॥९२२॥

एवं विद्यायोगविषयुक्तस्य प्राणात्ययेऽप्यत्यर्थं क्षुत्पीडायामप्यवश्यमुज्झनं करोति । तस्य च परिष्ठापनविधिस्यम् ॥९२२॥

एगंतमणावाए, अच्चित्ते थंडिले गुरुवइट्ठे ।
छारेण अक्कमित्ता, तिट्ठाणं सावणं कुज्जा ॥९२३॥

[1] उप्फिसणेण वा ।k।

[1]भूत्याऽऽक्रम्य—मिश्रीकृत्य ॥९२३॥ 'तिट्ठाणं सावणं'ति व्याख्यायते—

दोसेण जेण दुट्ठं तु, भोयणं तस्स सावणं कुज्जा ।
एवंविहवोसट्ठे, वेराओ मुच्चई साहू ॥९२४॥

दोषेण येन मूलकर्मादिना वा दुष्टं तस्य [2]त्रिः श्रावणं कर्त्तव्यं, यदुत मूलकर्मादिदोषैर्दुष्टमिति । एवमुत्तरगुणयोग—मन्त्र—विषकृतदुष्टानामपि त्रिः श्रावणं कर्त्तव्यम् । एवं व्युत्सृष्टे वैरात्—कर्मणो मुच्यते । अथवा वैरात्—जन्तुवधजनितान्मुच्यते साधुः ॥९२४॥ आह—इदमुक्तं शुद्धाया भिक्षाया यत्परिष्ठापनं, सा अजाता परिष्ठापनिकेत्युच्यते—

जावइयं उवउज्जइ, तत्तिअमित्ते विगिंचणा णत्थि ।
तम्हा पमाणगहणं, अइरेगं होज्ज उ इमेहिं ॥९२५॥

यावन्मात्रमेवोपयुज्यते तावन्मात्रे गृहीते परिष्ठापना नास्ति, सूरिराह—अतिरिक्तमेभिः कारणैर्भवति ॥९२५॥

आयरिए य गिलाणे, पाहुणए दुल्लभे सहसदाणे ।
एवं होइ अजाया, इमा उ गहणे विही होइ ॥९२६॥

कस्मिँश्चित् क्षेत्रे आचार्यप्रायोग्यं दुर्लभं भवति, ततः सर्वे सङ्घाटका गृह्णन्ति, एवं वर्द्धते । एवं ग्लाना-

१ भोजने 'छारेण' भूत्या० ।k। २ तिस्रो वाराः श्रा० ।k।

दीनामपि, दुर्लभलाभे सर्वैर्गृहीते उद्धरति, तथा सहसदाणे—अप्रतर्कितदाने सति प्रचुरमुद्धरति । ततोऽजाता परिष्ठापनिका भवति । तत्राचार्यादीनां ग्रहणेऽयं विधिः ॥९२६॥

जइ तरुणो णिरुवहओ, भुंजइ तो मंडलीइ आयरिओ ।
असहुस्स वीसुगहणं, एमेव य होइ पाहुणए ॥९२७॥

केचनैवं भणन्ति । यद्यसावाचार्यस्तरुणो निरुपहतपञ्चेन्द्रियश्च ततोऽसौ मण्डल्यामेव भुङ्क्ते, अथाऽसमर्थस्तस्य ततः पृथग् ग्रहणं प्रायोग्यस्य कर्त्तव्यं, एवमेव प्राघूर्णकेऽपि विधिः, यदि प्राघूर्णकः समर्थस्ततो [1]नैव तत्प्रायोग्यग्रहणं क्रियते । अथाऽसमर्थस्ततः पृथग् ग्रहणं क्रियते ॥९२७॥ केचिदेवं भणन्ति यदुत—[2]समर्थस्याऽपि प्रायोग्यं ग्रहणं कार्यं, यत एते गुणा भवन्ति—

सुत्तत्थथिरीकरणं, विणओ गुरुपूय सेह(प्र.स)बहुमाणो ।
दाणवति-सद्धवुड्ढी, बुद्धिबलवद्धणं चेव ॥९२८॥

मनोज्ञाऽऽहारेण सूत्रार्थयोः स्थिरीकरणं कृतं भवति, [3]विनयश्च कृतो भवति, गुरुपूजा च कृता भवति सेहस्य च गुरुं प्रति बहुमानं दर्शितं भवति, प्रायोग्यदानपतेः श्रद्धावृद्धिः कृता भवति, गुरोर्बुद्धेर्बलस्य च वर्द्धनं कृतं [4]भवति ॥९२८॥

१ नैतत्० ।k। २ ० स्यापि आचार्यस्य प्रा० ।k। ३ विनयश्चानेन प्रकारेण प्रदर्शितो भवति ।k।
४ ० भवति, तत्र महती निर्जरा ॥९२८॥ ।k।

एएहिं कारणेहि उ, केइ सहुस्सवि वयंति अणुकंपा ।
गुरुअणुकंपाए पुण, गच्छे तित्थे य अणुकंपा ॥९२९॥

एभिः कारणैः समर्थस्याप्यनुकम्पा कार्येति केचिद्वदन्ति ॥९२९॥

सति लाभे पुण दव्वे, खेत्ते काले य भावओ चेव ।
गहणं तिसु उक्कोसं, भावे जं जस्स अणुकंपं(प्र.कुलं) ॥९३०॥

विद्यमाने लाभे द्रव्यक्षेत्रकालभावेभ्य उत्कृष्टं ग्राह्यम् । त्रिषु द्रव्यादिषूत्कृष्टं कार्यं, भावे यद्वस्तु यस्यानुकूलं भवति ॥९३०॥ इमां गाथां व्याख्यानयति—

कलमोतणो उ पयसा, उक्कोसो हाणि कोद्दवुब्भज्जी ।
तत्थ वि मिउ-तुप्पतरयं, जत्थ व जं अच्चियं दोसु ॥९३१॥

कलमशाल्योदनं पयसा सह द्रव्यत उत्कृष्टं ग्राह्यं, तदलाभे हान्या तावद्यावत्कुद्रवजाउलयं मृदु गृ०, 'तुप्प'० अतिस्निग्धतरं तदेव जाउलयं गृ०, द्वयोः क्षेत्रकालयोर्यद्वस्तु यत्र पूजितं तत्तत्र गृह्यते, भावोत्कृष्टं पुनर्निर्युक्तिकारेणैव व्याख्यातम् ॥९३१॥ यदुक्तमाचार्यादीनां गृहीतं सद्यथाद्धरति तथाह—

लाभे सति संघाडो, गेण्हइ एगा उ इहरहा सव्वे ।
तस्सप्पणो य पज्जत्त–गेण्हणा होइ आतरेगं ॥९३२॥

सति लाभे घृतादीनामेक एव संघाटको गुरुयोग्यं गृ०, अन्यथा सर्वे गृह्णन्ति, ततो गुर्वात्मनोः पर्याप्त्या ग्रहणेऽतिरिक्तं भवति, ततस्तत्परिष्ठाप्यते ॥९३२॥ [1]गिलाणत्ति [द्वारमाह]

गेलण्णणियमगहणं, णाणत्तोभासियंपि तत्थ भवे ।
ओभासियमुव्वरिअं, विगिंचए सेसगं भुंजे ॥९३३॥

ग्लानस्य नियमेन प्रायोग्यं ग्राह्यं, यदि परं नानात्वं, 'उ'० प्रार्थितमपि ग्लाने भवति, ततश्च ओभासितं— प्रार्थितं सद् ग्लानार्थं यदुद्वृत्तं तत्त्याज्यं, शेषमुद्धृतं भुञ्जीत, प्राघूर्णक आचार्यवद्व्याख्यात एव द्रष्टव्यः ॥९३३॥ 'दुल्लभ'त्ति—

दुल्लभदव्वं व सिआ, घयाइ घेत्तूण सेस भुंजंति (पा. सेसमुज्झंत्ति) ।
थोवं देमि व गेण्हामि, यत्ति सहसा भवे भरियं ॥९३४॥

१ 'गिलाण'त्ति ०२६ तमा गाथा द्रष्टव्या ।सं०।

दुर्लभं द्रव्यं वा स्यात्–घृतादि, तद् गृहीत्वा–परिभुज्य च शेषमुद्धृतं त्यजन्ति । 'सहसदाण'त्ति आह–स्तोकं दास्यामि–लास्यामि वेति गृहिसाध्वोश्चिन्तयतोरतर्कितमेव साधुभाजनं भृतं भवति॥९३४॥

एएहिं कारणेहिं, गहियमजाया उ सा विगिंचणया ।
आलोगंमि(प्र.आलोईय)तिपुंजी, (प्र.तिण्णि पुंजा)अद्धाणे णिग्गयातीणं ॥९३५॥

एभिः कारणैर्यद् गृहीतं भक्तं–साऽजाता विगिञ्चना [परिष्ठापना], तस्याश्चाजातायाः साध्वालोके त्रयः पुञ्जाः क्रियन्ते, [1]अध्वाने निर्गतास्तदर्थं, कदाचित्ते गृह्णन्ति ॥९३५॥

एक्को व दो व तिण्णि व, पुंजा कीरंति किं पुण णिमित्तं ? ।
विहमाइणिग्गयाणं, सुद्धेयरजाणणट्ठाए ॥९३६॥

एको द्वौ त्रयो वा पुञ्जाः क्रियन्ते, किमर्थम् ?–उच्यते[2] । विहः पन्थाः तदर्थं निर्गतानां शुद्धेतरभक्तपरिज्ञानार्थम्, आदिशब्दाद्वास्तव्यानाञ्च ॥९३६॥

परिष्ठापननिर्गसञ्ज्ञोत्सर्जन–बुद्धौ मार्गदर्शनम् ।

१ अध्वाने निर्गतास्तदर्थं, कदाचित्त एव कारणे उत्पन्ने गृह्णन्ति ॥९३५॥ ।k। २ ० उच्यते, वहत्रः पन्थानस्तदर्थं निर्गताना ।S। उच्यते वहिः पन्थास्तदर्थं निर्गताना साधूनां शुद्धेतरभक्तपरिज्ञानार्थं त्रयः पुञ्जाः क्रियन्ते, आदिग्रहणात्तद्वास्तव्यानामेव कदाचिदुपयुज्यते ॥९३६॥ ।k।

परिष्ठापने सञ्ज्ञोत्सर्जन बुद्धौ मार्गदर्शनम् ।

एगं विगिंचिउं णिग्गयस्स, सण्णा हवेज्ज तं तु कहं ? ।
णिसिरेज्जा अहव धुवं, आहारा होइ णीहारो ॥९३७॥

एवं परिष्ठापनार्थं निर्गतस्य यदि सञ्ज्ञोत्सर्जने बुद्धिर्भवति, किं तदा कार्यम् ?, इत्याह 'नि'० उत्सृजेत्; अथवा किं प्रष्टव्यं ?,—ध्रुवमाहारान्नीहारो भवति, ॥९३७॥ ततः स्थण्डिले व्युत्सृज्यते, तच्च पूर्वमेव भणितमित्याह—

थंडिल्ल पुव्वभणियं, पढमं णिद्दोस दोसु जयणाए ।
णवरं पुण णाणत्तं, भावासण्णाए(प्र.सण्णेअ) वोसिरणं ॥९३८॥

नवरमिदं नानात्वं, यदुत—'भावासण्णो'त्ति पीडायां व्युत्सृजनमनुज्ञातम्। तत्रानुज्ञा नैव कृताऽऽसीद्, इह च कृता, अतो नानात्वं, ततश्चतुर्थभङ्गाऽऽसेवनमप्यनुज्ञातमेव ॥९३८॥ अधुना पूर्वोक्तस्थण्डिलानि भाष्यकार आह—

अणावायमसंलोयं, अणावायालोय ततिय विवरीयं ।
आवातं संलोगं, पुव्वुत्ता थंडिला चउरो ॥९३९॥

अनापातमसंलोकः प्रथमो भङ्गः शुद्धः, [१]एतानि पूर्वोक्तस्थण्डिलानि चत्वारि ॥९३९॥

१ अनापातं सम्लोकं (२) सापातमसंलोकं (३) सापात सम्लोकं (४) इमे शेषभङ्गाः ।स०।

अणावायमसंलोगं, णिद्दोसं बितियचरिम जयणाए ।
पउरदवकुरुकुयादी, पत्तेयं मत्तगा चेव ॥९४०॥

द्वितीयतृतीयचरमेषु भङ्गेषु यतनयोत्सर्जनं कार्यम् । यतनेयम्—कुरुकुचादि कार्यं, प्रत्येकं मात्रकाणि सपानकानि भवन्ति ॥९४०॥

तइएवि य जयणाए, णाणत्तं णवरि सद्दकरणंमि ।
भावासण्णाए पुण, णाणत्तमिणं सुणसु वोच्छं ॥९४१॥

तृतीये स्थण्डिले यतनाया नानात्वं, यदुत—शब्दं कुर्वाणैर्गम्यं, भावासन्ने पुनर्यतनया यन्नानात्वं तत् शृणुत, वक्ष्ये ॥९४१॥

जदि पढमं ण तरेज्जा, तो बितियं तस्स असइए तइयं ।
तस्स असई चउत्थे, गामे दारे य रत्थाए ॥९४२॥

यदि प्रथमं स्थण्डिलं गन्तुं न शक्नुयात्ततो द्वितीयं, तदभावे तृतीयं, [1]तदभावे चतुर्थं व्रजति । तुर्याभावे ग्रामद्वारे व्युत्सृजति, तदशक्तौ रथ्यायां व्युत्सृजति ॥९४२॥

१ ० तदभावे तुर्यं स्थण्डिलं व्रजेद्यदा चतुर्थमपि गन्तुं न शक्नोतीति तदा ग्राम० ।k।

साही पुरोहडे वा, उवस्सए मत्तगंमि वा णिसिरे ।
अच्चुक्कडंमि वेगे, मंडलिपासंमि वोसिरइ ॥९४३॥

स्थगागमनाशक्तौ 'साही'त्ति-[१]... व्यु०, 'पुरो'० अग्रद्वारे व्यु०, उपाश्रये मात्रके वा व्यु० अत्युत्कटवेगे [मंडलिपासंमि वोसिरइ] ॥९४३॥ अत्र कथानकम्—

राया विज्जंमि मए, विज्जसुयं भणइ किंच ते अहियं ? ।
अहियंति वायकम्मे, विज्जे हसणा य परिकहणा ॥९४४॥

केनापि राज्ञाऽभीष्टे वैद्ये मृते-तत्पुत्रप्रश्नेऽधीतसकलवैद्यकपुत्रीत्युक्ते, साऽऽकारिता, पृष्टा ? किं त्वया वैद्य[क]मधीतं न वा ?, साऽऽह-अधीतमिति, अत्रान्तरे वातकर्म तया कृतं । वैद्या हसन्ति, सा वैद्यानां राज्ञश्च कथयति यथा-॥९४४॥

तिण्णि सल्ला महाराय ?, आसस देहे पइट्ठिया ।
वायमुत्तपुरीसाणं, पत्तवेगं ण धारए ॥९४५॥



१ खडक्किकाया 'खडकी' इति भाषाया गत्वा व्युत्सृजतीति भाव. ।सं०।

एसा परिट्ठवणविही, कहिया भे धीरपुरिसपण्णत्ता ।
सामायारी एत्तो, वुच्छं अप्पक्खरमहत्थं(प्र.सेसं जहा विहिणा) ॥९४६॥ दारं ।

स्पष्टा ॥९४५॥ अधुना सामाचारी व्याख्यायते ॥९४६॥

सण्णातो आगतो चरम-पोरिसिं जाणिऊण ओगाढं ।
पडिलेहणमप्पत्तं, णाऊण करेइ सज्झायं ॥९४७॥

[1]सञ्ज्ञामुत्सृज्यागतः । चरमपौरुषीं—चतुर्थप्रहरं ज्ञात्वा अवगाढम्—अवतीर्णं प्रत्युपेक्षणां करोति, अप्राप्तां पौरुषीं ज्ञात्वा स्वाध्यायं करोति ॥९४७॥

पुव्वुद्दिट्ठो य विही, इहंपि पडिलेहणाइ सो चेव ।
जं एत्थं णाणत्तं, तमहं वुच्छं समासेणं ॥९४८॥

[2]यदत्र नानात्वं तदहं वक्ष्ये ॥९४८॥

पडिलेहगा उ दुविहा, भत्तट्ठिय-एयरा य णायव्वा ।
दोण्ह वि य आइपडिलेहणा उ मुहणंतग-सकायं ॥९४९॥

१ साधुः सञ्ज्ञा० ।k। २ पूर्वोद्दिष्टो मुखवस्त्रिकादिकः यदत्र० ।k।

प्रत्युपेक्षका द्विधा—भक्तार्थिकाः इतरे—उपोषिताः । द्वयोरादौ मुखवस्त्रिका प्रत्युपेक्ष्या, ततः स्वकायं निजदेहं प्रत्युपेक्षन्ते मुखवस्त्रिकया ॥९४९॥ अभक्तार्थिनां प्रतिलेखनायां विधिमाह—

अभक्तार्थिनां प्रतिलेखना—विधिः ।

तत्तो गुरू परिण्णा, गिलाणसेहाति जे अभत्तट्ठी ।
संदिसह पायमत्ते य, अप्पणो पट्टगं चरिमं ॥९५०॥

मुखवस्त्रिकाप्रत्युपेक्षणाऽनन्तरं गुरोरुपधिं प्रत्युपेक्षयन्ति । 'परिण्ण'त्ति—अनशनिनः, तदनन्तरं ग्लानस्य तथा शिष्यकस्याऽभिनवप्रव्रजितस्योपधिं प्रत्युपे०, शिक्षणार्थं तस्यैवाऽग्रतः, आदिशब्दाद् वृद्धादीनां, ततो गुरुं संदिशापयित्वा, 'संदिसह इच्छाकारेण उपधिं प्रतिलेखयामि' एवं भणित्वा पात्रं—पतद्ग्रहं प्रत्यु० मात्रकं चात्मीयं, सकलमुपधिं प्रत्युपेक्षते, यावच्चरमश्चोलपट्टस्तमपि प्रत्युपेक्षन्ते ॥९५०॥ भुक्तानां विधिमाह—

भुक्तानां प्रतिलेखना—विधिः ।

पट्टग मत्तय सयमोग्गहो य, गुरुमाइया अणुण्णवणा ।
तो सेस पायवत्थे, पाउंछणगं च भत्तट्ठी ॥९५१॥

मुखवस्त्रिकाप्रतिलेखनानन्तरं चोलपट्टकं प्रत्यु०, ततो गुच्छकः—यः पात्रकस्योपरि दीयते, पश्चात्प्रतिलेखनिकां पात्राबन्धं—पटलानि—रजस्त्राणं पात्रकं च, यदि मात्रकमरिक्तं तत एवं, अथ रिक्तं—तदा तदेव प्रत्युपेक्ष्य स्व-

॥३७१॥

क्रीयमन्त्रग्रहं पतद्ग्रहं प्रत्युपेक्षन्ते, ततो गुरुप्रभृतीनां सत्का उपधयः । ततो गुरुमनुज्ञाप्य शेषाणि गच्छसाधारणानि पात्राणि वस्त्राणि चाऽपरिभोगानि यानि तानि प्रत्युपेक्षन्ते, ततः पाय० रजोहरणं च प्रत्युपेक्षन्ते भक्तार्थिनः ॥९५१॥

जस्स जहा पडिलेहा, होइ कया सो तहा पढइ साहू ।
परियट्टेइ व पयओ, करेइ वा अण्णवावारं ॥९५२॥

यस्य यथा प्रतिलेखना कृता संपूर्णा भवति स तथैव पठति । परावर्त्तयति गुणयति वा प्रयत्नतः, अन्येनाभ्यर्थितः किञ्चिद्व्यापारं करोति वा ॥९५२॥

चउभागवसेसाए, चरिमाए पडिक्कमित्तु कालस्स ।
उच्चारे पासवणे, ठाणे चउवीसइं पेहे ॥९५३॥
अहियासिया उ अंतो, आसण्णे मज्झि तह य दूरे य ।
तिण्णेव अणहियासी, अंतो छच्छच्च बाहिरओ ॥९५४॥
एमेव य पासवणे, बारस चउवीसइं तु पेहित्ता ।
कालस्सवि तिण्णि भवे, अह सूरो अत्थमुवयाई ॥९५५॥

चतुर्भागावशेषायां चरमपौरुष्यां प्रतिक्रम्य कालम् उच्चारादीनां स्थण्डिलानि [1]प्रत्युपेक्षन्ते ॥९५३॥

अधिकासिका भूमयः—याः [2]सञ्ज्ञावेगेन पीडितः सुखेनैव गन्तुं शक्नोति, तास्तिस्रः, 'अन्तः'—मध्येऽङ्गणस्य प्रत्युपेक्ष्याः । एका वसतेरासन्ना, अन्या मध्ये, अन्या अतिदूरे एवमेतास्तिस्रः [3] तथाऽन्यास्तिस्र एव तस्मिन्नेवाङ्गणे आसन्नतरा भवन्त्य[4]नधिकासिकाः, एवमेता अन्तर्मध्याऽङ्गणस्य षट्, अङ्गणस्य बहिस्तात् षट् ॥९५४॥

एवमेव प्रस्रवणे द्वादश भूमयः [5]प्रत्युपेक्षन्ते, एवमेताः सर्वा एव चतुर्विंशतिः तां प्रत्युपेक्ष्य,कालस्यापि तिस्रः प्रत्युपेक्षणीया भ०, अथ सूर्यो यथास्तमुपयाति ॥९५५॥

जइ पुण णिव्वाघाओ, आवासं तो करेंति सव्वेवि ।
सड्ढाइकहणवाघाय—ताए (प्र.ओ.य.) पच्छा गुरू ठंति ॥९५६॥

---

१ उच्चारार्थं प्रस्रवणार्थं च चतुर्विंशतिस्थानानि प्रत्युपेक्षन्ते इति भावः । इदं च प्रत्युपेक्षण मुहूर्त्तद्वयावशिष्टे दिवसे भवतीति ।स०।

२ ० वेगेनाऽऽपीडितः ।S।k।

३ तिस्रः स्थण्डिलभूमयः स्युः० ।k। ४ ० कासिकाः सञ्ज्ञावेगोत्पीडितः यासु याति ता अपि तिस्र एका वसतेरासन्नतरं प्रदेशेऽन्या [मध्येऽन्या]दूरे एवमेता अन्तः—मध्येङ्गणस्य षट् षट् च बाह्यत, अङ्गणस्य वहिः षडेवमेव च स्युः ।k। ॥९५४॥

५ ० पेक्षन्ते षडङ्गणमध्ये, षड वाङ्गणवाह्ये एवमेताः सर्वा एव चतुर्विंशतिः—प्रत्युपेक्ष्याः स्युः । ताश्च कालभूमयो जघन्येन हस्तान्तरिताः प्रत्युपेक्ष्यन्ते, एवमनेन क्रमेण यथा सूर्योऽस्तमुपयाति तथा कर्तव्यम् ॥९५५॥ ।k।

श्राद्धादिकथनव्याघाते गुरुः [१]पश्चाद् आवश्यके तिष्ठति ॥९५६॥

सेसा उ जहासत्तो, आपुच्छित्ताण ठंति सट्ठाणे ।
सुत्तत्थझरणहेउं, आयरिऍ ठियंमि देवसियं ॥९५७॥

शेषा आपृच्छ्य गुरुं, स्वस्थाने तिष्ठन्ति.[२] सूत्रार्थक्षरणहेतोः[३]। आचार्ये स्वस्थाने स्थिते दैवसिकं प्रतिक्रामति ॥९५७॥

जो होज्ज उ असमत्थो, बालो वुड्ढो गिलाणपरितंतो ।
सो आवस्सगजुत्तो, अच्छेज्जा णिज्जरापेही ॥९५८॥

[४]योऽनागतोत्सर्गेऽसमर्थो भ० । स उपविष्टः कायोत्सर्गं करोति ॥९५८॥

आवासगं तु काउं, जिणोवदिट्ठं गुरूवएसेणं ।
तिण्णिथुई पडिलेहा, कालस्स विही इमो तत्थ ॥९५९॥

---

१ ० एवं सूर्यास्तसमयानन्तरं यदि निर्व्याघातो गुरुः क्षणिक आस्ते ततः सर्व एवाऽऽवश्यकं-प्रतिक्रमण कुर्वन्ति, अथ श्राद्धधर्मकथादिना व्याघातो गुरोर्जातः--अक्षणिकत्वं, ततः [पश्चाद्] गुरुरावश्यकभूमौ सन्तिष्ठते ॥९५६॥ ।k।, k संज्ञकप्रतौ गाथेयमनया रीत्या विवृताऽिति ।सं०।

२ ० स्वस्थाने स्वस्थाने यथारत्नाधिकतयाऽऽवश्यकोर्व्यां तिष्ठन्ति सूत्रार्थक्षरणहेतोः=सूत्रार्थगुणननिमित्तं कायोत्सर्गेण तिष्ठन्ति. केचन भणन्ति साधवः सामायिकसूत्रं पठित्वा कायोत्सर्गेण तिष्ठन्ति. कायोत्सर्गस्था ग्रन्थार्थान् चिन्तयन्ति यावद् गुरुरागतः [ततो गुरुः] सामायिकसूत्रमाकृष्य दैवसिकानतिचारान् चिन्तयति साधवोऽपि गुरौ तथास्थिते दैवसिकं० ।k।

३ ० र्थस्मरणहेतोः ।k।ऽ।     ४ यो ह्यनागतोत्सर्गेऽसमर्थो भवति ।k।

स्तुतित्रयं मङ्गलार्थं पठित्वा कालस्य प्रत्युप्रेक्षणार्थं निर्गच्छन्ति ॥९५९॥ तत्र कालवेलानिरूपणेऽयं विधिः—

दुविहो य होइ कालो, वाघातिम एयरो य णायव्वो ।
वाघाओ घंघसालाएँ, घट्टणं सड्ढकहणं वा ॥९६०॥

द्विधा कालो व्याघातेतरभेदात्, व्याघातः—घङ्घशालायामनाथमण्डपेऽन्योन्यं[1] घट्टना वैदेशिकैः स्तम्भैर्वा भवति, श्राद्धधर्मकथया व्याघातो भवति ॥९६०॥

वाघाते तइया सिं, दिज्जइ तस्सेव ते णिवेयंति ।
णिव्वाघाते दुण्णिउ, पुच्छंती काल घेच्छामो ॥९६१॥

एवं घङ्घशालायां व्याघाते तृतीय उपाध्यायो दीयते, निर्व्याघाते द्वौ दण्डभृत्कालग्राहिणौ निर्यातः, पुनश्च तौ पृच्छतः कालं गृह्णीवः? ॥९६१॥ एतैर्व्याघातैर्हन्यते कालः—

---

१ घङ्घशालाया मण्डपे दीर्घे घट्टना परस्परेण वैदेशिकैर्वा स्तम्भैर्वा सह निर्गच्छतः प्रविशतो वा तादृशो व्याघातकालस्तथा श्राद्धकादीना यत्राचार्यो धर्मकथा करोति, सोऽपि व्याघातकालः, न तत्र कालग्रहणं भवति ॥९६०॥ ।k।

आपुच्छण किइकम्मं, आवस्सियखलियपडियवाघाओ ।
इंदिय दिसा य तारा, वासमसज्झाइयं चेव ॥९६२॥

आपृच्छ्य गच्छन्ति दण्डिकां गृहीत्वा 'मत्थएण वंदामि कालवेलं निरूवेमो' इत्यभणने व्याघातो भवति, वन्दनाऽकरणे व्याघातोऽविनयेन वा वन्दनं कुर्वन्ति । आवश्यक्यकरणे व्याघातः, स्खलनं स्तम्भाद। पतनं वा । [1]इन्द्रियार्थाऽननुकूले व्या०, दिग्मोहः०, तारिकाः पतन्ति, वर्षणं वा भ०, एभिर्व्याघातैः कालो न ग्राह्यः । अस्वाध्यायकं चेत्स्यात् ॥९६२॥

जइ पुण वच्चंताणं, छीयं जोइं च तो णियत्तंति ।
णिव्वाघाते दोण्णि उ, अच्छंति दिसा णिरिक्खंता ॥९६३॥

व्रजतां क्षुतं ज्योतिर्वा-अग्निः उद्योतो वा भ०, ततो निवर्त्तन्ते, निर्व्याघाते द्वावेव दिशं क्षणमात्रं निरूपयतः ॥९६३॥

एभिश्च कालभूमौ गतानामुपघातो भवति —

गोणादि कालभूमीएँ, होज्ज संसप्पगा व उट्ठेज्जा ।
कविहसिय वास विज्जुक्क-गज्जिए वावि उवघातो ॥९६४॥

१ ० इन्द्रियाणां यदि विषया अननुकूलाः स्युः ।k।

कालमण्डले गौरुपविष्टो भ०, कदाचित्कालभूमौ संसर्पगाः–पिपीलिकादय उत्तिष्ठेरन् ॥९६४॥

सज्झायमचिंतंता, कणगं दट्ठूण तो (प्र. पडि)णियत्तंति ।
वेलाए दण्डधारी, मा बोलं गंडए उवमा ॥९६५॥

स्वाध्यायमकुर्वाणा एकाग्राः कालवेलां निरूपयन्ति । वेलायां प्रविश्य गुरुसमीपे दण्डधारी वक्ति, मा बोलं कुरुत,॰ यथोद्दिष्टो दण्डकः कस्मिंश्चित्कारणे आपन्ने उत्कुरुटिकामारुह्य भणति 'ग्रामे, इदं प्रातः कार्यम्,' एवं दण्डधार्यपि भणति, यदुत–कालग्रहणवेला वर्त्तते, ततश्च भवद्भिर्गर्जितादिषूपयुज्यम् ॥९६५॥

आघोसिए बहूहिं, सुयंमि सेसेसु णिवडइ दंडो ।
अह तं बहूहिं ण सुयं, दंडिज्जइ गंडओ ताहे ॥९६६॥

स्पष्टा[२] ॥९६६॥

॰ कुरुत, अल्पशब्दैरवहितैश्च भवितव्यम्, अत्र च दण्डकदृष्टान्तो, यथा हि दण्डकः ।k।

२ kसंज्ञकप्रताविमं गाथाऽनया रीत्या व्याख्याता ।सं०।—एवमाघोषिते बहुभिः श्रुते स्तोकैर्न श्रुत ततस्तेषामुपरि दण्डो निपतति–सूत्रार्थकरणंरनानुज्ञायते, अथ बहुभिर्न श्रुतं [स्तोकैः श्रुतं] ततः दण्डधारिण एव दण्डः स्वाध्यायनिरोधः क्रियते, यथा दण्डका घोषामस्तोकैरश्रुते स्तोकाना दण्डः ॥९६६॥ ।k।

कालो सञ्झा य तहा, दोवि समप्पंति जह समं चेव ।
तह तं तुलंति कालं, चरिमदिसं वा असञ्झागं ॥९६७॥

तौ च प्रत्युपेक्षकौ कालः सन्ध्या च द्वे अपि समकमेव समाप्तिं व्रजतस्तथा कालं तुलयतः । चरिमा–पश्चिमा दिक् असन्ध्या–विगतसन्ध्या भ०, यथा कालश्च समाप्यते तथा गृह्णन्ति ॥९६७॥ एवंविधेन कालो ग्राह्यः—

पियधम्मो दढधम्मो, संविग्गो चेवऽवज्जभीरू य ।
खेयण्णो य अभीरू, कालं पडिलेहए साहू ॥९६८॥

[1]खेदज्ञः – गीतार्थः ॥९६८॥ दण्डधारिणि घोषयित्वा निर्गते द्वितीयः कालग्राही कालसंदेशनार्थं गुरोः समीपं याति।। कथम्—

आयुत्तपुव्वभणिए, अणपुच्छा खलियपडियवाघाते ।
घोसंतमूढसंकिय,–इंदियविसएवि अमणुण्णे ॥९६९॥

१ प्रिय इष्टो— X X X X यस्य स मोक्षाभिलाषी, 'अ'० पापभीरु· खेदज्ञो–गीतार्थः अभीरुः'–सत्त्वसंपन्न· ।k।

उपयुक्तः सन् प्रविशति, पूर्वभणितमेतत्—यतो निर्गच्छतो यो विधिः, प्रविशतोऽपि स एव विधिः । अनापृच्छ्य गृहीतस्य व्याघातः, तथा स्खलितस्य—व्याघा०, गुरुवन्दनकाले केनचित्सह जल्पतो व्या०, [1]मूढो यदि भ०, आवर्तान् विपर्यासेन क०, शङ्का किम्?—आवर्त्ता दत्ता न वेति ॥९६९॥ प्रविष्टश्चासौ किं करोतीत्याह ।—

णिसीहिया णमोकारे, काउस्सग्गे य पंचमंगलए ।
पुव्वाउत्ता सव्वे, पट्ठवणचउक्कणाणत्तं ॥९७०॥

प्रविशन्निषीधिकां करोति, नमस्कारं च क० 'णमो खमासमणाणं,' प्राप्तश्चेर्यापथिकी(का)प्रत्ययमष्टोत्स्वा(च्छ्वा)सोत्सर्गं क०, नमस्कारं च चिन्तयति पञ्चमङ्गलकमित्यर्थः । पुनश्च संदिशापयित्वा कालग्रहणार्थं निर्गच्छति, आवश्यक्यादयस्तथैव, 'पुं॰ पूर्वमेव दण्डधारिघोषणानतरं सर्वे गर्जितादौ उपयुक्ता भवन्ति, गृहीते काले स्वाध्यायं प्रस्थापयन्ति, 'चउ'० कालचतुष्कस्य [यथा] नानात्वं भवति, तथा वक्ष्यामः ॥९७०॥ कालं गृह्णतोऽयं विधिः ।—

थोवावसेसियाए, सज्झाए ठाइ उत्तराहुत्तो ।
चउवीसगदुमपुप्फिय—पुव्वग एक्केक्कयदिसाए ॥९७१॥



[1] मूढो दिश्यध्ययने वा यदि भवति ।k।

स्तोकावशेषायां सन्ध्यायां कालमण्डलं प्रमृज्य, निषीधिकां कृत्वा कालमण्डले प्रविशति । उत्तराभिमुखः कायोत्सर्गं करोति । तस्मिंश्चाष्टोच्छ्वासोत्सर्गी क०, नमस्कारेणोत्सार्य मूक एव चतुर्विंशतिस्तवं पठति, तथा द्रुमपुष्पिकं, 'धम्मो मंगलपुव्वगं'ति, श्रामण्यपूर्वकं 'कहं नु कुज्जे'त्यादिकमित्यर्थः । एतच्चैकैकस्यां दिशि कर्षति दण्डधार्यपि उत्तराभिमुखसंस्थितस्य वामपार्श्वेऽग्रतो दण्डकं धरति । ऊर्ध्वस्थितः पुनस्तस्य पूर्वादिषु चलतस्तथैव भ्रमति ॥९७१॥

भासंतमूढसंकिय–इंदियविसए य होइ अमणुण्णे ।
बिंदू य छीयऽपरिणय, सगणे वा संकियं तिण्हं ॥९७२॥

भाषमाणः—ओष्ठसञ्चारेण पठन् यदि कालं गृह्णाति ततो व्याहन्यते [१] कालः, तथा शङ्कितेनाऽपि गर्जितादिना त्रयाणां कालो भज्यते नैकद्वयोः । तच्च स्वगणे[गच्छे] न परगणे ॥९७२॥ इमां गाथां किञ्चिद्व्याख्यानयति ।—

मूढो व दिसऽज्झयणे, भासंतो वावि गिण्हइ ण सुज्झे ।
अण्णं च दिसज्झयणं, संकंतोऽणिट्ठविसयं वा ॥९७३॥

१ ० कालः मूढो दिग्नि, अध्ययने वा भवति, बिन्दुरुरिपतति शरीरस्योपधेर्वा, 'अपरिणत' इति कालग्रहणभावोऽपगतोऽन्यचित्तो जातः ।S। ।k।

संक्रान्तोऽन्यां दिशम् अध्ययनं वाऽन्यत्संक्रान्तो द्रुमपुष्पिकां मुक्त्वा श्रामण्यपूर्वके गतः। उत्तरातो दिशो दक्षिणां गतः। तदा न शुद्ध्यति ॥९७३॥

जो वच्चंतंमि विही, आगच्छंतंमि होइ सो चेव ।
जं एत्थं णाणत्तं, तमहं वुच्छं समासेणं ॥९७४॥

यः प्रथमं वसतेर्व्रजतो विधिरुक्तः, आगच्छतोऽपि वसतौ स एव विधिः। यद् नानात्वं तदहं वक्ष्ये ॥९७४॥

णिसीहिया णमुक्कारं, आसज्जावडपडणजोइक्खे ।
अपमज्जिय भीए वा, छीए छिण्णेव कालवहो ॥९७५॥

'णमुक्कारं' 'णमो खमासमणाणं' ति, तथा आसज्जासज्जेत्यकरणे व्या०। कस्यचिदाभ(भि)डणे व्या०। पतनं लेष्ट्वादेरात्मनो वा ज्योतिःस्पर्शे व्या०। यद्यप्रमार्जय नुप्रविशति, भीतस्त्रस्तो वा चेद् भवति, यदि मार्जारादिस्तिर्यग् छिन्दन् व्रजति, ततः कालवधः ॥९७५॥

आगम इरियावहिया, मंगल आवेयणं तु मरुणायं ।
सव्वेहिवि पट्ठविएहि, पच्छाकरणं अकरणं वा ॥९७६॥

आगत्य गुरुसमीपमीर्यां प्रतिक्रामति। उत्सर्गेऽष्टोच्छ्वासं चिन्तयति। ततो गुरोरावेदयति कालं अत्र मरुक-

दृष्टान्तः॥ क्वापि पत्तने राज्ञा ब्राह्मणानां दानं दत्तं, तैश्च घोषितं यः समर्थः स आगत्य गृह्णातु भागम्। एवमाहूते (य) आगतस्तेन लब्धः। यो ग्रामादौ गतः स भ्रष्टः। एवं दण्डधारिणा घुष्टे ये उपयुक्ताः प्रस्थापितस्वाध्यायाश्च तेषां स्वाध्यायकरणं दीयते नेतरेषाम् ॥९७६॥ एतदेवाह—

सण्णिहियाण वडारो, पट्ठविय पमाय णो दए कालं।
बाहिठिए पडियरए, पविसइ ताहेव दंडधरो ॥९७७॥

सन्निहितानां त्रैविद्यब्राह्मणानां 'वडारो'त्ति वण्टकः। ये तु नागतास्तेषां न वण्टकः—विभागो जातः। एवमत्रापि प्रस्थापितस्वाध्यायानां स्वाध्यायो दीयते न तु प्रमादिनां। निवेदितकालेऽन्यः प्रतिजागरको बहिर्याति दण्डधारा प्रविशति ॥९७७॥

पट्ठविय वंदिए या, ताहे पुच्छेइ किं सुयं भंते!।
ते वि य कहंति सव्वं, जं जेण सुयं व दिट्ठं वा ॥९७८॥

प्रस्थापितस्वाध्यायो वन्दितगुरुश्च साधून् पृच्छति दण्डधारी ॥९७८॥

एक्कस्स दोण्ह व संकियंमि, किरइ ण कीरए तिण्हं।
सगणंमि संकिए परगणंमि गंतुं ण पुच्छंति ॥९७९॥

परगणे गत्वा न पृच्छति, यतः स कदाचित्कालग्राहको रुधिरादिना युक्त आसीत्ततो देवता कालं शोधयितुं न ददाति, तत्र तु—परगणे नैवं, अथवा परगण एवानायुक्तः कश्चिद् भ० । इह तु नैवं तस्मात्परगणो न प्रमाणम् ॥९७९॥ कालचतुष्के नानात्वमाह—

> कालचउक्के णाणत्तयं तु, पादोसियंमि सव्वेवि ।
> समयं पट्ठवयंती, सेसेसु समं व विसमं वा ॥९८०॥

प्रादोषिके काले सर्वे समकं स्वाध्यायं प्रस्थापयन्ति, शेषेषु त्रिषु समकं विषमं वा प्रस्थापयन्ति ॥९८०॥ कनकमानमाह—

> इंदियमाउत्ताणं, हणंति कणगा उ सत्त उक्कोसं ।
> वासासु य तिण्णि दिसा, उउबद्धे तारगा तिण्णि ॥९८१॥

वर्षासु प्राभातिके काले गृह्यमाणे तिसृषु दिक्षु—[१]यथाऽऽलोकोभवति, ततो गृह्यते कालोऽन्यथा व्याघातः, शेषेष्वाद्येषु चतसृष्वपि दिक्षु चेदालोको भवति, ततो गृह्यते नान्यथा ॥ ऋतुबद्धे तारिकात्रयं दृश्यते, ततः शुद्ध्यति नान्यथा आद्येषु त्रिषु कालेषु, प्राभातिकस्तु एकस्यामपि तारिकायां गृह्यते ॥९८१॥ इमां गाथां व्याख्यानयति—

१ यथा० ।ऽ।

कणगा हणंति कालं, ति-पंच-सत्तव घिं-सिसिर-वासे ।
उक्का उ सरेहागा, रेहारहितो भवे कणतो ॥९८२॥

कनका घ्नन्ति कालं त्रयः पञ्च सप्त यथाक्रमं ग्रीष्म-शिशिर-वर्षासु ॥९८२॥

सव्वेवि पढमजामे, दोण्णि उ वसभा उ (प्र. ण) आइमा जामा ।
तइओ होइ गुरूणं, चउत्थओ होइ सव्वेसिं ॥९८३॥

द्वौ आद्यौ यामौ वृषमाणां भवतः[१] ॥९८३॥

वासासु य तिण्णि दिसा, हवंति पाभाइयम्मि कालंमि ।
सेसेसु तीसु चउरो, उउंमि चउरो चउदिसंपि ॥९८४॥

वर्षासु तिसृषु दिक्ष्वालोके प्राभातिको गृ०, शेषेषु [२]त्रिषु चतसृष्वप्यालोके सति नान्यथा, ऋतुबद्धे चत्वारोऽपि कालाश्चतुर्दिक्ष्वालोके गृह्यन्ते नान्यथा ॥९८४॥

१ ० भवतः, ते हि प्रहरद्वयं सूत्रार्थं चिन्तयन्ति ।k।     २ त्रिषु-कालेषु ।सं०।

तिसु तिण्णि तारगा उ, उउंमि पाभाइए अदिट्ठे वि ।
वासासु अतारागा, चउरो छण्णे णिविट्ठोवि ॥९८५॥

ऋतुबद्धे त्रिष्वाद्येषु कालेषु त्रयस्तारा विलोक्यन्ते । प्राभातिकस्ताराऽदर्शनेऽपि गृ०, वर्षासु घनाच्छादितेषु अपि अदृष्टताराश्चत्वारोऽपि गृ०, प्राभातिकमुपविष्टोऽपि गृ० ॥९८५॥ एतदेवाह—

ठाणाऽसति बिंदूसु, गेण्हइ बिट्ठोवि पच्छिमं कालं ।
पडियरइ बाहि एको, एको अंतट्ठिओ गिण्हे ॥९८६॥

बिन्दुषु पतत्सु एको द्वारस्थितः [1]प्रतिजागर्ति एको अन्तर्गृह्णाति ॥९८६॥

पाओसियअड्ढरत्ते, उत्तरदिसि पुव्व पेहए कालं ।
वेरत्तियंमि भयणा, पुव्वदिसा पच्छिमे काले ॥९८७॥

प्रादोषिकोऽर्द्धरात्रिकश्चोत्तरस्यां दिशि प्रथमं प्रत्युपेक्ष्येते, वैरात्रिके भजना उत्तरस्यां प्राच्यां वा, पश्चिमे तु प्राभातिके [2]पूर्वस्यामेव ॥९८७॥

१. ० जागर्ति उल्कादिपात एकोऽन्तर्मध्ये गृह्णाति कालम् ० ।k।
२. पूर्वस्यामेव दिशि प्रथमं गृह्णाति ।k।

सज्झायं काऊणं, पढमवितियासु दोसु जागरणं ।
अण्णं वावि गुणंती, सुणंति झायंति वाऽसुद्धे ॥१८८॥

[1]चेच्छुद्ध्यति प्रादोषिकः कालः । ततः स्वाध्यायं कृत्वा प्रथमद्वितीयपौरुष्योर्जागरणं कुर्वन्ति । अशुद्धेऽन्यदुत्कालिकं गुणन्ति शृण्वन्ति ध्यायन्ति वा ॥१८८॥

जो चेव अ सयणविही, णेगाणं वण्णिओ वसहिदारे ।
सो चेव इहंपि भवे, णाणत्तं णवरि सज्झाए ॥१८९॥

य एव शयितव्ये विधिः [2]पूर्वमेकानेकानां प्रत्युपेक्षकाणां व्याख्यातः वसतिद्वारे, स एवाऽत्रापि, नानात्वमिदं, यदुत स्वाध्यायं कृत्वा स्वपन्ति ॥१८९॥

एसा सामायारी, कहिया भे! धीरपुरिसपण्णत्ता ।
सम्मत्तं पिंडदारं ।
एत्तो उवहिपमाणं, वुच्छं सुद्धस्स जह धरणा ॥१९०॥

१. यदि ।k। २ पूर्वमेकानां ।k।

उक्तं पिण्डद्वारम् । उपधिद्वारमाह—शुद्धस्य वस्त्रादेर्यथा धरणं भवति, तथा वक्ष्ये ॥९९०॥ तत्त्वभेदपर्यायैर्व्याख्येति न्यायात् पर्यायानाह—

उवही उवग्गहे संगहे य, तह पग्गहुग्गहे चेव ।
भंडग उवगरणे या (प्र. विय), करणेवि य हुंति एगट्ठा ॥९९१॥

उपदधातीत्युपधिः, किं ? द्रव्यतः शरीरं, भावतो ज्ञानादीनि उपदधाति १, उपगृह्णातीत्युपग्रहः २. संगृह्णातीति संग्रहः ३, प्रकर्षेण गृ० प्रग्रहः ४, अवगृह्णातीत्यवग्रहः ५, भण्डकं ६, उपकरणं ७, करणं ८, इत्येते एकार्थाः ॥९९१॥ तद्भेदमाह—

ओहे उवग्गहंमि य, दुविहो उवही उ होइ णायव्वो ।
एक्केक्को वि य दुविहो, गणणाए पमाणतो चेव ॥९९२॥

ओघोपधिः उपग्रहोपधिश्चेति द्विधोपधिः, स एकैको द्विधा [1]गणनया प्रमाणतश्च, तत्रौघोपधिः नित्यमेव यो गृह्यते, उपग्रहोपधिस्तु कारणे आपन्ने संयमार्थं यो गृह्यते ॥९९२॥ तत्रौघोपधिर्जिनकल्पिकानां प्रतिपाद्यते, तत्राऽपि गणनाप्रमाणत आह—

१. गणनाप्रमाणेन प्रमाणप्रमाणेन चेति भावः ।सं०।

पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया ।
पडलाइं रयत्ताणं च, गुच्छओ पायणिज्जोगो ॥९९३॥

पात्रकस्थापनकम् । पात्रनियोगः पात्रपरिकरः ॥९९३॥

तिण्णेव य पच्छागा, रयहरणं चेव होइ मुहपत्ती ।
एसा दुवालसविहो उवही जिणकप्पियाणं तु ॥९९४॥

त्रयः प्रच्छादकाः कल्पाः । एष द्वादशविध उपधिर्जिनकल्पिकानाम् ॥९९४॥ स्थविरोपधि गणनाप्रमाणत आह-

एए चेव दुवालस, मत्तग अइरेगचोलपट्टो य ।
एसो (प्र. उ) चउद्द(प्र. द)सविहो, उवही पुण थेरकप्पम्मि ॥९९५॥

एत एव द्वादश,अतिरिक्तस्तु मात्रकश्चोलपट्टश्च भवति, एष चर्तुदशविधोपधिः स्थविरकल्पिके भवति ॥९९५॥

अधुना संग्रहगाथामाह—

जिणा बारसरूवाइं, थेरा चउदसरूविणो ।
अज्जाणं पण्णवीसं तु, अओ उड्ढं उवग्गहो ॥९९६॥

जिनानां—जिनकल्पिकानां द्वादशरूपाणि उक्तलक्षणानि भवन्ति, आर्याणां भिक्षुणीनां पञ्चविंशतिरूपोपधिर्वक्ष्यमाणः, अत ऊर्ध्वमुपग्रहोपधिर्वेदितव्यः ॥९९६॥ स जिनकल्पिकस्थविरकल्पिकोपधिः सर्व एव त्रिधा भवति, तत्र जिनकल्पिकानामाह—

तिण्णेव य पच्छागा, पडिग्गहो चेव होइ उक्कोसो ।
गुच्छगपत्तगठवणं, मुहणंतगकेसरि जहण्णो ॥९९७॥

त्रयः प्रच्छादकाः पतद्ग्रहश्च, एष उत्कृष्टः प्रधानश्चतुर्विधोऽप्युपधिः, गोच्छकः पात्रकस्थापनं मुखानन्तकं मुखवस्त्रिका पात्रकेसरी एष चतुर्विधो जघन्योऽप्रधानः, पात्रबन्धः पटलानि रजस्त्राणं रजोहरणमित्येष चतुर्विधोऽपि मध्यमः ॥९९७॥ स्थविरकल्पिकानामाह—

पडलाइं रयत्ताणं, पत्ताबंधो य चोलपट्टो य ।
रयहरण मत्तओऽवि य, थेराणं छव्विहो मज्झो ॥९९८॥

एष षड्विधो मध्यमः, उत्कृष्टो जघन्यश्च जिनकल्पिकवत् ॥९९८॥ आर्याणां गणनाप्रमाणत ओघोपधिमाह—

पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया ।
पडलाइं रयत्ताणं, गोच्छओ पायणिज्जोगो ॥९९९॥

स्पष्टा ॥९९९॥

तिण्णेव य पच्छागा, रयहरणं चेव होइ मुहपत्ती ।
तत्तो य मत्तगो खलु, चउदसमो कमढगो चेव ॥१०००॥
उग्गहणंतगपट्टो, अद्धोरुग चलणिया य बोद्धव्वा ।
अब्भितर बाहिरियं, सणि तह कंचुगे चेव ॥१००१॥
उक्कच्छिय वेकच्छी, संघाडी चेव खंधकरणी य ।
ओहोवहिंमि एए, अज्जाणं पण्णवीसं तु ॥१००२॥

कमढकमेतदर्थं भवति, यतस्तासां प्रतिग्रहको न भ्रमति, तुच्छस्वभावत्वात्, कमढके भुञ्जते ॥१०००-१-२॥ भाष्यकारो गाथाद्वयं व्याख्यानयति—

णावाणिभो उग्गहणंतगो उ, सो गुज्झदेसरक्खट्टा ।
सो उ पमाणेणेगो, घणमसिणो देहमासज्जा ॥१००३॥
पट्टो वि होइ एक्को, देहपमाणेण सो उ भइयव्वो ।
छायंतोग्गहणंतं, कडिबंधो मल्लकच्छा वा ॥१००४॥

आर्याणां पञ्चविंशत्योघोपधिनामानि ।

अड्ढोरुगो उ ते दोवि, गेण्हिउं छायए कडिविभागं ।
जाणुपमाणा चलणी, असीविया लंखियाएव्व ॥१००५॥
अंतो णियंसणी पुण, लीणतरा जाव अद्धजंघाओ ।
बाहिरखालु(हिं खलुग)पमाणा, कडी य दोरेण पडिबद्धा ॥१००६॥

'घणमसिणो' [1]घनम् आर्त्तवं बीजपानरक्षार्थं वा, मसृणं कर्कशस्पर्शत्यागार्थं, कस्याश्चित्सूक्ष्मं कस्याश्चित्स्थूलं पट्टश्चतुरङ्गुलः-पृथुः कटीमानदीर्घः, पृथुकट्यां दीर्घः कृशकट्यां ह्रस्व इति मल्लचर[ल]णाकृतिः ॥१००३-१००४॥

अध ऊरुकार्द्धं भजत्यर्द्धोरुकः, परमूर्वोरन्तरे ऊरुद्वये च कशाबद्धः । लंखि[ङ्खि]का वशोपरि नर्त्तकी तत्परिधानवत् ॥१००५॥

अन्तर्निवसनी पुनः उपरिकटिभागात् [आरभ्य अधः] बहिर्निवसनी गुल्फौ यावत् अधः षड्विधोपकरणम् उक्तम् ॥१००६॥

छाएइ अणुक्कमइ (प्र.कुइए), उरोरुहे कंचुओ य अमीव्विओय ।
एमेव य ओकच्छिय, सा णवरं दाहिणे पासे ॥१००७॥

१. घनवस्त्रमित्यर्थः ।सं०।

[स्वहस्तेन] सार्द्धत्रिहस्तदीर्घः, हस्तपृथुः, स्वदेहमाननिष्पन्नो वा पार्श्वद्वयेऽपि कशाबद्धः । अणुः—स्वल्पं कञ्चुकाभ्यन्तरे ससंचारा, [उरोरुहावित्यर्थः] 'एवमेव च' कञ्चुकवत्कक्षासमीपाच्छादिका उपकक्षिका सार्द्धहस्तमाना चतुरस्रा ॥१००७॥

वेक(प्र. ग.)च्छिया उ पट्टो, कंचुयमुक्कच्छियं व छाएइ ।
संघाडीओ चउरो, तत्थ दुहत्था उवसयंमि ॥१००८॥

वैकक्षिका वामपार्श्वे, संघाटिका प्रच्छाद्यः, तत्थ जा संघाडी दुहत्थिया [1]पिहुत्तेण सा खोमिया होइ ॥१००८॥

दुण्णि तिहत्थायामा, भिक्खट्ठा एग एग उच्चारे ।
ओसरणे चउहत्था, णिसण्ण पच्छायणी मसिणा ॥१००९॥
खंधकरणी य चउहत्थ-वित्थडा(रा) वायविहुयरक्खट्ठा ।
खुज्जकरणी उ कीरइ, रूववईणं कुड(ड)हहेउं ॥१०१०॥
[2]संघाइमेअ(त)रा वा, सव्वोवेसो समासओ उवही ।
पासग वच्छ मज्झुसिरो, जं चाइण्णं तयं एयं ॥१०११॥

१. ० पिहुत्तणे न सा खोमिया ० ।k।
२. २. संघाइसे' इत्यत आरभ्य 'वुच्छामि' पर्यन्ताः गाथाः ।k। संज्ञकप्रतौ न सन्ति ।सं०।

[1]जिणा बारसरूवाणि० ॥ १०११ ॥

उक्कोसगो [1]जणाणं, चउव्विहो मज्झिमो वि एमेव ।
जहण्णो चउव्विहो खलु, इत्तो थेराण वुच्छामि ॥१०१२॥
उक्कोसो थेराणं, चउव्विहो छव्विहो अ मज्झिमओ ।
जहण्णो चउव्विहो खलु, इत्तो अज्झा(ज्जा)ग वुच्छामि ॥१०१३॥
उक्कोसो अट्ठविहो, मज्झिमओ होइ तेरसविहो उ ।
जहण्णो चउव्विहोवि य, तेण परमुवग्गहं जाण ॥१०१४॥

उत्कृष्टोपधिः पात्रं, संघाडी ४, खंधकरणी, अंतोणियंसणी बहिर्णियंसणी, अयमष्टविधः प्रधानः । पात्र—बन्धः १. पटलानि २. रजस्त्राणं ३. रजोहरणं ४. मात्रं ५. उपग्रहानन्तकं ६. पट्टकः ७ अर्द्धोरुकः ८. चलणी ९. कञ्चुकः १०. उपकक्षिका ११. वैकक्षिका १२. कमढकः १३. अयमार्यिकाणां त्रयोदशभेदो मध्यमोपधिः । पात्रस्थापनकं, पात्रकेसरिका, गुच्छो, मुखवस्त्रिकाश्चायं जघन्यश्चतुःप्रकारः । अतः परं यः कारणे संयमार्थं गृह्यते स उप[अव]ग्रहोपधिः ॥१०१४॥

१. इयं पूर्वं ९९६ तमक्रमा द्रष्टव्याङ्के ।सं०।

एगं पायं जिणकप्पियाण, थेराण मत्तओ बिइओ ।
एयं गणणपमाणं, पमाणमाणं अओ वुच्छं ॥१०१५॥

एकमेव पात्रं जिनकल्पिकानां, स्थविरकल्पिकानां तु मात्रको द्वितीयो भवति, इदमेकद्वयादिकं गणनाप्रमाणम् ॥१०१५॥ इत ऊर्ध्वं प्रमाणप्रमाणं वक्ष्ये—

तिण्णि विहत्थी चउरंगुलं च, भाणस्स मज्झिमपमाणं ।
इत्तो हीण जहण्णं, अइरेगतरं तु उक्कोसं ॥१०१६॥

समचतुरस्रं वृत्तं दोरेण मीयते, तिर्यगूर्ध्वाधो यदि सदवरकस्तिस्रो वितस्तयश्चतुरङ्गुलानि भवन्ति ततो भाजनस्येदं मध्यमप्रमाणम्, इतोऽस्मात्प्रमाणाद्यद्धीनं तज्जघन्यं यदतिरिक्तं तदुत्कृष्टम् ॥१०१७॥ प्रकारान्तरेण प्रमाणमाह—

इणमण्णं तु पमाणं, णियगाहाराउ होइ णिप्फण्णं ।
कालपमाणप(प्र. प्पमाण)सिद्धं, उदरपमाणेण य वयंति ॥१०१७॥

इदमन्यत् प्रमाणं, येनाहारेण निष्पन्नम् । एतदुक्तं भवति, कांजिकादिद्रवोपेतभक्तस्य चतुरङ्गुलैर्न्यूनं यत्पात्रं यदि साधुर्भुङ्क्ते तत्ताद्दग्विधं मध्यमप्रमाणं, तच्चेकविधं ग्रीष्मकालप्रमाणसिद्धमुदरप्रमाणसिद्धं वदन्ति ॥१०१७॥ एतदेवाह—

उक्कोस त्तिसामासे, दुगाउअद्धाणमागओ साहू ।
चउरंगुलूण भरियं, जं पज्जत्तं तु साहुस्स ॥१०१८॥

उत्कृष्टतृणमासयोर्ज्येष्ठाषाढयोर्द्विगव्यूताध्वानाऽगतो यो भिक्षुश्चतुर्भिरङ्गुलैर्न्यूनं भृतं सत् पर्याप्त्या [ यत् ] साधुर्भुङ्क्ते तदित्थंभूतं कालप्रमाणोदरप्रमाणसिद्धं पात्रं मध्यमं भवति ॥१०१८॥

एयं चेव पमाणं, सविसेसयरं अणुग्गहपवत्तं ।
कंतारे दुब्भिक्खे, रोहगमाईसु भइयव्वं ॥१०१९॥

एतदेव पूर्वोक्तं प्रमाणं यदा सविशेषतरम् अतिरिक्तं भवति, तदा तद् अनुग्रहार्थं प्रवृत्तं भवेत्, एतदुक्तं भवति, बृहत्तरेण पात्रेणाऽन्येभ्यो दानेनानुग्रहार्थमात्मनः क्रियेत, तच्च कान्तारे महतीमटवीमुत्तीर्यान्येभ्योऽप्यर्थं गृहीत्वा व्रजति–येन बहूनां भ०, तथा दुर्भिक्षे अलभ्यमानायां भिक्षायां बह्वटित्वा बालादिभ्यो ददाति, तच्चातिमात्रे भाजने सति भ०, तथा रोधके कोट्टस्य जाते सति कश्चिद्भोजनं श्रद्धया दद्यात्तत्र तन्नीयते येन बहूनां भ०, एतेषु [1]भजनीयं सेवनीयं तदतिमात्रं पात्रम् ॥१०१९॥ इमां गाथां व्याख्यानयति—

वेयावच्चगरो वा, णंदीभाणं धरे उवग्गहियं ।
सो खलु तस्स विसेसो, पमाणजुत्तं तु सेसाणं ॥१०२०॥

[1] ०० भजनीयं तद० k।

नन्दीपात्र-स्योपयोगिता ।

वैयावृत्यकरो वा नन्दीपात्रं धारयत्यौपग्रहिकं गुरुसमर्पितं निजं वा, स खलु तस्यैव [1]वैयावृत्यकरस्य विशेषः, एतदुक्तं भवति—यदतिरिक्तं पात्रधारणमयं तस्यैवैकस्य वैयावृत्यकरस्य विशेषः क्रियते, शेषाणां तु साधूनां प्रमाणयुक्तमेव पात्रं भवति ॥१०२०॥

दिज्जाहि भाणपूरंति, रिद्धिमं कोवि रोहमाईसु ।
तत्थवि तस्सुवओगो, सेसं कालं तु पडिकुट्ठो ॥१०२१॥

[2]दद्याद्भाजनपूरकं कश्चिद् ऋद्धिमान् पत्तनरोधकादौ, तत्र तस्य नन्दीपात्रस्योपयोगः, शेषकालं तस्योपयोगः प्रतिकृष्टः ॥१०२१॥

पायस्स लक्खणमलक्खणं च, भुज्जो इमं वियाणित्ता ।
लक्खणजुत्तस्स गुणा, दोसा य अलक्खणस्स इमे ॥१०२२॥

१. ० त्यकृतो० ।Sk।

२. एतच्च तेन (प्रमाणातिरिक्तेन पात्रेण, प्रयोजनम् ।k।

पात्रस्य लक्षणमलक्षणं ज्ञात्वा भूयः पुनर्लक्षणोपेतं ग्राह्यं, यतो लक्षणोपेतस्याऽमी गुणाः, अपलक्षणोपेतस्याऽमी दोषा वक्ष्यमाणाः । तस्माल्लक्षणोपेतमेव ग्राह्यम् ॥१०२२॥ तच्चेदम्—

वट्टं समचउरंसं होइ, थिरं थावरं च वण्णं च ।
हुंडं वायाइद्धं, भिण्णं च अधारणिज्जाइं ॥१०२३॥

वृत्तं, समचतुरस्रं, स्थिरं—[१]सुप्रतिष्ठानं, स्थावरं न परकीयं याचितं, वर्ण्यं—स्निग्धवर्णोपेतं यद्भवति तद् ग्राह्यं नेतरत्, उक्तं लक्षणोपेतम् । हुण्डं क्वचिन्निम्नं क्वचिदुन्नतं, 'वा'० अकालेनैव शुष्कं संकुचितं वलिभृतम् । भिन्नं—राजियुक्तं सच्छिद्रं वा, एतानि न धार्यन्ते ॥१०२३॥ लक्षणयुक्तस्य फलमाह—

संठियंमि भवे लाभो, पतिट्ठा सुपतिट्ठिते ।
णिव्वणे कित्तिमारोग्गं, वण्णड्ढे णाणसंपया ॥१०२४॥

संस्थिते वृत्तचतुरस्रे पात्रे ध्रियमाणे लाभो भवति, प्रतिष्ठा गच्छे भवति सुप्रतिष्ठिते स्थिरे, निर्व्रणे कीर्तिरारोग्यं च भवति, वर्णाढ्ये ज्ञानसंपद् भवति ॥१०२४॥ अपलक्षणयुक्तदोषमाह—

१. ० ष्ठान ०त्तद् गृह्यते, तथा स्थावरं, न परकीयोपस्करवन् कतिपयदिनस्थायि, तथा स्निग्ध० ।k।

हुंडे चरित्तभेदो, सबलंमि य चित्तविब्भमं जाणे ।
दुप्पए खीलसंठाणे, गणे च चरणे च णो ठाणं ॥१०२५॥

हुंडे चारित्रविनाशो भवति, शबले-चित्रले चित्तविभ्रमः—चित्तविप्लुतिर्वा भवति, 'दुप्पए' अधोभागेऽप्रतिष्ठिते, तथा [१]कीलवदूर्ध्वस्थाने, गणे चरणे वा न प्रतिष्ठानं भवते ॥१०२५॥

पउमुप्पले अकुसलं, सव्वणे वणमादिसे ।
अंतो बहिं च दड्ढंमि, मरणं तत्थ णिद्दिसे ॥१०२६॥

अधः स्थासकाकारे पात्रेऽकुशलं भवति, [२]सव्रणपात्रे व्रणो भवति तत्स्वामिनः । तथा अन्तर्बहिर्वा दग्धे सति मरणं निर्दिश्यते ॥१०२६॥

अकरंडगम्मि भाणे, हत्थो उट्ठं जहा ण घट्टेइ ।
एयं जहण्णयमुहं, वत्थुं पप्पा विसालं तु ॥१०२७॥

१. ० दूर्ध्वसंस्थाने ।S। ।k। २. सव्रणे व्रणश्च तत्स्वामिनः ।k।

करण्डको—वंशग्रथितः समतलकः करण्डकस्येवाकारो यस्य तत्करण्डकं, न करण्डकमकरण्डकं, वृत्तचतुरस्रमित्यर्थः, तस्मिन्नेवंविधे पात्रे हस्तः प्रविशन् ओष्ठं—कर्णं यथा न घट्टयति न स्पृशति [1]एतज्जघन्यस्य पात्रं, वस्तु प्राप्य—[2]वस्त्वाश्रित्य सुखेनैव गृहीतं—ददातीत्येवमाद्याश्रित्य विशालतरं मुखं क्रियते ॥१०२७॥ किमर्थं भाजनग्रहणमिति चेदुच्यते—

छकायरक्खणट्ठा, पायग्गहणं जिणेहिं पण्णत्तं ।
जे य गुणा संभोए, हवंति ते पायगहणेवि ॥१०२८॥

षट्कायरक्षणार्थं, पात्ररहितः साधुर्भोजनार्थी [3]षडपि [ कायान् ] व्यापादयति, तस्मात्पात्रग्रहणं जिनैः प्रज्ञप्तं, य एव गुणा मण्डलीसंयो[भो]गे वर्णितास्त एव पात्रग्रहणेऽपि ॥१०२८॥ के च ते, तदाह—

अतरंतबालवुड्ढा, सेहाएसा गुरू असहुवग्गे ।
साहारणोग्गहाऽलद्धि—कारणा पादगहणं तु ॥१०२९॥

एभिः कारणैः पात्रग्रहणं भवति, उक्तं पात्रकप्रमाणम् ॥१०२९॥

१. ० एतज्जघन्यस्य पात्रं=एतज्जघन्यमुखं पात्रकमित्यर्थः ।सं०। २. ० वस्त्वाश्रित्य विशालतरं मुखं क्रियते किमर्थं ० ।k।
३. ० षडपि कायान् व्या० ।k।

पत्ताबंधपमाणं, भाणपमाणेण होइ कायव्वं ।
जह गंठिमि कयंमि, कोणा चउरंगुला हुंति ॥१०३०॥

पात्रबन्धप्रमाणं भाजनप्रमाणेन भ०, यथा ग्रन्थौ कृते-दत्ते कोणौ चतुरङ्गुलप्रमाणौ भवतस्तथा कार्यम् ॥१०३०॥

पत्तट्ठवणं तह गुच्छओ य, पायपडिलेहणीआ य ।
तिण्हंपि यप्पमाणं. विहत्थि चउरंगुलं चेव ॥१०३१॥

पात्रस्थापनं, [1]गुच्छकः, पात्रमुखवस्त्रिका एतेषां त्रयाणामपि वितस्तिश्चत्वार्यङ्गुलानि च प्रमाणं चतुरस्रं द्रष्टव्यम् । पात्रस्थापनगुच्छौ ऊर्णामयौ, पात्रकेसरी खोमिया ॥१०३१॥

रयमादिरक्खणट्ठा, पत्तट्ठवणं जिणेहिं पण्णत्तं (प्र. विऊ उवइसंति) ।
होइ पमज्जणहेउं तु, गोच्छओ भाणवत्थाणं ॥१०३२॥

रजआदिरक्षणार्थं पात्रस्थापनकं भवति, गुच्छको भाजनवस्त्राणां प्रमार्जननिमित्तं भवति, गुच्छकेन हि पटलानि प्रमृज्यन्ते ॥१०३२॥

१. ० गुच्छकः पात्रप्रत्युपेक्षणिका पात्रमुखवस्त्रिका एतेषा० ।k।

पात्रबन्धादीनां प्रमाणम् ।

पायपमज्जणहेउं, केसरिया पाएँ पाएँ एकेक्का ।

गोच्छगपत्तट्ठवणं, एक्केकं गणणमाणेणं ॥१०३३॥

पात्रे पात्रे एकैका पात्रकेसरिका भवति, तथा गुच्छकः पात्रस्थापनकं [1]चैकैकं गणनामानेन भवति ॥१०३३॥

जेहिं सविया ण दीसइ, अंतरिओ तारिसा भवे पडला ।

तिण्णि व पंच व सत्त व, कयलीगब्भोवमा मसिणा ॥१०३४॥

यैः पटलैस्त्रिभिरेकीकृतैः सविता अन्तरितो न दृश्यते, पञ्चभिः सप्तभिर्वा, कदलीगर्भोपमानि शुकुलानि मसृणानि घनानि पटलानि भवन्ति ॥१०३४॥ यदुक्तं त्रीणि पटलानि पञ्च सप्त वा, एतदेव कालभेदेनाऽऽह—

गिम्हासु तिण्णि पडला, चउरो हेमंत पंच वासासु ।

उक्कोसगा उ एए, एत्तो पुण मज्झिमे वुच्छं ॥१०३५॥

ग्रीष्मे त्रीणि, हेमन्ते चत्वारि, वर्षासु पञ्च, यद्युत्कृष्टानि मसृणानि भवन्ति । इत ऊर्ध्वं मध्यमानि—न शोभनानि नाऽप्यशोभनानि वक्ष्ये ॥१०३५॥

१. चै० ।ऽ।

गिम्हासु हुंति चउरो, पंच य हेमंति छच्च वासासु ।
एए खलु मज्झिमया, एत्तो उ जहण्णओ वुच्छं ॥१०३६॥

ग्रीष्मे चत्वारि मध्यमानि–मनाक् जीर्णानि, हेमन्ते पञ्च, वर्षासु षट्, एतानि [1]मध्यमानि ॥१०३६॥ जघन्यान्याह –

गिम्हासु पंच पडला, छप्पुण हेमंति सत्त वासासु ।
तिविहंमि कालछेए, पायावरणा भवे पडला ॥१०३७॥

ग्रीष्मे पञ्च जघन्यानि–जीर्णप्रायाणि गृह्यन्ते, षट् हेमन्ते, वर्षासु सप्त पटलानि, एवं त्रिविधेऽपि कालच्छेदे–कालपर्यन्ते पात्राऽऽवरणानि पटलान्यन्यानि चान्यानि गृह्यन्ते ॥१०३७॥ एषामेव प्रमाणमाह–

अड्ढाइज्जा हत्था, दीहा छत्तीस अंगुले रुंदा ।
बितियं पडिग्गहाओ, ससरीराओ य णिप्फण्णं ॥१०३८॥

अर्द्धतृतीयहस्तदीर्घाणि भवन्ति षट्त्रिंशदङ्गुलानि रुन्दानि–विस्तीर्णानि भवन्ति, द्वितीयमेषां प्रमाणं पात्राच्छादनेन शरीरस्कन्धाच्छादनेन च निष्पन्नम्, एतदुक्तं भवति–भिक्षाटनकाले स्कन्धः पात्रं वा च्छाद्यते यावता तत्प्रमाणं पटलानाम् ॥१०३८॥

१ ०मध्यमानि न प्रधानानि नाऽप्यप्रधानानि, ।k।

पुप्फफलोदयरयरेणु-सउणपरिहारपायरक्खट्ठा ।
लिंगस्स य संवरणे(प्र. आवरणे), वेदोदयरक्खणे पडला ॥१०३९॥

अस्थगिते पात्रे पुष्पं फलं वा निपतति, रजः सचित्तो रेणुर्धूलिः, शकुनिपरिहारः-शकुनिपुरीषः-तत्पातरक्षणार्थं, [१]लिङ्गस्थगनं तैर्भ०, पुंवेदोदये स्तब्धताऽऽ[च्छा]दनार्थं पटलानि भवन्ति ।१०३९॥ रजस्त्राणप्रमाणमाह—

पटलानां प्रम कारणता च

माणं तु रयत्ताणे, भाणपमाणेण होइ णिप्फण्णं ।
पायाहिणं करेंतं, मज्झे चउरंगुलं कमइ ॥१०४०॥

रजस्त्राणप्रमाण

मानं रजस्त्राणस्य भाजनप्रमाणं भवति, तच्च प्रदक्षिणां कुर्वाणं तिर्यग् दीयते, मध्ये पृथुत्वेन चत्वार्यङ्गुलानि क्रमते गच्छति प्रदक्षिणां कुर्वाणम् ॥१०४०॥

मूसय-रज-उक्केरे, वासे सिण्हा रए य रक्खट्ठा ।
होंति गुणा रयताणे, पादे पादे य एक्केक्कं ॥१०४१॥

मूषकरजउत्केररक्षणार्थं, वर्षोदकं, स्नेहोऽवश्यायस्तद्रक्षणार्थं, रजः सचित्तः । रजस्त्राणस्यैते गुणाः । तच्च पात्रे पात्रे एकैकं भवति ॥१०४१॥ कल्प[२]प्रमाण[प्रमाण]माह—

१. ०नं च तैः ।k। २. ०कल्पप्रमाणप्रमाण० ।k।

कप्पा आयपमाणा, अड्ढाइज्जा उ वित्थडा हत्था ।
दो चेव सोत्तिया उण्णिओ य तइओ मुणेयव्वो ॥१०४२॥

कल्पा यावन्मात्राः प्रावृताः स्कन्धस्योपरि प्रक्षिप्तास्तिष्ठन्ति एतावदात्मप्रमाणम्। अर्द्धतृतीयहस्तान् विस्तृताः। द्वौ सूत्रिकौ तृतीय ऊर्णिकः ॥१०४२॥

तणगहणाणलसेवा—णिवारणा धम्मसुक्कझाणट्ठा ।
दिट्ठं कप्पग्गहणं, गिलाणमरणट्ठया चेव ॥१०४३॥

तृणग्रहणाऽनलसेवानिवारणार्थं, तथा धर्मशुक्लध्यानार्थं, यतः कल्पं विना शीतादिना बाध्यमानो धर्मशुक्लध्याने ध्यातुमसमर्थो भवति, ग्लानरक्षणार्थं च, मृतस्योपरि दीयते कल्पः ॥१०४३॥ रजोहरणस्वरूपमाह—

घणं मूले थिरं मज्झे, अग्गे मद्दवजुत्तया ।
एगंगियं अज्झुसिरं, पोरायामं तिपासियं ॥१०४४॥

मूले—दण्डपर्यन्ते घनं निबिडं भवति। मध्ये स्थिरं कार्यम्, अग्रे—दसिकापर्यन्ते मार्दवयुक्तं मृदु कार्यं, एकाङ्गिकं तज्जातदशिकं, दशिकाः कम्बलीखण्डनिष्पादिता इत्यर्थः। [न] ग्रन्थिला दशिका निषद्या च शुसिरा यस्य तदशुसिरं, 'पोरायामं'ति अङ्गुष्ठपर्वणि प्रतिष्ठितायाः प्रदेशिन्या यावन्मात्रं शुषिरं भवति तदापूरकं कार्यं, दण्डिकायुक्ता निषद्या यथा तावन्मात्रं पूरयति तथा कार्यं 'त्रिपाशितं' त्रीणि वेष्टनानि दवरकेन दत्त्वा पाशितं यत्र बन्धनेन ॥१०४४॥

अप्पोल्लं मिउ पम्हं च, पडिपुण्णं हत्थपूरिमं ।
रयणोपमाणमित्तं, कुज्जा पोरपरिग्गहं ॥१०४५॥

अमुमेव श्लोकमाह 'अप्पो[प्र. पु.]ल्लं' दृढवेष्टनात्, मृदुपक्ष्म मृदूनि दशिकापक्ष्माणि क्रियन्ते, प्रतिपूर्णं बाह्यनिषद्याद्वयेन युक्तं हस्तं पूरयति यथा तथा कार्यं, रत्निप्रमाणमात्रं यथा दण्डो हस्तप्रमाणो भवति, किञ्चिच्चाधिकं भवति, तथा कार्यं, 'पोर०' अङ्गुष्ठपर्वणि लग्नया प्रदेशिन्या यद्भवति छिद्रं तद्यथा पूर्यते तेन दण्डकेन बाह्यनिषद्याद्वयरहितेन तथा कार्यम् ॥१०४५॥ अधुना समुदायरूपस्यैव प्रमाणमाह—

बत्तीसंगुल दीहं, चउवीसं अंगुलाइं दंडो से ।
अट्ठंगुला दसाओ, एगयरं हीणमहियं वा ॥१०४६॥

द्वात्रिंशदङ्गुलानि सर्वमेव प्रमाणतो भवति, तत्र च रजोहरणस्य चतुर्विंशत्यङ्गुलानि दण्डकः, अष्टाङ्गुलप्रमाणाश्च दशिका भवन्ति, एकतरं दण्डकस्य दशिकानां वा कदाचिद्धीनमधिकं प्रमाणतो भवति ॥१०४६॥

उण्णियं उट्टियं वावि, कंबलं पायपुंछणं ।
तिपरीयल्लमणिस्सट्ठं, रयहरणं धारए एगं ॥१०४७॥

तद्रजोहरणं कदाचिदूर्णमयं भवति, उष्ट्रोर्णामयं भवति, कम्बलमयं भवति, पादपुञ्छनशब्देन रजोहरणमेव गृह्यते, त्रिःपरिवर्त्त–त्रयो वेष्टका यथा भवन्ति तथा कार्यं, 'अणिसट्ठं' त्ति मृदु कार्यं, रजोहरणं धारयेदेकमेवेति ॥१०४७॥

रजोहरण–प्रयोजनानि ।

आयाणे णिक्खेवे, ठाण–णिसीयण–तुवट्ट–संकोए ।
पुव्वं पमज्जणट्ठा, लिंगट्ठा चेव रयहरणं ॥१०४८॥

आदानं [1]ग्रहणं, निक्षेपो न्यासः, स्थानं–कायोत्सर्गः, निषीदनमुपवेशनं, तुयट्टणं–शयनं, संकोचनं जानुसंदंशकादेः, एतानि पूर्वं प्रमृज्य [2]क्रियन्ते, लिङ्गमिति कृत्वा रजोहरणम् ॥१०४८॥ मुखवस्त्रिकाप्रमाणमाह—

मुखवस्त्रिकाप्रमा प्रयोजनञ्च ।

चउरंगुलं विहत्थी, एयं मुहणंतगस्स उ पमाणं ।
बितियं मुहप्पमाणं, गणणपमाणेण एक्केक्कं ॥१०४९॥

चत्वार्यङ्गुलानि वितस्तिश्च एतच्चतुरस्रं मुखानन्तकप्रमाणम्, अथवेदं द्वितीयं–प्रमाणं, यदुत–मुखप्रमाणं कार्यं, एतदुक्तं भवति–वसतिप्रमार्जनादौ त्र्यस्रं कोणद्वये गृहीत्वा यथा कृकाटिकायां ग्रन्थिं दातुं शक्नोति तथा कार्यं, गणनाप्रमाणेन पुनस्तदेकैकमेवं मुखानन्तकं भवति ॥१०४९॥



१. ० ग्रहणं, तत्र प्रमार्जनार्थं रजोहरणं गृह्यते, |k|  २. ० क्रियन्तेऽतः प्रमार्जनार्थं रजोहरणं क्रियते, |k|

संपातिमरयरेणू-पमज्जणट्ठा वयंति मुहपत्तिं ।
णासं मुहं च बंधइ, तीए वसहिं पमज्जंतो ॥१०५०॥

संपातिमसत्त्वरक्षणार्थं जल्पद्भिर्मुखे दीयते, रजः सचित्तरेणुस्तत्प्रमार्जनार्थं [१]मुखवस्त्रिकां वदन्ति, नासिकां मुखं च बध्नाति तया वस्त्रिकया वसतिं प्रमार्जयन्, येन मुखादौ न रजः प्रविशति ॥१०५०॥ मात्रकप्रमाणमाह—

जो मागहओ पत्थो, सविसेसतरं तु मत्तयपमाणं ।
दोसु वि दव्वग्गहणं, वासावासासु अहिगारो ॥१०५१॥

यो मागधिकः प्रस्थस्तत्सविशेषतरं मात्रकं भवति, दो असईओ पसई, दोहिं पसईहिं सेइया होइ। चउसेईओ य कुडओ, चउकुडओ पत्थओ होइ ॥१॥ द्वयोरपि वर्षाविर्षयोः-वर्षाऋतुबद्धयोर्यदाऽऽचार्यादिप्रायोग्यद्रव्यग्रहणं क्रियते, अयमधिकारस्तस्य मात्रकस्य, इदं प्रयोजनमित्यर्थः ॥१०५१॥ अथवेदं प्रमाणं मन्यते—

सूवोदणस्स भरिउं, दुगाउअद्धाणमागओ साहू ।
भुंजइ एगट्ठाणे, एयं किर मत्तयपमाणं ॥१०५२॥

१. ० वस्त्रिकाग्रहणं प्रतिपादयन्ति पूर्वर्षयः ।k।

सूपस्योदनस्य भृतं [1]द्विगव्यूताध्वाऽऽगतः साधुर्भुङ्क्ते एकस्थाने तदेव मात्रकप्रमाणम् ॥१०५२॥ आह—कस्मादुक्त-प्रमाणाल्लघुतरं न क्रियते? उच्यते-लघुतरे एते दोषाः—

संपाइमतसपाणा, धूलिसरिक्खे य परिगलंतंमि ।
पुढवि-दग-अगणि-मारुय-उद्धंसण-खिंसणा डहरे ॥१०५३॥

अतिलघुनि मात्रे आहारेण भृते यदाच्छादनमुत्क्षिप्यते तदा शुषिरेण संपातिमास्त्रसाः, धूलिः, सरजस्कः छारः, एते प्रविशन्ति, परिगलमाने भूदकाग्नि[2]मारुतानां 'उद्धंसणं'वधो भवति, तथा खिंसना—परिभवो भवति । यदुतानेनाऽतृप्तेनैतावत् गृहीतं, ततो डहरे मात्रके एते दोषाः ॥१०५३॥ आचार्यादिकार्ये मात्रकस्याऽनुज्ञामाह—

आयरिए य गिलाणे, पाहुणए दुल्लभे सहसदाणे ।
संसत्तभत्तपाणे, मत्तगपरिभोग अणुणाओ ॥१०५४॥

तस्य च मात्रकस्यानेन क्रमेण परिभोगः कार्यः, यदाचार्यप्रायोग्यस्य तत्र क्षेत्रे ध्रुवलाभस्तदैक एव संघाटको गुरुप्रायोग्यं गृह्णाति न सर्वे ॥१०५४॥ तत्रैकसंघाटकस्य गृह्णतोऽयं विधिः—

१ । ० ध्वानादागतः ० k ।   २. ० मारुताना विनाशः समाव्यते ० ।k।

मात्रकग्रहण
प्रयोजनम्

एक्कंमि उ पाउग्गं, गुरुणो बितिओग्गहे य पडिकुट्ठं ।
गिण्हइ संघाडेगो, धुवलंभे सेस उभयंपि ॥१०५५॥

एकपात्रे गुरुप्रायोग्यं गृह्णाति, द्वितीयपात्रे 'पडिकुट्ठं'त्ति संसक्तभक्तादि गृह्णाति, अथवा 'पडिकुट्ठं' विरुद्धं यत्काञ्जिकादि तद् द्वितीयप्रतिग्रहके गृह्णाति एक एव संघाटकः, ध्रुवलम्भे सत्ययं विधिः, शेषा-अन्ये संघाटका आत्मार्थमुभयमपि भक्तं पानकं च गृह्णन्ति, एकः पानकमेकत्र पात्रे गृह्णाति, द्वितीयो भक्तम् । एवं सर्वेऽपि संघाटका अटन्तीति ॥१०५५॥ प्रायोग्यध्रुवलम्भाऽभावेऽयं विधिः—

प्रकारान्तरेण
मात्रकग्रहण-
प्रयोजनम्

असई लाभे पुण मत्तए य, रुव्वे गुरूण गेण्हंति ।
एसेव कमो णियमा, गिलाणसेहाइएसुंपि ॥१०५६॥

अलाभे प्रायोग्यस्य, सर्वे मात्रेषु गुरुयोग्यं गृह्णन्ति ॥१०५६॥

दुल्लभदव्वं व सिया, घयाइ तं मत्तएसु गेण्हंति ।
लद्धेवि उ पज्जत्ते, असंथरे सेसगट्ठाए ॥१०५७॥

तथा लब्धेऽपि भक्ते पर्याप्तेऽप्यात्मार्थं, तथापि यदि न संस्तरति न सरति ग्लानादीनां, ततोऽसंस्तरणे तावत्पर्यटति यावत्पर्याप्तं भक्तं ग्लानादीनां भवति ॥१०५७॥ अथवाऽनेन प्रकारेण मात्रकग्रहणं भवति—

संसत्तभत्तपाणेसु, वावि देसेसु[1] मत्तए गहणं ।
पुव्वं तु भत्तपाणं, सोहेउ छुहंति इयरेसु ॥१०५८॥

यत्र देशे स्वभावेनैव भक्तं पानं संसज्यते, तत्रादौ मात्रेण गृह्यते भक्तादि, पुनस्तत्पूर्वमेव [2]संशोध्येतरेषु क्षिप्यते ॥१०५८॥ चोलपट्टप्रमाणमाह—

दुगुणो चउग्गुणो वा, हत्था चउरंस चोलपट्टो उ ।
थेरजुवाणाणट्ठा, सण्हे थुल्लंमि य विभासा ॥१०५९॥

द्विगुणश्चतुर्गुणो वा कृतः सन् यथा हस्तप्रमाणश्चतुरस्रो भवति, तथा चोलपट्टकः कार्यः, स्थविराणां द्विहस्तो, यूनां चतुर्हस्तः, परमयं विशेषः—स्थविराणां श्लक्ष्णः क्रियते यूनां पुनः स्थूलः ॥१०५९॥

वेय(उ)व्विवाउडे वातिए हिए खद्धपजणणे चेव ।
तेसिं अणुग्गहत्था, लिंगुदयट्ठा य पट्टो उ ॥१०६०॥

१. देशेषु ।k। २ ·० शोधयित्वा प्रक्षिपन्तीतरेषु पतद्ग्रहेषु ० ।k।

औपग्रहिको पधिः।

यस्य साधोः प्रजननं विकृतं भवति, तत्प्रच्छादनार्थं, कश्चिद्वातिको भवति वातेन तत्प्रजननमुत्सूनं भवति, ह्रीकः—लज्जालुः कश्चिद्भवति, 'खद्धं'ति० बृहत्प्रमाणं स्वभावेनैव कस्यचित्प्रजननं भवति, ततश्चैतेषामनुग्रहार्थं, तथा लिङ्गोदयार्थं [1]च, स्त्रियं दृष्ट्वा लिङ्गस्योदयो भवति ॥१०६०॥ उक्त ओघोपधिः, अधुना औपग्रहिकोपधिमाह—

संथारुत्तरपट्टो, अड्ढाइज्जा य आयया हत्था ।
दोण्हंपि य वित्थारो, हत्थो चउरंगुलं चेव ॥१०६१॥

औपग्रहिकोप प्रयोजनम्।

संस्तारकोत्तरपट्टौ अर्धतृतीयहस्तौ दैर्ध्येण प्रमाणतो भवतः । द्वयोरप्यनयोर्विस्तारो हस्तश्चत्वार्यङ्गुलानि च भवति ।१०६१॥ किं प्रयोजनमेभिरित्याह—

पाणादिरेणुसारक्खणट्ठया होंति पट्टगा चउरो ।
छप्पइयरक्खणट्ठा, तत्थुवरिं खोमियं कुज्जा ॥१०६२॥

प्राणिरेणुसंरक्षणार्थं पट्टका गृह्यन्ते, प्राणिनः पृथिव्यादयः, रेणुश्च स्वपतः शरीरे लगति, तद्रक्षार्थं, ते च चत्वारो भवन्ति, द्वौ संस्तारकोत्तरपट्टावुक्तावेव, तृतीयो रजोहरणबाह्यनिषद्यापट्टकः पूर्वोक्त एव, चतुर्थः क्षौमिकोऽभ्यन्तर-

१. ० च, कदाचित् स्त्रियं दृष्ट्वा लिङ्गस्योदयो भवति, अथवा तस्या एव स्त्रिया लिङ्गं दृष्ट्वा लिङ्गस्योदयो भवति तं प्रत्यभिलापो भवतीत्यर्थः ० ।k।

निषद्यापट्टकः [१]षट्पदीसंरक्षणार्थं संस्तारोपरि क्षौममुत्तरट्टं कुर्यात्, येन देहकम्बलसंस्तारकघट्टने षट्पदा[द्यो]न विराध्यन्ते ॥१०६२॥ अभ्यन्तरक्षौमनिषद्याप्रमाणमाह—

रयहरणपट्टमेत्ता, अदसागा किंचि वा समतिरेगा ।
एकगुणा उ णिसेज्जा, हत्थपमाणा सपच्छागा ॥१०६३॥

रजोहरणपट्टः यत्र दशिका लग्नाः, तत्प्रमाणा दशिकारहिता क्षौमा निषद्या भवति, किञ्चिन्मात्रेणाधिका । 'एकगुण'त्ति एकैव सा निषद्या भवति, हस्तप्रमाणा च पृथुत्वेन भवति, 'सपच्छाग'त्ति सह बाह्यया निषद्यया हस्तप्रमाणया भवति, एतदुक्तं भवति—बाह्याऽपि निषद्या हस्तमात्रैव ॥१०६३॥

वासोवग्गहिओ पुण, दुगुणा अवही उ वासकप्पाई ।
आयासंजमहेउं, एकगुणा सेसओ होइ ॥१०६४॥

वर्षासु औपग्रहिकोपधिर्वर्षाकल्पादिर्द्विगुणो भवति, [२]आत्मरक्षार्थं, शेषोपधिरेकगुण एव ॥१०६४॥

जं पुण सपमाणाओ, ईसिं हीणाहियं व लंभेज्जा ।
उभयंपि अहाकडयं, न संधणा तस्स छेदो वा ॥१०६५॥

१. ० षट्पदका ० ।S।   २. णार्थं संयमरक्षणार्थं च ० ।k।

यत् पुनः कल्पादिरूपकरणं स्वप्रमाणादीषदूनमधिकं वा लभ्येत, तदुभयमपि—ओघौपग्रहिकौ, यदिवा तदेव हीनमधिकं वा लब्धं सत् यथाकृतं अल्पपरिकर्म यल्लभ्यते, तस्य सन्धना न क्रियते हीनस्य, नाऽपि छेदोऽधिकस्य क्रियते ॥१०६५॥

दंडए लट्ठिया चेव, चम्मए चम्मकोसए ।
चम्मच्छेदण पट्टेवि, चिलिमिली धारए गुरू ॥१०६६॥

अयमपर औपग्रहिको भवति साधोः, साधोर्दण्डो विदण्डश्च भवति, यष्टिश्च, 'चेव'ग्रहणाद्वियष्टिश्च, अयं सर्वेषामेव पृथक् पृथक्, अयं गुरोरेव—चर्मकृतिछवाडिया, चर्मकोशो—नखहरण्यादिस्थानं, चर्मच्छेदनकं—वर्ध्रपट्टिकाऽथवा पिप्पलकादिः, 'पट्टे'त्ति योगपट्टः, चिलिमिली ॥१०६६॥

जं चण्ण एवमादी, तवसंजमसाहगं जइजणस्स ।
ओहाइरेगगहियं, ओवग्गहियं वियाणाहि ॥१०६७॥

卐ओघोपधेरतिरिक्तं गृहीतमौपग्रहिकं विजानीहि ॥१०६७॥ यष्ट्यादिस्वरूपमाह—

लट्ठी आयपमाणा, विलट्ठि चउरंगुलेण परिहीणा ।
दंडो बाहुपमाणो, विदंडओ कक्खमेत्तो उ ॥१०६८॥

卐 यच्चान्यद्वस्तु, एवमादि, उपानहादि, तपःसंयमयोः साधकं, यतिजनस्येति द्रोणीयवृत्तिस्थोऽश अत्रोद्धृतः तात्पर्यावबोधाय ।स०।

[1]अन्या नालिका—आत्मप्रमाणाच्चतुरङ्गुलैरतिरिक्ता, तया जलं मीयते । यष्ट्यां जवनिका बध्यते, वियष्टिरुपाश्रयद्वारघट्टनी भवति, दण्डक ऋतुबद्धे भिक्षामटद्भिर्गृह्यते । विदण्डको लघुत्वाद्वर्षाकाले गृह्यते ॥१०६८॥ यष्टिलक्षणमाह—

एक्कपव्वं पसंसंति, दुपव्वा कलहकारिया ।
तिपव्वा लाभसंपण्णा, चउपव्वा मारणंतिया ॥१०६९॥ स्पष्टा

पंचपव्वा उ जा लट्ठी, पंथे कलहणिवारणी ।
छच्चपव्वा य आयंको, सत्तपव्वा अरोगिया ॥१०७०॥ स्पष्टा

चउरंगुलपइट्ठाणा, अट्ठंगुलसमूसिया ।
सत्तपव्वा उ जा लट्ठी, मत्तागयणिवारिणी ॥१०७१॥

चत्वार्यङ्गुलानि अधः प्रतिष्ठानं यस्याः सा, तथाऽष्टौ अङ्गुलानि पर्वोपरि उच्छ्रिता या सा ॥१०७१॥

अट्ठपव्वा असंपत्ती, णवपव्वा जसकारिया ।
दसपव्वा उ जा लट्ठी, तहियं सव्वसंपया ॥१०७२॥ स्पष्टा

१. ० यष्टिरात्ममाना. वियष्टिः चतुर्भिरङ्गुलै रहिता, दण्डको 'बाहुप्रमाणो' स्कन्धप्रमाणः विदण्डकः, कक्षाप्रमाणः ० ।k।

वंका कीडक्खइया, चित्तलया पोल्लडा य दड्ढा य ।
लट्ठी य उब्भसुक्का, वज्जेयव्वा पयत्तेणं ॥१०७३॥ स्पष्टा.

विसमेसु य पव्वेसुं, अणिप्फण्णेसु अच्छिसु ।
फुडिया फरुसवण्णा य, णिस्सारा चेव णिंदिया ॥१०७४॥

विषमेषु पर्वसु सत्सु यष्टिर्न [1]ग्राह्या, तथा अनिष्पन्नान्यक्षीणि–बीजप्रदेशस्थानानि यस्याः सा निन्दिता, स्फुटित[2]परुषवर्णा, निःसारा, निन्दिता ॥१०७४॥

तणूई पव्वमज्झेसु, थूला पोरेसु गंठिला ।
अथिरा असारजरढा, साणपाया य णिंदिया ॥१०७५॥

तन्वी पर्वमध्येषु, पोरेषु च स्थूला ग्रन्थियुक्ता इत्यर्थः । अस्थिरा–अदृढा, असारजरढा–अकालवृद्धा इत्यर्थः । अधो या श्वपादरूपा वर्तुला, सा निन्दिता ॥१०७५॥

१. ० ग्राह्या, एकं पर्वं लघु पुनर्बृहत् पुनर्लघु इत्येवं या यष्टिः ० ।k।
२. परुषवर्णा=रूक्षवर्णा, निःसारा=प्रधानगर्भरहिता० ।k।

घणवद्धमाणपव्वा, णिद्धा वण्णेण एगवण्णा य ।
घणमसिणवट्टपोरा, लट्ठि पसत्था जइजणस्स ॥१०७६॥

घनानि वर्द्धमानानि पर्वाणि यस्याः सा, स्निग्धा, वर्णेनैकवर्णा, घनानि मसृणानि वर्तुलानि पोराणि यस्याः सा ॥१०७६॥

दुट्ठपसु–साण–सावय–चिक्खल–विसमेसु उदगमज्झेसु (प्र. मग्गेसु) ।
लट्ठी सरीररक्खा, तवसंजमसाहिया भणिया ॥१०७७॥

'चिक्खल' सर्कदमः प्रदेशस्तद्विषमेषु तथोदकमध्येषु रक्षणार्थम् ॥१०७७॥ कथं तपःसंयमसाधिकेत्याह—

मोक्खट्ठा णाणाई, तणू तयट्ठा तयट्ठिया लट्ठी ।
दिट्ठो जहोवयारो, कारणतक्कारणेसु तहा ॥१०७८॥

मोक्षार्थं ज्ञानादीनीष्यन्ते, ज्ञानादेरर्थं तनुरिष्यते, तदर्था च यष्टिः । अत्र च कारणतत्कारणेष्वुपचारो दृष्टो, यथा 'घृतं वर्षति अन्तरिक्षमि'ति ॥१०७८॥ न केवलं ज्ञानादीनां यष्टिरुपकरणं, अन्यदपि यदुपकरोति तदेवोपकरणमेतदेवाह—

[1]जं—जुज्जइ उवकरणे (प्र.० यारे), उवगरणं तं सि होइ उवगरणं ।
अतिरेगं अहिगरणं, अजतो अजयं परिहरंतो ॥१०७९॥

[2]उपकारे ज्ञानादीनामुपयुज्यते तदेवोपकरणं, से तस्य साधोर्भवति, 'अज०' [3]अयत्नवतः । अयतं—अयतनया परिहरन् [4]प्रतिसेवमानः ॥१०७९॥

उग्गमउप्पायणासुद्धं,—एसणादोसवज्जियं ।
उवहिं धारए भिक्खू, पगासपडिलेहणं ॥१०८०॥

प्रकटा प्रतिलेखना यस्याः सा । एतदुक्तं भवति—यस्याः प्रकटमेव कल्पाद्युपधेः प्रत्युपेक्षणा क्रियते न तु महार्घमौल्याच्चौरभयादभ्यन्तरे या क्रियते सा, तादृशी न धारणीया ॥१०८०॥

उग्गमउप्पायणासुद्धं, एसणादोसवज्जियं ।
उवहिं धारए भिक्खू, जोगाणं साहणट्ठया ॥१०८१॥



---

१ जं जुज्जइ' इतिगाथाऽनन्तरं 'न उ' इति गाथा प्रत्यन्तरे वर्तते साऽघो मुद्रिता ।
(प्र.) न उ केवलमइरित्तं, उवगरणं परिमिअं पि जो अजओ । परिभुजइ उवगरणं, अहिगरणं तस्स वी होइ ॥सं०॥
२. ● यदुपकरणं पात्रादि उपकारे ० ।k। ३. अत्र द्रोणीयवृत्तौ प्रथमानिर्देशः ।सं०।
४. अयतनयोपकरणं प्रतिसेवमानस्याधिकरणं भवतीति भावः ।सं०।

योगाः संयमात्मकाः तत्साधनार्थम् ॥१०८१॥

उग्गमउप्पायणासुद्धं, एसणादोसवज्जियं ।
उवहिं धारए भिक्खू, अप्पदुट्ठो अमुच्छिओ ॥१०८२॥

अप्रद्विष्टोऽमूर्च्छितः सन् ॥१०८२॥

उग्गमउप्पायणासुद्धं, एसणादोसवज्जियं ।
उवहिं धारए भिक्खू, सदा अज्झत्थसोहिए ॥१०८३॥

अध्यात्मशुद्धया हेतुभूतया ॥१०८३॥

अज्झत्थविसोहीए, उवगरणं बाहिरं परिहरंतो ।
अप्परिग्गहीत्ति भणिओ, जिणेहिं तेलुक्कदंसीहिं ॥१०८४॥

अध्यात्मविशुद्धया बाह्यमुपकरणं 'परि'० प्रतिसेवमानोऽपरिग्रहो भणितो जिनैः ॥१०८४॥ अत्राह—बोटिकपक्षपाती, यद्युपकरणसहिता अपि निर्ग्रन्था एवं तर्हि गृहिणोऽपि निर्ग्रन्थाः, यतस्तेऽपि सोपकरणा वर्त्तन्ते ? उच्यते—

अज्झप्पविसोहीए, जीवणिकाएहिं संथडे लोए ।
देसियमहिंसगत्तं, जिणेहिं तेलोक्कदंसीहिं ॥१०८५॥

नन्विदमुक्तमेव यदुत—अध्यात्मविशुद्धया सत्यप्युपकरणे निर्ग्रन्थाः साधवः, यद्यध्यात्मविशुद्धिर्नेष्यते ततो जीवनिकायैः संस्तृते व्याप्ते लोके [1]नग्नस्त्वं न वधको भवसि ?, अतो जीवविनाशेऽप्यध्यात्मविशुद्धया दर्शितमहिंसकत्वं जिनैः ॥१०८५॥ इत्याह—

उच्चालियंमि पाए, ईरियासमियस्स संकमट्ठाए ।
वावज्जेज्ज कुलिंगी, मरिज्ज तं जोगमासज्जा ॥१०८६॥

ईर्यासमितस्य साधोः सङ्क्रमार्थमुत्पाटिते पादे व्यापद्येत संघट्टनपरितापैः, कुलिङ्गी—द्वीन्द्रियादिः परिताप्येत, म्रियते वाऽसौ व्यापादनयोगमासाद्य ॥१०८६॥

न य तस्स तण्णिमित्तो, बंधो सुहुमोवि देसिओ समए ।
अणवज्जो उ पओगेण, सव्वभावेण सो जम्हा ॥१०८७॥

न च तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि, सर्वभावेन मनोवाक्कायकर्मभिरनवद्योऽसौ, यस्मात्तस्मान्न सूक्ष्मोऽपि बन्धस्तस्य ॥१०८७॥

सत्युपकरणेऽपरिग्रहता ।

१ ० नग्नकश्चङ्क्रमन् वधको भवति, अतो ० ।k।

णाणी कम्मस्स खयट्ठ—मुट्ठिओऽणुट्ठितो य हिंसाए ।
जयइ असढं अहिंसत्थ—मुट्ठिओ अवहओ सो उ ॥१०८८॥

ज्ञानी सम्यग्ज्ञानयुक्तः, कर्मणः क्षयार्थमुत्थितः—उद्यतो हिंसायां च न [१]स्थितः । जयति—कर्मणः क्षये प्रयत्नं करोति, अहिंसार्थमुत्थितः, किन्तु सहसा कथमपि प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः, स एवंविधोऽवधक एव साधुः ॥१०८८॥

तस्स असंचेअयओ, संचेययतो य जाइं सत्ताइं ।
जोगं पप्प विणस्संति, णत्थि हिंसाफलं तस्स ॥१०८९॥

तस्यैवंप्रकारस्य ज्ञानिनः कर्मक्षयार्थमभ्युद्यतस्याऽसंचेतयतो—अजानानस्य, किं सत्त्वानि, कथं? प्रयत्नवताऽपि कथमपि न दृष्टः, प्राणी व्यापादितश्च, तथा संचेतयतो—जानानस्य कथम्? अस्त्यत्र प्राणी ज्ञातो दृष्टश्च न प्रयत्नं कुर्वतोऽपि रक्षितुं पारितः, ततस्तस्यैवंविधस्य यानि सत्त्वानि योगं—कायादि प्राप्य विनश्यन्ति, नास्ति तस्य हिंसाफलं साम्परायिकं—संसारजननं, यदि परमीर्याप्रत्ययं कर्म भवति, तदेकत्र समये बद्धमन्यत्र क्षपयति ॥१०८९॥

जो अ पमत्तो पुरिसो, तस्स य जोगं पडुच्च जे सत्ता ।
वावज्जंते णियमा, तेसिं सो हिंसओ होइ ॥१०९०॥

यश्च प्रमत्तस्तस्य सम्बन्धिनं योगं कायादि प्रतीत्य ये सत्त्वा व्यापाद्यन्ते तेषां नियमात् स हिंसको भवति ॥१०९०॥

जे वि न वावज्जंती, णियमा तेसिं पहिंसओ सो उ ।
सावज्जो उ पओगेण, सव्वभावेण सो जम्हा ॥१०९१॥

येऽपि न व्यापाद्यन्ते तेषामप्यसौ नियमाद्धिंसकः यतः सावद्यः सपापः प्रयोगेण कायादिव्यापारेणातोऽव्यापादयन्नपि व्यापादक एव ॥१०९१॥ यतश्चैवमतः—

आया चेव अहिंसा, आया हिंसत्ति णिच्छओ एसो ।
जो होइ अप्पमत्तो, अहिंसओ हिंसओ इयरो ॥१०९२॥

[1]स्पष्टा ॥१०९२॥ प्रकारान्तरेण तथाविधपरिणामविशेषात् हिंसाविशेषं दर्शयन्नाह—

जो य पओगं जुंजइ, हिंसत्थं जो य अण्णभावेणं ।
अमणो उ जो पउंजइ, इत्थ विसेसो महं वुत्तो ॥१०९३॥

१. ० आत्मैवाऽहिंसा हिंसा च. इत्ययं निश्चयः, योऽप्रमत्तः सोऽहिंसकः ० ।k।

यश्च जीवः प्रयोगं मनोवाक्कायकर्मभिर्हिंसार्थं युनक्ति, यश्चान्यभावेन, एतदुक्तं भवति—लक्ष्यविन्धनार्थं[1]बाणं क्षिप्तं यावताऽन्यस्य मृगादेर्लग्नं, तस्यानन्तरोक्तान्नरान् महान् विशेषः । 'अम०' अमनस्को—मनोरहितः संमूर्च्छज इत्यर्थः, स च प्रयोगं कायादिकं प्रयुङ्क्तेऽत्र विशेषो महानुक्तः ॥१०९३॥ एतदेवाह—

हिंसत्थं जुंजंतो, सुमहं दोसो अणंतरं इयरो ।
अमणो य अप्पदोसो, जोगणिमित्तं च विण्णेओ ॥१०९४॥

हिंसार्थं प्रयोगं युङ्क्ते [2]सुमहान् दोषो भवति, इतरश्चाऽन्यभावेन यो युङ्क्ते तस्याऽनन्तरो दोषोऽल्पतर इत्यर्थः । अमनस्कस्याल्प[3]तरतमदोषो भवति, अतो योगनिमित्तं [4]योगकारणः कर्मबन्धो विज्ञेयः ॥१०९४॥

रत्तो वा दुट्ठो वा, मूढो वा जं पउंजइ पओगं ।
हिंसा वि तत्थ जायइ, तम्हा सो हिंसओ होइ ॥१०९५॥

रक्तः—आहाराद्यर्थं सिंहादिः, द्विष्टः—सर्पादिः, मूढो वैदिकादिः, प्रयोगं कायादि प्रयुङ्क्ते, तत्र हिंसाऽपि भवति । अपिशब्दादनृतादि च, [5]तस्मात्स हिंसको भवति ॥१०९५॥

१ काण्डं ।k। २ स महान् ।k। ३ ० स्याल्पतमदोषो ० ।k। ४. योगकारणिकः ।k।
५ ० तस्मात्स हिंसको यो रक्तादिभावयुक्तः ॥१०९५॥ ० ।k।

हिंसकादि-
स्वरूपम् ।

णय हिंसामित्तेणं, सावज्जेणावि हिंसओ होइ ।
सुद्धस्स उ संपत्ती, अफला भणिया जिणवरेहिं ॥१०९६॥

न च हिंसामात्रेण हिंसको भवति, कुतः? [1]शुद्धस्य कर्मसंप्राप्तिरफला भणिता जिनैः ॥१०९६॥

जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स ।
सा होइ णिज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥१०९७॥

या विराधना यतमानस्य भवेत्सूत्रविधिसमग्रस्य गीतार्थस्य अध्यात्मविशोधि[2]युक्तस्य [सा भवति निर्जरफला] ॥१०९७॥

परमरहस्समिसीणं, समत्तगणिपिडगझरितसाराणं ।
परिणामियं पमाणं, णिच्छयमवलंबमाणाणं ॥१०९८॥

परमं रहस्यं तत्त्वं, ऋषीणां समग्रगणिपिटकस्य क्षरितः [3]पठितः सारो यैस्तेषां, पारिणामिकं प्रमाणं, परिणामेन भवं पारिणामिकं, निश्चयनयमवलम्ब[4]मानानाम् ॥१०९८॥ आह—यद्ययं निश्चयस्ततोऽयमेवावलम्ब्यतां

१. ० शुद्धस्य पुरुषस्य कर्म ० ।k। २. विशुद्धभावयुक्तगीतार्थत्वेन जायमाना विराधनाऽपि निर्जराहेतुरितिभावः ।स०। ३. पतित इति पाठो मुद्रितप्रतावस्ति ।स०। ४. ० मानाना, यतः शब्दादिनिश्चयनयाः पारिणामिकमिच्छन्तीति ० ।k।

किमन्येन ?, उच्यते—

णिच्छयमवलंबंता, णिच्छयओ णिच्छयं अयाणंता ।
णासंति चरणकरणं, बाहिरकरणालसा केइ ॥१०९९॥

निश्चयनयमवलम्बमाना निश्चयतः—परमार्थतो निश्चयमजानानाः सन्तश्चरणकरणं नाशयन्ति, बाह्य[1]करणाऽलसाः केचिदेवमङ्गीकुर्वन्ति, यदुत—परिणाम एव प्रधानः—न तु बाह्यक्रिया, एतच्च नाङ्गीकर्तव्यं, यतः परिणाम एव बाह्यक्रियारहितः शुद्धो न भवति, ततो निश्चयव्यवहारमतमुभयरूपमेवाङ्गीकार्यम् । उक्तमुपधिद्वारम् ॥१०९९॥ आयतनद्वारसम्बन्धमाह—

एकान्तनिश्चयाऽङ्गीकारे चरणादिनाशः ।

एवमिणं उवगरणं, धारेमाणो विहीसुपरिसुद्धं ।
हवति गुणाणायतणं, अविहि असुध्धे अणायतणं ॥११००॥

आयतनद्वारम् ।

एवमुक्तन्यायेनोपकरणं धारयन् विधिना गुणानामायतनं स्थानं भवति, अविधिना अशुद्धमुपकरणं धारयन्ननायतनं स एव साधुर्भवति ॥११००॥ अधुना आयतनस्य पर्यायशब्दानाह—

सावज्जमणायतणं, असोहिठाणं कुसीलसंसग्गी ।
एगट्ठा होंति पदा, एते विवरीय आययणा ॥११०१॥

१. ० बाह्यकरणाऽलसा—बाह्यं-वैयावृत्त्यादिकरणं ( तत्र अलसाः-प्रयत्नरहिताः ) ० ।k।

सावद्यमनायतनं अशोधिस्थानं कुशीलसंसर्गिः[र्गः], एतान्येकार्थिकानि, एतान्येव च विपरीतानि आयतने स्युः ॥११०१॥

लौकिक-लोकोत्तरानायतनानि ।

[1]वज्जेत्तु अणायतणं, आयतणगवेसणं सया कुज्जा ।
तं तु पुण अणाययणं, णायव्वं दव्वभावेणं ॥११०२॥

स्पष्टा ॥११०२॥ (द्रव्या[ना]यतनमाह—k)

दव्वे रुद्दाइघरा, अणायतणं भावओ दुविहमेव ।
लोइयलोगुत्तरियं, तहियं पुण लोइयं इणमो ॥११०३॥

द्रव्यविषयमनायतनं रुद्रादीनां गृहं, भावानायतनं द्विधा, आयतनं लौकिकं लोकोत्तरं च, लौकिकमिदम् ॥११०३॥

खरिया तिरिक्खजोणी, तालायर समण माहण सुसाणे ।
वग्गुरिय वाह गुम्मिय, हरिएस पुलिंद मच्छंधा ॥११०४॥

१. 'वज्जेत्तु'० इत्यादि गाथा ।k। सशकप्रतौ नास्ति ।स०।

[1]द्व्यक्षरिका यत्रास्ते तदनायतनं, तिर्यग्योनयः, तालाचराश्चारणाः, श्रमणा–शाक्यादयः, ब्राह्मणाः, श्मशानं, वागुरिकाः, व्याधाः, गुल्मिकाः–गुप्तिकाराः, हरिकेशाः, पुलिन्द्रा, मत्स्यबन्धाश्च, यत्र तदनायतननमिति ॥११०४॥

खणमवि न खमं गंतुं (प्र. काउं), अणायतणसेवणा सुविहियाणं ।
जंगंधं होइ वणं, तंगंधं मारुओ होइ ॥११०५॥

क्षणमपि न क्षमं योग्यं अनायतनं गन्तुं तथा आसेवना वा अनायतनस्य ॥११०५॥

जे अण्णे एवमादी, लोगंमि दुगुंछिया गरहिया य ।
समणाण व समणीण व, ण कप्पई तारिसे वासो ॥११०६॥

येऽन्ये एवमादयो जुगुप्सिता द्व्यक्षरिकादयोऽनायतनविशेषास्तत्र श्रमणानां श्रमणीनां वा न कल्पते तादृशो वासः । उक्तं लौकिकम् ॥११०६॥

अह लोउत्तरियं पुण, अणायतणं भावतो मुणेयव्व ।
जे संजमजोगाणं, करेंति हाणिं समत्थावि ॥११०७॥

लौकिक-लोकोत्तरानायतनानि ।

१. ० द्व्यक्षरिका–वेश्या ० ।k। 'द्व्यक्षरिका'पदेन दासीत्यर्थोऽनेकत्रस्थले दृश्यते ।स०।

ये संयमयोगानां हानिं कुर्वन्ति समर्था अपि, तल्लोकोत्तरानायतनं, तैश्च संसर्गिर्न कार्या [संसर्गो न कार्यः]
॥११०७॥ यतः—

अंबस्स य णिंबस्स य, दुण्हंपि समागयाइं मूलाइं ।
संसग्गीए विणट्ठो, अंबो णिंबत्तणं पत्तो ॥११०८॥

स्पष्टा ॥११०८॥ पर आह—

सुचिरंपि अच्छमाणो, णलथंबो उच्छुवाडमज्झंमि ।
कीस ण जायइ महुरो, जइ संसग्गी पमाणं ते ॥११०९॥

स्पष्टा ॥११०९॥ [1]पुनरपि पर आह—

सुचिरंपि अच्छमाणो, वेरुलिओ कायमणियओमीसे ।
ण उवेइ कायभावं, पाहण्णगुणेण णियएण ॥१११०॥

स्पष्टा ॥१११०॥ आहाऽऽचार्यः—

भावुग–अभावुगाणि य, लोए दुविहाइं हुंति दव्वाइं ।
वेरुलिओ तत्थ मणी, अभावुगो अण्णदव्वेणं ॥११११॥

१ पुनरप्याह परः ।k।

द्विधा [1]द्रव्याणि भावुकाभावुकभेदेन ॥१११९॥

ऊणगसयभागेणं, बिंबाइं परिणमंति तब्भावं ।

लवणागराइसु जहा, वज्जेह कुसीलसंसग्गीं ॥१११२॥

न्यूनशततमभागेन लवणादिव्याप्तेन विम्बानि–चर्मकाष्ठादीनि तानि लवणेन न्यूनशततमभागस्पृष्टेन तद्भावं लवणभावं परिणमन्ति । अतिलवणाकरादिषु यथा तस्माद्वर्जयेत्कुशीलसंसर्गिम् ॥१११२॥

जीवो अणाइणिहणो, तब्भावणभाविओ य संसारे ।

खिप्पं सो भाविज्जइ, मेलणदोसाणुभावेणं ॥१११३॥ सुगमा ।

जह णाम महुरसलिलं, सागरसलिलं कमेण संपत्तं ।

पावइ लोणियभावं, मेलणदोसाणुभावेणं ॥१११४॥ स्पष्टा ।

एवं खु सीलमंतो; अ(प.कु.)सीलमंतेहि मेलिओ संतो ।

पावइ गुणपरिहाणीं, मेलणदोसाणुभावेणं ॥१११५॥

कण्ठ्या ॥१११५॥ [2]यस्मादेवं तस्मात्—

१. ० द्रव्याणि आम्रादीनि भावुकानि ।k। २. यस्मादेवं ततः ।k।

णाणस्स दंसणस्स य, चरणस्स य जत्थ होइ उवघातो ।
वज्जेज्जऽवज्जभीरू, अणाययणवज्जओ खिप्पं ॥१११६॥

अनायतनवर्जकः क्षिप्रम् ॥१११६॥

जत्थ साहम्मिया बहवं, भिण्णचित्ता अणारिया ।
मूलगुणपडिसेवी, अणायतणं तं वियाणाहि ॥१११७॥

विशेषतोऽनायतनमाह-मूलगुणाः-प्राणातिपातादयस्तान् प्रतिसेविनः, ते यत्र निवसन्ति तदनायतनम् ॥१११७॥

जत्थ साहम्मिया बहवे, भिण्णचित्ता अणारिया ।
उत्तरगुणपडिसेवी, अणायतणं तं वियाणाहि ॥१११८॥

उत्तरगुणाः । पिण्डविशुद्ध्यादयस्तत्प्रतिसेविनो ये ॥१११८॥

जत्थ साहम्मिया बहवे, भिण्णचित्ता अणारिया ।
लिंगवेसपडिच्छण्णा, अणायतणं तं वियाणाहि ॥१११९॥

लिङ्गवेषमात्रेण प्रतिच्छन्ना बाह्यतोऽभ्यन्तरतश्च पुनर्मूलोत्तरगुणसेविनः ॥१११९॥ अधुनायतनमाह—

आययणंपि य दुविहं, दव्वे भावे य होइ णायव्वं ।
दव्वंमि जिणघराई, भावंमि य होइ तिविहं तु ॥११२०॥

भावे त्रिविधं ज्ञानदर्शनचारित्ररूपम् ॥११२०॥

द्रव्यभावायतनानि।

जत्थ साहम्मिया बहवे, सीलमंता बहुस्सुया ।
चरित्तायारसंपण्णा, आययणं तं वियाणाहि ॥११२१॥ सुगमा ।
सुंदरजणसंसग्गी, सीलदरिद्दंपि कुणइ सीलड्ढं ।
जह मेरुगिरीजायं (प्र. लग्गं), तणंपि कणगत्तणमुवेइ ॥११२२॥

स्पष्टोक्तमायतनम् ॥११२२॥ प्रतिसेवनाद्वारसंबन्धमाह—

एवं खलु आययणं, णिसेवमाणस्स हुज्ज साहुस्स ।
कंटगपहे व छलणा, रागद्दोसे समासज्ज ॥११२३॥

एवमुक्तेन न्यायेनाऽऽयतनं सेवमान[1]स्यापि कण्टकपथ इव छलना, किमासाद्य? रागद्वेषौ समासृत्य [समासाद्य—प्राप्य] ॥११२३॥



१. ० स्याऽपि साधोर्भवेच्छलना, किमासाद्य? अत आह-रागद्वेषौ समाश्रित्य ० ।०k।

पडिसेवणा य दुविहा, मूलगुणे चेव उत्तरगुणे य ।
मूलगुणे छट्ठाणा, उत्तरगुणि होइ तिगमाई ॥११२४॥

प्रतिसेवना द्विधा, मूलगुणे उत्तरगुणे च, मूलगुणे षट्स्थाना, उत्तरगुणा त्रिकादिका—उद्गमोत्पादनैषणारूपा, आदिग्रहणात्समितयो भावना तपो द्विविधमित्येवमादीनि गृह्यन्ते ॥११२४॥ मूलगुणानाह—

हिंसालियचोरिक्के, मेहुण्णपरिग्गहे य णिसिभत्ते ।
इय छट्ठाणा मूले, उग्गमदोसा य इयरंमि ॥११२५॥

उद्गमदोषादिका इतरोत्तरगुणप्रतिसेवना, आदिशब्दादुत्पादनैषणादयो गृह्यन्ते ॥११२५॥

पडिसेवणा मइलणा, भंगो य विराहणा य खलणा य ।
उवघाओ य असोही, सबलीकरणं च एगट्ठा ॥११२६॥

प्रतिसेवा, मलिनता, भङ्गः, विराधना, उपघातः, अशोधिः, शबलीकरणं चेत्येकार्थिकाः शब्दाः । उक्तं प्रतिसेवनाद्वारम् ॥११२६॥ आलोचनाद्वारसंबन्धमाह—

छट्ठाणा तिगठाणा, एगतरे दोसु वावि छलिएणं ।
कायव्वा उ विसोही, सुद्धा दुक्खक्खयट्ठाए ॥११२७॥

पट्स्थाने प्राणातिपातादिके, उद्गमादिके च त्रिके, अनयोरेकतरे द्वयोर्वा छलितेन—स्खलितेन वा साधुना विशुद्धिः कार्या, निःकलङ्का दुःखक्षयार्थम् ॥११२७॥ सा च विशुद्धिरालोचनापूर्विका भवति, इति कृत्वाऽऽलोचनामाह—

आलोयणा उ दुविहा, मूलगुणे चेव उत्तरगुणे य ।
एक्केका चउकण्णा, दुवग्ग सिद्धावसाणा य ॥११२८॥

द्विविधाऽप्येकैकाऽऽलोचना चतुःकर्णा भवति, द्वयोरपि साधुसाध्वीवर्गयोरेकैकस्य, प्रथमैक आचार्यः—द्वितीय आलोचकः साधुः, एवं साधुवर्गे, एका प्रवर्त्तिनी द्वितीयाऽऽलोचयित्री, एवं साध्वीवर्गे, [1]अथवा द्वयोश्च साधुसाध्वीवर्गयोर्मिलितयोरष्टकर्णा, कथम्?, आचार्य आत्मद्वितीयः प्रवर्तिनी चात्मद्वितीयाऽऽलोचयति । [2]पट्कर्णा वा कथं? वृद्धाचार्यस्यैकस्याऽपि साध्वीद्विकमालोचयति । आचार्यगीतार्थाद्यभावे सिद्धसाक्ष्याऽऽलोचना ग्राह्या ॥११२८॥

आलोयणा वियडणा; सोही सब्भावदायणा चेव ।
णिंदण गरिह विउट्टण, सल्लुद्धरणंति एगट्ठा ॥११२९॥

१ ० अथवैकैका मूलगुणे उत्तरगुणे च चतुष्कर्णा ० ।k।   २. ० सामान्यसाध्वी वा यद्यालोचयति षट्कर्णा ० ।k।

आलोचना विकटना शुद्धिः सद्भावदर्शना निन्दना गर्हणा विउट्टणा शल्योद्धरणं [1]चैकार्थिकानि ॥११२९॥
विशुद्धिद्वारमाह—

इत्तो सल्लुद्धरणं, वुच्छामी धीरपुरिसपण्णत्तं ।
[2]जं णाऊण सुविहिया, करेंति दुक्खक्खयं धीरा ॥११३०॥ स्पष्टा ।

दुविहा य होइ सोही, दव्वसोही य भावसोही य ।
दव्वंमि वत्थमाई, भावे मूलुत्तरगुणेसु ॥११३१॥

द्रव्येषु वस्त्रादिशुद्धिः । भावे तु मूलोत्तरगुणाऽऽलोचनया भावशुद्धिः ॥११३१॥

छत्तीसगुणसमण्णा–गएण तेणवि अवस्स कायव्वा ।
परसक्खिया विसोही, सुट्ठुवि ववहारकुसलेणं ॥११३२॥

[3]षट्त्रिंशद्गुणसमन्वितेन तेनाऽपि परसाक्षिकी शुद्धिः कार्या ॥११३२॥ अत्रोदाहरणम्—

१. ० कानि उक्तमालोचनाद्वारम् ॥११२९॥ ० ।k।    २ ० यच्छल्योद्धरणं ज्ञात्वा कुर्वन्ति दुःखक्षयं ० ॥११३०॥ ।k।
३ ० जातिकुले० षट्० ।k।

जह सुकुसलोऽवि विज्जो, अण्णस्स कहेइ अप्पणो वाही ।
सोऊण तस्स विज्जस्स, सोवि परिकम्ममारभइ ॥११३३॥ स्पष्टा ।

एवं जाणंतेणवि, पायच्छित्तविहिमप्पणो सम्मं ।
तहवि य पागडतरयं, आलोएतव्वयं होइ ॥११३४॥

तथाऽपि प्रकटतरमालोच्यमवश्यम् ॥११३४॥

गंतूण गुरुसकासं, काऊण य अंजलिं विणयमूलं ।
सव्वेण अत्तसोही, कायव्वा एस उवएसो ॥११३५॥ स्पष्टा ।

ण हु सुज्झई ससल्लो, जह भणियं सासणे धुव(य)रयाणं ।
उद्धरियसव्वसल्लो, सुज्झइ जीवो धुयकिलेसो ॥११३६॥

यथा भणितं धुतरजसां शासने [1]तथा शुद्ध्यति ॥११३६॥

सहसा अण्णाणेण व, भीएण व पिल्लिएण व परेण ।
वसणेणायंकेण व, मूढेण व रागदोसेहिं ॥११३७॥

[1]. ० शुद्ध्यति तथा शुद्धेरुद्धृतसर्वशल्यः ० ॥११३६॥ k।

सहसा अप्रतर्कितमेव, अज्ञानेन, भीतेन, परप्ररितेन, व्यसनेन, आतङ्केन, मूढेन, रागद्वैषेर्वा यत्किञ्चिदकार्यं कृतम् ॥११३७॥ ततः—

जं किंचि कयमकज्जं, ण हु तं लब्भा पुणो समायरिउं ।
तस्स पडिक्कमियव्वं, ण हु तं हियएण वोढव्वं ॥११३८॥

यत्किञ्चित् कृतमकार्यं नैव पुनः समाचरितुं 'लब्भ'त्ति उपलभ्यते [1]तथा तस्य प्रतिक्रान्तव्यं, न तु तदकार्यं हृदि [2]वोढव्यम् ॥११३८॥

[3]जह बालो जंपंतो, कज्जमकज्जं व उज्जुयं भणइ ।
तं तह आलोएज्जा, मायामयविप्पमुक्को उ ॥११३९॥ स्पष्टा ।

तस्स य पायच्छित्तं, जं मग्गविऊ गुरू उवइसंति ।
तं तह आयरियव्वं, अणवत्थपसंगभीएण ॥११४०॥

तस्य साधोर्यत्प्रायश्चित्तं गुरवो मार्गविदो ददति तत्तथैवाऽऽचरितव्यं साधुनाऽनवस्थाप्रसङ्ग[4]भीतेन ॥११४०॥

---

१. ० यथा तथा ० ।k।   २. सर्वमालोचयितव्यमित्यर्थः ।ख०।   ३. आलोचयितव्यं कथमित्याह ।k।
४. अनवस्था यद्यकार्यकारणात् प्रायश्चित्तं न दीयते–न क्रियते ततोऽन्योऽपि पापे निःशङ्कः स्यादित्यनवस्था ।k।

णवि तं सत्थं व विसं व, दुप्पउत्तो व कुणइ वेयालो ।
जंतं व दुप्पउत्तं, सप्पो व पमाइणो कुद्धो ॥११४१॥

न तत्करोति दुःखं शस्त्रं विषं दुःप्रयुक्तो–दुःसाधितो वेतालः, यन्त्रं वा दुःप्रयुक्तं, सर्पो क्रुद्धः प्रमादिनः पुरुषस्य ॥११४१॥

जं कुणइ भावसल्लं, अणुद्धियं उत्तमट्ठकालंमि ।
दुल्लभबोहीयत्तं, अणंतसंसारियत्तं च ॥११४२॥

अनशनकाले दुर्लभबोधित्वमनन्त[1]संसारित्वञ्च ॥११४२॥

तो उद्धरंति गारव–रहिता मूलं पुणब्भवलयाणं ।
मिच्छादंसणसल्लं, मायासल्लं णियाणं च ॥११४३॥

एवमालोच्य गारवरहिता [2]मुनय उत्पाटयन्ति मूलं पुनर्भवलतानाम् ॥११४३॥ ततः—

उद्धरियसव्वसल्लो, आलोइयणिंदिओ गुरुसगासे ।
होइ अतिरेगलहुओ, ओहरियभरोव्व भारवहो ॥११४४॥

१. ० त्वं चातः सर्वमालोचयितव्यम् ० ।k। २. ० मुनय उद्धरन्त्युत्पाटयन्ति ० ।k।

अतिरेकमत्यर्थं लघुर्भवति ॥११४४॥

उद्धरियसव्वसल्लो, भत्तपरिण्णाएँ धणियमाउत्तो ।
मरणाराहणजुत्तो, चंदगवेज्झं समाणेइ ॥११४५॥

भक्तप्रत्याख्याने, धनिकमत्यर्थं [1]युक्तः स एवंविधश्चन्द्रकवेधं समानयति करोतीत्यर्थः । चन्द्रकवेधं–राधावेधम् ॥११४५॥

आराहणाइ जुत्तो, सम्मं काऊण सुविहिओ कालं ।
उक्कोसं तिण्णि भवे, गंतूण लभेज्ज णिव्वाणं ॥११४६॥

[2]उत्कृष्टशब्दोऽत्रातिशयार्थे द्रष्टव्यो न तु भवानङ्गीकृत्य ॥११४६॥

एसा (प्र.एसोह) सामायारी, कहिया भे धीरपुरिसपण्णत्ता ।
संजमतवड्ढगाणं, णिग्गंथाणं महरिसीणं ॥११४७॥ स्पष्टा ।

१. ० युक्तः प्रयत्नपरः ० ।k।

२. ० उत्कृष्टतोऽतिशयेन सम्यगाराधनं कृत्वा त्रीन् भवान् गत्वा निर्वाणमवश्य प्राप्नोति उत्कृष्टशब्दः ० ।k।

एवं समायारिं, जुंजंता चरणकरणमाउत्ता ।
साहू खवंति कम्मं, अणेगभवसंचियमणंतं ॥११४८॥ स्पष्टा ।
एसा अणुग्गहत्था, फुडवियडविसुद्धवंजणाइण्णा ।
इक्कारसहिं सएहिं, एगुणवण्णेहिं सम्मत्ता ॥११४९॥ स्पष्टा ।

॥ श्रीश्रीद्रोणाचार्यकृतवृत्तेः श्रीमदोघनिर्युक्त्यवचूरिः श्रीज्ञानसागरसूरिकृता समाप्ता ॥छ॥

श्रीमत्तपागणनभोङ्गणभास्कराभ–श्रीदेवसुन्दरयुगोत्तमपादुकानां ।
शिष्यैर्जिनागमसुधाम्बुधिलीनचित्तैः, श्रीज्ञानसागरगुरूत्तमनामधेयैः ॥१॥ [वसन्ततिलका]

निधिवह्निमनु१४३९मितेऽब्दे–वचूर्णिरेषा कृतौघनिर्युक्तेः ।
स्वपरोपकृतिकृते त–द्विवृतेरुपरि स्फुटाजयतात् ॥२॥

श्रीशालिवाहनशाके १३७० प्रभवसंवत्सरे । फाल्गुन शुदि ११ गुरौ ताजनपुरे पुस्तकमलेखि ॥ शुभं भवतु श्रीसंघस्य ॥ श्रीरस्तु ॥

'k' सज्ञकप्रतिप्रान्तस्थिता प्रशस्ति :-

सवत् १५३० वर्षे माघसुदि १४ भौमे श्री डुंगरपुरनगरे राउलश्रीसोमदासविजयराज्ये धीरालिखितं । शुभं भवतु ॥छ॥ कल्याणं भूयात् ॥छ॥ * ॥छ॥

'ऽ' सज्ञकप्रतिप्रान्तस्थिता प्रशस्तिः-

इति श्रीद्रोणाचार्यवृत्त्यनुसारेणैदंयुगीनसुविहितशिरोऽलंकरणकोटीरकरणिभट्टारकप्रभुश्रीज्ञानसागरसूरिपादविरचिता श्रीओघनिर्युक्तियवचूर्णिः समाप्ता ॥छ॥

श्रीमत्तपोगणनभोङ्गण भास्कराभ-श्रीदेवसुन्दरगुरूत्तमपादुकानाम् ।
शिष्यैर्जिनागमसुधाम्बुधिलीनचित्तैः, श्रीज्ञानसागरगुरूत्तमनामधेयैः ॥१॥ (वसततिलका)
निधिवह्निमनु १४३९ मितेऽब्देऽ-वचूर्णिरेषा कृतौघनिर्युक्तेः ।
स्वप कृतिकृते तद्-विवृतेरुपरि स्फुटा जयतात् ॥२॥ (आर्या)

॥छ॥ ॥छ॥ ॥श्री॥ ॥ ग्रंथाग्रं ३३०० ॥ ॥ शुभं भवतु ॥ कल्याणमस्तु ॥छ॥ म० जीवालिखितमिदं ॥छ॥ ॥श्रीरस्तु॥ ॥छ॥

## । परिशिष्ट—१ ।

## ॥ ओघनिर्युक्तिउद्धार-गाथाः ॥

अरिहंते वंदित्ता चउदसपुव्वी तहेव दसपुव्वी । एक्कारसग—सुत्तत्थ—धारए सव्व—साहू य ॥१॥
[1]दुविहोवक्कमकालो सामायारी अहाउयं चेव । सामायारी तिविहा ओहे दसहा पयविभागे ॥२॥
वय—समणधम्म संजम वेयावच्चं च बंभगुत्तीओ । णाणाइतियं तव—कोहणिग्गहाइ य चरणमेयं ॥३॥ [४]
पिंडविसोही—समिई—भावण पडिमा इंदियणिरोहो । पडिलेहण-गुत्तीओ अभिग्गहा चेव करणं तु ॥४॥ [५]
उडुबध्धे रयहरणं वामावामासु पायलेहणिया । वड उंबर पिलखू तस्स अलंभंमि चिंचिणिया ॥५॥ [६०]
बारसअंगुल दीहा अंगुलमेगं तु होइ विच्छिण्णा । घण—मसिण—निव्वणा वि अ पुरिसे पुरिसे य पत्तेयं ॥६॥[६१]
उभओ नहसठाणा सचित्ताचित्तकारणा मसिणा । आउक्काआ दुविहो भोमो तह अंतलिक्खो अ ॥७॥ [६२]
जघद्धा संघट्टो णाभी लेवो परेण लेवुवरिं । एगो जले थलेगो निप्पगले तीरमुस्सग्गो ॥८॥ [६८]
दगतीरे ता चिट्ठे णिप्पगला जाव चोलपट्टो अ । सभए पलबमाणं गच्छइं काएणं अप्फुसंतो ॥९॥ [७०]

---

१ अवचूरिस्थेमा गाथा तथा आव० निर्युक्ति था ६६५ तमेयं गाथा० । सं ।

सागारं संवरणं ठाणतियं परिहरित्तु णाबाए । ठाई णमुवकारपरो तीरे जयणा इमा होई ॥१०॥ [७२]
तिविहो वणस्सई खलु परित्तणंतो थिराथिरिक्किक्को । संजोगा जह हिट्ठा अक्कंताई तहेव इहं ॥११॥ [७६]
तिविहा बेइंदिया खलु थिरसंघयणेयरा पुणो दुविहा । अक्कंताई य गमा जाव उ पंचिंदिया णेया ॥१२॥ [७७]
पुढविदए य पुढवीए उदए पुढवि तस वाल कंटा य । पुढवि वणस्सईकाए ते चेव उ पुढविए कमणं ॥१३॥ [७८]
पुढवि तसे तसरहिए निरंतर तसेसु पुढवीए चेव । आउ वणस्सई काए वणेग णियमा वणं उदए ॥१४॥ [७९]
तेऊ वाउविहूणा एवं सेसावि सव्वसंजोगा । णच्चा विराहणदुगं वज्जंतो जयसु उवउत्तो ॥१५॥ [८०]
सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खंतो । मुच्चई अइवायाओ पुणो विसोही ण याविरई ॥१६॥ [८१]
जे जत्तिआ य हेऊ भवस्स ते चेव तत्तिया मुक्खे । गणणाईया लोगा दुण्ह वि पुण्णा भवे तुल्ला ॥१७॥ [८७]
इरियावहियाईया जे चेव हवंति कम्मबंधाय । अजयाणं ते चेव उ जयाण णिव्वाणगमणाय ॥१८॥ [८८]
वज्जेमित्ति परिणओ संपत्तीए वि मुच्चए वेरा । अवहंतो ण वि ण मुच्चई किलिट्ठभावो अइवायस्स
(त्ति वा तस्स) ॥१९॥ [९४]
गामदुवारब्भासे अगडसमीवे महाणमज्झे वा । पुच्छिज्ज सयं पक्खं वियालणे तस्स परिकहणा ॥२०॥ [१००]
जह सागरंमि मीणा संखोहं सागरस्स असहंता । णिंति तओ सुहकामी णिग्गयमित्ता विणस्संति ॥२१॥ [१८२]
एवं गच्छसमुद्दे सारणवीईहिं चोईया संता । णिंति तओ सुहकामी मीणा व जहा विणस्संति ॥२२॥ [१८३]

चक्के थूभे पडिमा जम्मण णिक्खमण–णाण–णिव्वाणे । संखडि विहार आहार उवहि तह दंसणट्ठाए ॥२३॥ [१८५]

[एते] अकारणा संजयस्स असमत्त–तदुभयस्स भवे । ते चेव कारणा पुण गीअत्थविहारिणो भणिया ॥२४॥ [१८६]

गीअत्थो अ विहारो बीओ गीअत्थमीसिओ भणिओ । इत्तो तईयविहारो णाणुण्णाओ जिणवरेणं(हिं) ॥२५॥ [१८७]

संजम–आयविराहण णाणे तह दंसणे चरित्ते य । आणालोव जिणाणं कुव्वइ दीहं च संसारं ॥२६॥ [१८८]

मुत्तणिरोहे चक्खू वच्चणिरोहे अ जीवियं चयई । उड्ढणिरोहे कोट्ठं गेलण्णं वा भवइ तिसुवि ।२७॥ [२९२]

[१]जड्डो जं वा तं वा सुकुमारं महिसिओ महुरभामो । गोणो सुगंधिदव्वं इच्छइ एमेव साहू वि॥२८॥ [३७२]

अलसं घसिरं सुधिरं खमगं कोह–माण–माय–लोभिल्लं । कोऊहलपडिबध्धं वेयावच्चं ण कारिज्जा ॥२९॥ [३७४]

[२]संडास पमज्जित्ता पुणो वि भूमिं पमज्जिज्जा णिसीए । राओ अ पुव्वभणियं तुअट्टणं कप्पए ण दिवा॥३०॥ [४२०]

घेत्तुं थिरं अतुरियं तिभागबुद्धीइ चक्खुणा पेहे । तो बिइयं पप्फोडे तईयं च पुणो पमज्जिज्जा॥३१॥[४२६]

१ हस्ती । २ जानु ।

अणच्चावियं अवली(लि)यं अणाणुबंधि अ मोसलिं चेव । छप्पुरिमा णव खोडा पाणी पाणपमज्जणं ॥३२॥[४२७]
वत्थे अप्पाणंमि चउहा अणच्चावियं अवलियं च । अणुबंधि णिरंतरया तिरिउड्ढह (य) घट्टणा मुसली ॥३३॥ [४२८]

पसिढिलपलंबलोला एगामोसा अणेगरूवधुणणा । कुणई पमाणपमायं संकिय गणणोवगं कुज्जा ॥३४॥ [४३२]
पसिढिलमघणं अतिराईयं च विसमगहणं व कोणं वा । भूमीकरलोल्णया कड्ढणगहणेकआमोसा ॥३५॥ [१६४ भा०]

धुणणा तिण्ह परेणं बहूणि वा घेत्तु इक्कओ धुणइ । खोडण—पमज्जणासु य संकियगणणं करि पमाई ॥३६॥ [४३४]

अणूणाईरित्तपडिलेहा अविवच्चासा तहेव य । पढमं पयं पसत्थं सेसाणि य अप्पसत्थाणि ॥३७॥ [४३५]
पडिलेहणं कुणंतो (प्र. करेंतो) मिहो कहं कुणई जणवईकहं वा । देई व पच्चक्खाणं वाएई सयं पडिच्छई वा ॥३८॥ [४४०]

पुढवी आउक्काए तेऊ—वाऊ—वणस्सई—तसाणं । पडिलेहणापमत्तो छण्हंमि विराहओ होई ॥३९॥ [४४१]
पुढवी आउक्काए तेऊ—वाऊ—वणस्सइ—तसाणं । पडिलेहणमाउत्तो छण्हंऽपाराहओ होइ ॥४०॥ [४४४]
जोगो जोगो जिणसासणंमि दुक्खक्खया पउंजंते । अण्णोण्णमबाहाए असवत्तो होइ कायव्वो ॥४१॥ [४४५]

जोगे जोगे जिणसासणंमि दुक्खक्खया पउंजंते । एक्केक्कमि अणंता वट्टंता केवली जाया ॥४२॥ [४४६]
एवं पडिलेहंता अईयकाले अणंतगा सिद्धा । चोअगवयणं सययं पडिलेहा[हे]मो जओ सिद्धी ॥४३॥ [४४७]
सेसेसु अवट्टंतो पडिलेहंतो देममाराहेई । जई पुण सव्वाराहणमिच्छसि तो णं णिसामेह[प्र.हि] ॥४४॥ [४४८]
पंचिदिएहिं गुत्तो मणमाईतिविहकरणमाउत्तो । तवणियमसंजमंमि य जुत्तो आराहओ होइ ॥४५॥ [४४९]
णवगणिवेसे दूगओ उक्कंगो मूसएहिं उक्किण्णो । णिद्धमहि हरतणू वा ठाणं भेत्तूण पविसिज्जा ॥४६॥[४६८]
[1]कुत्थलगारिअघरगं घणसताणाइआ व लग्गिज्जा । उक्केरं सट्ठाणे हरतणू चिट्ठिज्ज जा सुक्को ॥४७॥ [४६९]
[2]पडिलेहणीयाकाले फिडिए कल्लाणदुगं तु पच्छित्तं । पायस्स पासु चिट्ठे सोओवत्त तल्लेसो ॥४८॥ [१७४भा०]
इयरेसु पोरिसितिगं संचिकुखावेत्तु तत्तियं छिंदे । सव्वं पा विगिंचेई वाराणं मट्टियं ताहे ॥४९॥ (४७०)
विंटिय बधण धरणे अगणी तेणे य दंडियक्खोभे । उउबद्ध धरण बंधण वासासु अबंधणा ठवणा ॥५०॥ (४७२)
अणावायमसंलोए परस्सऽणुववाइए । समेअणज्झुसिरे यावि अचिरकालकयंमि अ ॥५१॥ (४९३)

---

१ भ्रमरीगृहं ।

२ इयं गाथा अवचूरिमध्ये न दृश्यते किन्तु उद्धारकृता द्रोणीयवृत्तिसमलङ्कतौघनिर्युक्तितः समुध्धृताऽतोऽङ्कोपि द्रोणीयवृत्तेरिति ज्ञेयम् ॥सं०॥

वित्थिण्णे दूरमोगाढे णासण्णे बिलवज्जिए । तसपाणबीअरहिए उच्चाराईणि वोसिरे ॥५२॥ [४९४]

आया-पवयण-संजम तिविहमुवघाइयं( (उ)ग्घाइयं ) तु णायव्वं । आराम वच्च अगणी पिट्ठण असुई य अण्णत्थ ॥५३॥ [४९६]

जे जम्मि उउंमि कया पयावणाईहि थंडिला ते उ । हुंति अन्नंमि ( होंति परंमि ) चिरकया वासा वुच्छे य बारसगं ॥५४॥ [४९८]

हत्थायामं चउरस्स जहन्नं जोयणे बिछक्कि परं । चउरंगुलप्पमाणं जहण्णयं दूरमोगाढं ॥५५॥ [४९९]

दिसि-पवण-गाम-सूरिअ छायाइ(ए) पमज्जिऊण तिरक्खुत्तो । जस्सोग्गहोत्ति काऊणं वोसिरे आयमि (मे)-ज्जा वा ॥५६॥ [५०२]

उत्तर पुव्वा पुज्जा जम्माए णिसिअरा अहिवडंति । घाणाऽरिसा य पवणे सूरीअगामे अवण्णो अ (उ) ॥५७॥[५०३]

संसत्तग्गहणी पुण छायाए निग्गयाण वोसिरे(रई) । छायाऽसई उण्हंमिवि वोसिरिय मुहुत्तगं चिट्ठे ॥५८॥[५०४]

अव्वोच्छिन्ना तसा पाणा पडिलेहा ण सुज्झई । तम्हा हट्ठ समत्थ (पहट्ठ)स्स अवट्ठंभो न कप्पई ॥५९॥[५१०]

अतरंतस्स व पासा गाढं दुक्खंति तेणऽवट्ठंभे । संजयपिट्ठी थंभे सेल-छुहा कुड्ड विंटि (विट्टि) ए ॥६०॥[५१४]

पंथं तु वच्चमाणो जुगंतरं चक्खुणा व पडिलेहे । अइदूरचक्खुपाए सुहुम तिरिच्छिग्गया ण पेहे ॥६१॥[५१५]

अच्चासण्ण णिरोहे दुक्खं दट्ठुंपि पायसंहरणं । छक्कायविओरमणं सरीर तह भत्तपाणे अ ॥६२॥ [५१६]

उड्ढमुहो कहरत्तो अवयक्खंतो वियवखमाणो वा । बायरकाए वहए तसेयरे संजमे दोसा ॥६३॥ [५१५]
एयं पडिलेहणविहिं जुंजुंता चरणकरणमाउत्ता । साहू खवेंति कम्मं अणेगभवसंचियमणंतं ॥६४॥ [५२६]
खीर–दुम–हेट्ठ पंथे कट्ठोल्ला इंधणे य मीसो य । पोरिसि एग–दुग–तिगं बहुइंधणमज्झथोवे अ ॥६५॥[५३३]
आएसतिगं बुब्बुअ बिंदु तह चाउला ण सिज्झंति । मोत्तूण तिण्णि एए चाउलउदगं बहु पसण्णं॥६६॥[५३९]
उउबद्ध धुवण बाउस बंभविणासो अठाणठवणं च । संपाइमवाउवहो पलवण आतोपघातो य ॥६७॥ [५४२]
अइभार चुडण पणए सीयल पावरण जीरगेलण्णे । ओभावण कायवहो वासासु अधोवणे दोसा ॥६८॥ [५४३]
आयरिय–गिलाणाणं मईला मईला पुणो वि धोवंति । मा हु गुरुण अवण्णा लोगंमि अजीरणं इयरे ॥६९॥ [५४६]
अब्भिंतरपरिभोगं उवरिं पाउणई नातिदूरे य । तिण्णि य तिण्णि इक्कं णिसिं काउं परिक्खिज्जा ॥७०॥ [५४७]
केई इक्किक्क णिसिं संवासेउं तिहा परि (उ)च्छंति (पडिच्छेज्जा) । पाउणीय जइ ण लग्गति छप्पया ताहे धोवेज्जा ॥७१॥ [५४८]
अच्छोलपिट्टणासु अ ण धुवे धोवे पयावणं न करे । परिभोगमपरिभोगं छायाऽऽयव पेह कल्लाणं ॥७२॥ [५५१]
पढमचरमा सिसिरे गिम्हे अद्धं च (तु) तासि वज्जिज्जा । पायं ठवे सिणेहाति रक्खणट्ठा पवेसो वा ॥७३॥ [६१२]

संजमहेऊ लेवो न विभूसाए वयंति तित्थयरा । सई असई दिट्ठे सई—माहम्मे उवणओ उ ॥७४॥ [६१८]
आयरिए य गिलाणे पाहुणए दुल्लहे सहसलाभे । संसत्तभत्तपाणे मत्तगगहणं अणुण्णायं ॥७५॥ [६५८]
बाहाहि अंगुलीई व लट्ठाई व उज्जुओ ठिओ संतो । ण पुच्छिज्ज ण दाविज्जा पच्चावाया भवे दोसा ॥७६॥ [६७२]

छक्कायदयावंतो वि संजओ दुल्लहं कुणई बोहिं । आहारे णिहारे दुगंछिए पिंडगहणे अ ॥७७॥ [६७६]
जो जह व तह व लद्धं गिण्हई आहारमुवहिमाई य । समण(गण)गुणमुक्क जोगी संसारपवड्ढओ भणिओ ॥७८॥ [६८७]

तिविहोवघायमेअं परिहरमाणो गवेसए पिंडं । दुविहा गवेसणा खलु दव्वे भावे इमा दव्वे ॥७९॥ [६८४]
जियसत्तु देवि चित्तसह पविसणं कणगपिट्ठपासणया । डोहल दुब्बल पुच्छा कहणं आणा य पुरिसाणं ॥८०॥ [६८५]

सीवन्निसरिसमोदगकरणं सोवन्निरुक्खहेट्ठेसु । आगमण कुरंगाणं पसत्थ अपसत्थ उवमा उ ॥८१॥ [६८६]
विइयमेयं कुरंगाणं जया सीवन्नि सीदई । पुरावि वाया वायंति न उणं पुंजगपुंजगा ॥८२॥ [६८७]
हत्थिगहणंमि गिम्हे अरहट्टेहिं भरणं तु सरसीणं । अच्चुदएण णलवणा अभिरूढा गयकुलागमणं ॥८३॥ [६८८]
विइयमेयं गयकुलाणं जहा रोहंति णलवणा । अन्नया वि झरंति सरा न एवं बहुओदगा ॥८४॥ [६८९]

पायपमज्जण णिसीहिया (प्र. बाहिं णिसीहि) य, तिण्णि उ करे पवेसंमि। अंजलि ठाणविसोही दंडग उव–
हिस्स णिक्खेवो ॥८५॥ [७८२]

काउस्सग्गंमि ठिओ चिंते समुआणिए अईयारे । जा णिग्गमप्पवेसा तत्थ उ दोसे मणे कुज्जा ॥८६॥ [७९०]

इच्छिज्ज ण इच्छिज्ज व तहवि पयओ णिमंतए साहू। परिणामविसुद्धीए णिज्जरा होअगहिए वि ॥८७॥ [८१२]

भरहेरवयविदेहे पण्णरसवि कम्मभूमीया साहू । इक्कंमि हीलियंमि सव्वे ते हीलिया हुंति ॥८८॥ [८१३]

वेयावच्चं नियय करेह उत्तमगुणे धरं[रिं]ताणं। सव्वं किर पडिवाई वेयावच्चं अपडिवाई ॥८९॥ [८१९]

पडिभग्गस्स मयस्स व णासई चरणं सुयं अगुणणाए। ण हु वेयावच्चं च्चिय सुहोदयं णासए कम्मं
॥९०॥ [८२०]

लाभेण जोजयंतो जइणो लाभंतराईयं हणइ। कुणमाणो य समाहिं सव्वसमाहिं लहई साहू ॥९१॥ [८२१]

वेयावच्चे अब्भुट्ठियस्स सद्धाए काउकामस्स । लाभो चेव तवस्सिस्स होई अद्दीणमणसस्स ।९२॥ [८२४]

अह होई भावघासेसणा उ अप्पाणमप्पणा चेव। साहू भुंजिउकामो अणुसासई निज्जरट्ठाए ॥९३॥ [८३१]

बायालीसेसणसंकडंमि गहणंमि जीव! णहु छलियो। एण्हिं जह ण छलिज्जसि भुंजन्तो रागदोसेहिं ॥९४॥ [८३२]

जह अब्भंगणलेवो सगडक्ख–वणाण जुत्तिओ हुंति । इय संजमभरवहणट्ठ–याए [साहूण] आहारो॥९५॥ [८३३]

कडपयरच्छेएण भोत्तव्वं अहव सीहखइएणं । एगेण अणेगेहि वि वज्जित्ता धूममंगालं ॥९६॥ [८६७]

अमुरसुरं अचवचवं अद्दुअमविलंबिअं अपरिसाडिं। मणवयणकायगुत्तो, भुंजइ अह पक्खिवणसोहिं ॥९७॥[८६८]
अंततं मोक्खाभित्ति बेसए भुंजए य तह चेव। एस ससारणिविट्ठो ससारओ उट्ठिओ साहू ॥९८॥ [८७३]
हियाहारा मियाहारा अप्पाहारा अ जे नरा। ण ते विज्जा तिगिच्छंति अप्पाणं ते तिगिच्छगा ॥९९॥ [८८०]
वेयण वेयावच्चे इरियट्ठाए अ संजमट्ठाए। तह पाणवित्ती[वत्ति]याए छट्ठं पुण धम्मचिंताए ॥१००॥ [८८२]
आयंके उवसग्गे तितिक्खया बंभचेरगुत्तीसु[ए]। पाणिदया-तवहेउ सरीर-वुच्छेअणट्ठाए ॥१०१॥ [८८२]
विहिगहियं विहिभुत्त अइरेगे भत्तपाण भोत्तव्वं। विहिगहिये विहिभुत्ते इत्थ य चउरो भवे भंगा ॥१०२॥[८९९]
कागसीयालक्खइयं दविअरसं मव्वओ पगमट्ठं। एमो उ भवे अविही जहगहियं भोअणंमि [भुंजओ य] विही ॥१०३॥ [९०१]
जह गहियं तह णीय गहणविही भोअणे विहो इणमो। उक्कोसमणुक्कोसं समकयरसं तु भुंजिज्जा ॥१०४॥[९०४]
अहियासिया उ अंता आसण्णे मज्झि दूरि भावे य (प्र. तह य दूरे य)। तिण्णेव अणहिआसी अंता उच्चच्च बाहिरओ ॥१०५॥ [९५४]
एमेव य पासवणे बारस चउवीसियं च पाहित्ता। कालस्स वि तिण्णि भवे-अह सूरो अत्थमुवयाइ ॥१०६॥ [९५५]
कणगाभा हणंति कालं तिपंच सत्त [वि] गिम्हि सिसिरवासे। उक्काउ सरेहागा रेहारहिओ भवे कणगो तो) ॥१०७॥ [९२२]

वासासु अ तिण्णि दिसा हवंति पाभाइयंमि कालंमि। सेसेसु तीसु चउरो (उडुं) उउं मि चउरो चउदिसिं पि ॥१०८॥(९८४)

तिसु तिण्णि तारगाउओ उडुं(उउं)मि पाभाइए अदिट्ठेवि। वासासु अ तारगा चउरो छण्णे णिविट्ठो वि ॥१०९॥ (९९५)

पाओसिय अड्ढरत्ते उत्तरदिसि पुव्व पेहए कालं। वेरत्तियंमि भयणा पुव्वदिसा पच्छिमे काले ॥११०॥(९९७)

उक्कोस तिसामासे दुगाउअद्धाणमागओ साहू। चउरंगूलूणभरियं जं पज्जत्तं तु साहुस्स ॥१११॥(१०१२)

वट्टं चउरंसं होइ थिरं थावरं च वण्णं च। हुंडं वायाइद्धं भिण्णं च अधारणिज्जाइं ॥११२॥ (१०३५)

एगपव्वं पसंसंति दुपव्वा कलहकारिया। तिपव्वा लाभसंपण्णा चउपव्वा मारणंतिया ॥११३॥ (१०६९)

पंचपव्वा उ जा लट्ठी पंथे कलहणिवारणी। छपव्वा य वायंका सत्तपव्वाणि[अ]रोगया ॥११४॥(१०७०)

चउरंगुलपइट्ठाणा अंट्ठगुलसमूसिया। सत्तपव्वा य (उ) जा लट्ठी मत्तागयनिवारिणी ।११५॥ (१०७१)

अट्ठपव्वा असपंत्ती णवपव्वा जसकारिया। दसपव्वा य (उ) जा लट्ठी तहियं सव्वसंपया ॥११६॥ [१०७२]

वंका कीडक्खइया चित्तलया पोल्लडा (य) दड्ढा य। लट्ठी य उब्भसुक्का वज्जेयव्वा पयत्तेण ॥११७॥(१०७३)

घणवद्धमाणपव्वा णिद्धा वण्णेण एगवण्णो य। घण—मसिण—वट्ट—पोरा लट्ठि पसत्था जइजणस्स ॥११८॥ (१०७६)

जं जुज्जइ उवयारे (करणे) उवगरणं तं सि होइ उवगरणं । अइरेगं अहिगरणं अजओ(प्र. तो) अजयं परिहरंतो ॥११९॥ [१०७९]

उच्चालियंमि पाए इरियासमियस्स संकमट्ठाए । वावज्जिज्ज कुलिंगी मरिज्ज तं जोगमासज्जा ॥१२०॥ [१०८६]

ण य तस्स तण्णिमित्तो बंधो सुहुमो वि देसिओ समए । अणवज्जो उ पओगेणं सव्वभावेण सो जम्हा ॥१२१॥ [१०८७]

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ णिज्जरफला अज्झत्थविसोहिजुत्तस्स ॥१२२॥ [१०९७]

ण हु सुज्झई ससल्लो जह भणियं सासणे धुयरयाणं । उद्धरियसव्वसल्लो सुज्झई जीवो धुयकिलेसो ॥१२३॥ [७९८]

जह बालो जंपतो कज्जमकज्जं व उज्जुयं भणई । तं तह आलोइज्जा मायामयविप्पमुक्को य ॥१२४॥ [८०१]

णवि तं सत्थं व विसं व दुप्पउत्तो व्व कुणइ वेयालो । जंतं व दुप्पउत्तं सप्पो व पमाइणो कुद्धो ॥१२५॥ [८०३]

जं कुणइ भावसल्लं अणुद्धियं उत्तमट्ठकालंमि । दुल्लहबोहियत्तं अणंतसंसारियत्तं च ॥१२६॥ [८०४]

एवं सामायारीं जुंजंता चरणकरणमाउत्ता । साहू खवंति कम्मं अणेगभवसंचियमणतं ॥१२७ [८१०]

॥ इति श्री ओघनिर्युक्ति–उद्धारगाथाः समाप्ताः ॥ श्री शुभं भवतु ॥

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पत्रम् | पंक्तिः |
|---|---|---|---|
| समाचारी | सामाचारी | २ | ८ |
| पदार्थः | पदार्थः | ३ | १० |
| कतव्यो | कर्त व्यो | ३ | १२ |
| घरणा॰ | घराणा॰ | ३ | १३ |
| षड | षड् | ३ | १४ |
| व्यागान् | व्योगान् | ५ | ९ |
| एव | एवं | ६ | ४ |
| निर्युक्तेर्क्ति | निर्युक्तेर्युक्ति | ५ | ८ |
| भवतीति | भवतीति | ६ | ९ |
| अणुआगा | अणुभोगा | ८ | ७ |
| नियुक्तिं | निर्युक्तिं | ८ | ८ |
| बलक्तं ति | बलवत्तं ति | १० | १० |
| सादाहरणं | सोदाहरणम् | १२ | ३ |
| यादीना | यादिनाह | १३ | १३ |
| द्रव्याणा | द्वाराणा | १४ | १ |
| निरीक्षणाऽ– | निरीक्षणाऽऽ– | १५ | ३ |
| ॰बरादिभि.॰ | ॰वरादिभिः॰ | १५ | १३ |
| फिडिता | फिडितो | १६ | ९ |
| णिज्जवग्गम्स | णिज्जव.ास | २३ | ९ |
| सर्वे | सर्वे | २६ | ४ |
| गच्छता॰ | ॰गच्छतो॰ | २९ | १ |
| समए | समये | ३७ | ३ |

